॥ श्रीः ॥

# क्रोडपत्रसंग्रहस्य

## विज्ञापनम् ।

महर्षिणा गोतमेन प्रणीतस्य प्रमाणादिषोडशपदार्थनिरूपणपरस्य पञ्चाध्यायात्मकस्य न्यायशास्त्रस्य प्रमाणप्रकरणात्मकमेकांशमवलम्ब्य महर्षिकल्पेन श्रीगङ्गेशोपाध्यायेन प्रमाणाधीना सर्वेषां व्यवस्थितिरिति निश्चित्य प्रमाणतत्त्वावधारणार्थं तत्त्वचिन्तामणिग्रन्थो रचितः(१) ॥

अयं च श्लोकद्वादशसाहस्रात्मको निबन्धः श्रीगङ्गेशोपाध्यायात्मजश्रीवर्द्धमानोपाध्याय–पक्षधरमिश्रापरपर्यायजयदेवमिश्र–रुचिदत्त–प्रगल्भमिश्रादिभिर्मैथिलपण्डितैः श्रीवासुदेवसार्वभौम–रघुनाथतार्किकशिरोमणि–मथुरानाथ–भवानन्द–जगदीश–गदाधरभट्टाचार्यप्रभृतिभिर्वङ्गदेशीयैः पण्डितैश्च साक्षात् परम्परया वा व्याख्यातत्वात् भवानन्द–जगदीश–गदाधरभ-

---

(१) "अथ जगदेव दुःखपङ्कमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय तत्र प्रेक्षावत्प्रवृत्त्यर्थं प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादावसूत्रयत् । तत्रापि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते।" इति तत्त्वचिन्तामणौ प्रत्यक्षखण्डे वङ्गदेशस्थ–एशियाटिकसोसाइटीद्वारा मुद्रिते पुस्तके पृ० ११५ द्रष्टव्यम । अन्ते च 'अतः सिद्धं चत्वारि प्रमाणानीत्युपरम्यते ।" पूर्वोक्तमुद्रितपुस्तके ४ पार्ट २ वाल्यूम १० फासिक्युलस् ८६५ पृष्ठे द्रष्टव्यम ॥

ट्टाचार्यकृतानां व्याख्यानानामपि महादेव–कृष्णम्भट्टप्रभृतिभि-र्व्याख्यातत्वात् शङ्करतर्कवागीश–हरनारायण–चन्द्रनारायण-न्यायपञ्चानन–कालीशङ्करसिद्धान्तवागीश–दुलाल–राधामोहन-गोस्वामिप्रभृतिभिर्विरचितक्रोडपत्त्रोपबृंहितत्वात्(१) गोलोक-नाथ–पार्वतीकान्त–बलदेवादिभिर्विवेचितत्वाच्चेदानीं श्लोकाष्टा-विंशतिलक्षात्मिकां महतीं विस्तृतिमापन्नो नवीनन्यायशास्त्रत्वेन व्यवहृतिं गमितोऽनेकैर्भारतवर्षीयैः पाश्चात्यैश्च नवीनैर्विद्वाद्भिः(२)॥

तत्र वङ्गदेशस्थ–एशिआटिक्सोसाइटी–सभासमादेशेन सम्पूर्णस्तत्त्वचिन्तामणिग्रन्थो यथोपलब्धमथुरानाथीयव्या-ख्यानसहितो मुद्रितो बहूपयोगं विदधाति च्छात्त्राणामध्याप-कानां दर्शनानुरागिणामन्येषामपीति नैव तिरोहितमस्ति वि-दुषाम् । अन्यान्यपि जागदीश्याः कानिचित् कानिचिच्च गा-दाधर्याः प्रकरणानि द्वित्रप्रकरणानां क्रोडपत्त्राण्यपि याथातथ्येन मुद्रितानि । किन्तूक्तेषु महत्सु जागदीश्यादिषु निबन्धेषु प्रतिपा-दितानां विषयाणां परमतनिराकरणपूर्वकस्वमतव्यवस्थापने ऽधि-कतरव्युत्पत्तिसम्पादनमभिलषतां क्रोडपत्त्राणीतस्ततोऽन्विच्छतां छात्त्राणां सौलभ्यार्थं दुर्लभानि नवीनैः क्रोडीकृतानि क्रोडप-त्त्राणि महता यत्नेन सङ्कलय्य मुद्रणेनाहं प्रकाशयितुं प्रवृत्तोऽस्मि ॥

तत्र विवेचनाग्रन्थानामश्लिष्टपदाक्षरविन्यासादिनानतिप्रौ-ढशैलीलिखितत्वादतिविस्तृतत्वात् छात्त्रैश्च स्वावबोधाय सा-ङ्केतिकवर्णैर्लिखितत्वात् तन्मुद्रणमुपेक्ष्य तेभ्य उद्धृतया

---

(१) क्रोडपत्रशब्दार्थस्तु क्रोडे उपचारान्मध्ये स्थितं पत्रम् । ग्रन्थलेखने भ्रमात् त्रुटितस्य ग्रन्थस्य परिपूरणाय वा व्याख्याना-दिना न्यूनतापूरणाय ग्रन्थस्यपत्रयोर्मध्ये चिह्नविशेषेण लिखित्वा स्थापितं पत्रम ॥

(२) सर्वमिदं विस्तरेण न्यायवार्त्तिकभूमिकायां निरूपयिष्यामि ॥

सारांशरूपया टिप्पण्या सहितानां क्रोडपत्त्राणामेव मुद्रणं सुयुक्तमवधारितम् । क्रोडपत्रेष्वपि शङ्करतर्कवागीश–हरनारायण–चन्द्रनारायण–कालीशङ्कर–दुलाल–राधामोहनगोस्वामिरचितेषु कालीशङ्करकृतानि क्रोडपत्त्राणि सर्वोत्तमान्यनतिविस्तीर्णानि विद्वद्भिश्च प्रामाणिकत्वेनावधार्य पठनपाठनयोः प्रयुज्यमानानीति मया तान्येव मुद्रयितुमारब्धानि ॥

अत्र सद्व्यनुमितिप्रकरणमारभ्य बाधप्रकरणान्ताया अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्याश्च तथा व्युत्पत्तिवाद–शक्तिवाद–मुक्तिवाद–शब्दशक्तिप्रकाशिका–कुसुमाञ्जलिग्रन्थानामपि यथोपलब्धानि क्रोडपत्त्राणि क्रमशो मुद्रितानि भविष्यन्ति । तत्रैकैकप्रकरणस्य द्वित्राणि पञ्चषाणि वा आदर्शपुस्तकानि सम्पादितानि तेषां संवादेन मुद्रणं भवतीत्यादि सर्वमुपसंहारे मया विशिष्य वर्णनीयम् ॥

नैयायिकप्रवरः श्रीकालीशङ्करसिद्धान्तवागीशश्च वङ्गदेशस्थढाकामण्डलान्तर्गत(१)वज्रयोगिनीग्रामे पद्मानद्या उत्तरे तीरे जातः(२) १७९१ ईशवीयवर्षे वाराणस्यां राजकीयसंस्कृतविद्यामन्दिरे प्रथमन्यायाध्यापकपदमलङ्कुर्वतां श्रीचन्द्रनारायणन्यायपञ्चाननानां गृहे पाककर्ता आसीत् स च पाकं कुर्वन्नध्यापनं विनैव गुरोरध्यापनं शृण्वन्नेव कतिपयैर्वर्षैरनेकान न्यायग्रन्थान् समभ्यस्तवान् । अनन्तरं कदाचिदस्याभ्यासपाटवे मेधावित्वे च श्रीचन्द्रनारायणन्यायपञ्चाननैर्विज्ञाते ऽयमध्ययनरीत्याध्यापितः समादिष्टश्च न्यायाध्यापनार्थं स्वदेशगमनाय गु-

---

(१) इदानीन्तनराजकीयप्रबन्धेन फरीदपुर(जिला)महामण्डलान्तर्गतविक्रमपुर (परगना) मण्डलान्तर्गत इति बोध्यम् ॥

(२) इदानीं कालीशङ्करसिद्धान्तवागीशानां प्रपौत्रः श्रीमन्मथनाथशर्मा वाराणस्यां तिष्ठन् शास्त्रमभ्यसन् स्वयमेवेत्थं वदति ॥

रुभिरिति नत्वाध्यापयन् क्रोडपत्राणि रचयांचकार। अत एव सर्वाणि काल़ीशङ्करकृतानि क्रोडपत्राणि चन्द्रनारायणन्यायपञ्चाननकृतक्रोडपत्राणां विस्तृतिरूपाण्येवेति वदन्ति वृद्धाः॥

वाराणसीस्थराजकीयसंस्कृतपाठशालायां चन्द्रनारायणन्यायपञ्चाननानामनन्तरमस्य कनिष्ठः पुत्रः कृष्णचरणतर्कालङ्कारोऽध्यापयति स्म। तदनन्तरं तत्पदे स्थितः कालीप्रसादशिरोमणिरध्यापयत् यश्च १८८० ईसवीयवर्षे पञ्चत्वं गतः॥

अपि च तत्त्वचिन्तामणेरुपमानखण्डस्य व्याख्यानं कालीशङ्करेण १७१८ शाकाब्दे लिखितमस्मन्निकटे वर्तते॥

अन्यच्चास्य क्रोडपत्रसंग्रहस्य द्वितीयशोधको वङ्गदेशस्थफरीदपुरमण्डलान्तर्गतधानुकाग्रामवास्तव्यो न्यायाचार्योपाधिकश्रीवामाचरणभट्टाचार्यश्च चन्द्रनारायणन्यायपञ्चाननानां गोत्रजभ्रातॄणां श्रीभैरवचन्द्रभट्टाचार्याणां प्रपौत्र एवेति। सर्वमिदं कालीशङ्करसिद्धान्तवागीशानां पूर्वोक्तामेव स्थितिं द्रढयतीति॥

अस्य क्रोडपत्रसंग्रहस्य शोधनकार्ये महामहोपाध्यायश्रीकैलासचन्द्रभट्टाचार्यशिरोमणिभिरस्मद्गुरुवरैः सम्यगनुकम्पितोऽस्मि विषमस्थलव्याख्यानादिभिः॥

एतेषां क्रोडपत्राणां दुरधिगमत्वात् मुद्राप्रमादात् दृष्टिदोषाद्वा जाता अशुद्धयो विद्वद्भिः क्षन्तव्याः शुद्धिपत्रे समावेशाय मह्यं प्रदर्शनीयाश्च। अत्राल्पेऽपि विदुषामादरे निजपरिश्रमं सकलं सफलं मन्ये एतेन व्यापारेण च प्रसीदतु विद्यापतिः श्रीपतिरिति शम्॥

गवर्नमेण्टसंस्कृतकालेज पुस्तकालय
बनारस
३१ मार्च १९०५

विन्ध्येश्वरीप्रसादशर्मा द्विवेदी

ॐ नमः परमात्मने ।

---

अस्य क्रोडपत्रसंग्रहस्य प्रथमे खण्डे मुद्रितस्य विज्ञापनस्य

# समालोचनम् ।

---

पण्डितश्रीविन्ध्येश्वरीप्रसादद्विवेदिमहाशयेषु विज्ञप्तिः ।

भवत्प्रकाशितक्रोडपत्रसंग्रहपुस्तकविज्ञापने कालीशङ्करसिद्धान्तवागीशः पूज्यपादास्मत्पितामहचन्द्रनारायणन्यायपञ्चाननस्य गृहे पाककर्ता आसीदित्यादिकमुपलभ्य यथामति यदनुपलभ्यमानविगीताचारके प्रसिद्धवज्रयोगिनीपुषिलालवंशे जातस्य तत्रभवतः कालीशङ्करस्य शास्त्रलोकविगीता परगृहे पाचकवृत्तिरसम्भवेति नः प्रतिभाति । किञ्चेदानीं अनाचारस्रोतःप्रवाहेणोह्यमानेष्वपि सत्कुलाचारादिषु धनिनोऽपि वैदिकस्य गृहे नान्यश्रेणिस्थब्राह्मणपक्वान्नभोजनं प्रचलतीत्यनुरागपाशदृढबद्धसत्कुलाचारादिके तदानीं वैदिकस्य चन्द्रनारायणस्य गृहे राढश्रेणिस्थकालीशङ्करस्य पाचकभावोऽनुपपन्न एव । श्रूयते च वृद्धपरम्परया चन्द्रनारायस्य माता पत्नी च सान्तेवासिनस्तत्परिवारस्य सर्वं रन्धनादिकं निरपादयतामिति राढवैदिकयोर्मिथः पक्वान्नभोजनव्यवहारस्याप्रचलिततया स्वकीयान्नपाकादिकं कालीशङ्करः स्वयं निष्पादयति स्मेति तु नासम्भवोऽहं मन्ये ।

स्वा० चन्द्रनारायणन्यायपञ्चाननपौत्रः तर्करत्नोपाधिकः
श्रीरजनीकान्तदेवशर्म्मा

अनुमोदते स्वा० श्रीचन्द्रकिशोरशर्म्मा

श्रीयुक्तेषु पण्डितवरेषु तर्करत्नोपाधिकश्रीरजनीकान्तदेवशर्म-श्रीचन्द्रकिशोरशर्ममहाशयेषु प्रतिविज्ञापनम् ।

क्रोडपत्रसंग्रहविज्ञापनेऽस्मन्निरूपिते श्रीकालीशङ्करसिद्धान्तवागीशानां जीवनचरिते विप्रतिपन्नैर्भवद्भिरिदं प्रथमतो विचार्यम । विज्ञापने ३ पृष्ठे १४ पंक्तौ "नैयायिकप्रवरः श्रीकालीशङ्करसिद्धान्तवागीशश्च—वदन्ति वृद्धाः" इति मयोक्तम । अस्य विवरणं श्रीचन्द्रनारायणन्यायपञ्चाननानां कनिष्ठपुत्रस्य श्रीकृष्णचरणतर्कालङ्कारस्य जामाता श्रीकालीप्रसादशिरोमणिर्वाराणसीस्थराजकीयसंस्कृतपाठशालायां प्रधानन्यायाध्यापक आसीदिति सुविदितमस्ति विदुषाम् तेन चाहं बाल्ये ऽध्यापितः अध्यापनसमय एव तेनैव यदुक्तं तदेव श्रीकालीशङ्करसिद्धान्तवागीशचरितं प्रकाशितं मयेति ।

अत्र श्रीकालीप्रसादशिरोमणिमहाशयैर्यदुक्तं "स च पाकं कुर्वन्नध्ययनं विनैव गुरोरध्यापनं शृण्वन्नेव कतिपयैर्वर्षैरनेकान् न्यायग्रन्थान् समभ्यस्तवान्" इत्यपि लोकविरुद्धमेव । शिरोमणिमहाशयोऽन्यो वा कश्चित् सर्वं व्यलीकमेवावददित्यन्यदेतत् ।

मम मते तु पाककालोऽल्प एव भवति तस्मिन्नेव काले गुरोरध्यापनं शृण्वन्नेव एतावती लोकोत्तरमहती विद्यासम्पत्तिर्जाता यया अनेकग्रन्थक्रोडपत्ररचनादिना श्रीकालीशङ्करसिद्धान्तवागीशः पुराणेतिहासनिर्दिष्टमहर्षिकल्पो दिगन्तविश्रान्तकीर्तिरभूदिति । अन्यच्च यद्यपि ब्राह्मणेन पाचितस्यान्नस्य भक्षणे न धर्मशास्त्रविरोधः नापि गुरुभक्त्या जलाद्यानयने वा पाचकत्वस्वीकारे कस्यापि न्यूनता सम्भवति तथापि लौकिकाचारकुलाचारदेशाचारविरोधाद्वा असामञ्जस्ये तदा अध्ययनं विनैव सम्पूर्णस्य शास्त्रस्याभ्यासो जात इति कथं न विरुद्ध्यते । अतो महात्मनस्तपस्विन श्रीचन्द्रनारायणन्यायपञ्चाननस्य गृहे तण्डुलादिपाचकत्वे कदाचिदनुपपत्तिसम्भवे यमनियमादियुक्तस्य स्वदेशादागतस्य काशीवासारम्भसमये गुरोः श्रीचन्द्रनारायणन्यायपञ्चाननस्य गृहे श्रीकालीप्रसादशिरोमणिमहाशयवचनप्रामाण्यात् श्रीकालीशङ्करसिद्धान्तवागीशस्य फलादिपाचकत्वे न कापि हानिरिति ।

इदानीं श्रीचन्द्रनारायणन्यायपञ्चाननानां काशीवाससमयनिर्णयार्थं काशीस्थराजकीयसंस्कृतपाठशालीयकार्यालयस्थेतिहासपुस्तके समालोचिते १८१५ ईशवीयवर्षे पूर्वोक्तपाठशालायामुक्तमहाशया न्यायाध्यापने नियुक्ताः १८३० ईशवीयवर्षे च पञ्चत्वं गता इति निष्पन्नम्। यत्तु वृद्धवाक्यश्रवणाल्लिखितं मया " १७९१ ईशवीयवर्षे वाराणस्यामासीदिति " अयं च समयो तेषामध्यापनपूर्वककाशीवाससमय एव ते च प्रौढे वयस्येव काश्यां समायाताः अन्यथा १८१५ ईशवीयवर्षात् परमपि राजकीयाध्यापनवृत्तिं पञ्चदश वर्षाणि निर्वाह्य स्वपुत्रस्याप्यध्यापनकार्यक्षमतां सम्पाद्य १८३० ईशवीयवर्षे कथं पञ्चत्वं गच्छेयुरिति। तेषु पञ्चत्वं गतेषु तत्कनिष्ठः पुत्रः श्रीकृष्णचरणतर्कालङ्कारोऽचिरेणैव कालेन तत्पदेऽध्यापने नियुक्तो राजकीयायां वाराणसीस्थायां संस्कृतपाठशालायाम्। एतदव्यवहितोत्तरकालमस्य जामाता श्रीकालीप्रसादशिरोमणिमहाशयस्तत्पदे नियुक्तोऽनेन वृद्धेन बाल्येऽहमध्यापित इति शिवम्॥

गवर्नमेंटसंस्कृतकालेजपुस्तकालय
बनारस
१६ अक्तूबर १९११ ईशवी

विन्ध्येश्वरीप्रसादद्विवेदी

ॐ नमः परमात्मने ।

# क्रोडपत्रसंग्रहः ।

तत्र

## अनुमानखण्डजागदीश्याः

कालीशङ्करविरचितानि क्रोडपत्राणि ।

नमाम्यान्वीक्षिकीं विद्यामक्षपादमहर्षये ।
जगद्दुःखार्णवे मग्नमुद्धर्तुं यः प्रणीतवान् ॥

### सङ्गत्यनुमितिप्रकरणम् ।

यद्यपि परमात्मने नम इत्यसङ्गतं सुखादिसमवायिकारणतावच्छेदकतया सिद्धस्यात्मत्वस्य परमेश्वरवृत्तित्वे मानाभावात् । तथापि आत्मपदं कूपावदर्थकमिति जगदीशः । अत्रेदं बोध्यम् । गुणत्वं न जातिः लौकिकप्रत्यक्षविषयमात्रवृत्तित्वाभावादिति गुणग्रन्थः । आत्मत्वे व्यभिचारः लौकिकप्रत्यक्षाविषये परमात्मनि आत्मत्वस्य वृत्तेस्तादृशहेतोर्व्यभिचारवारणाय हेतोश्चक्षुर्ग्राह्यत्वे सतीति विशेषणं दत्तं दीधितिकृता । तादृशग्रन्थो विरुद्धः परमेश्वरस्यात्मत्वाभावात् व्यभिचाराप्रसक्तेः । अत्र केचित् एतदस्वरसेनैव गुणग्रन्थे आत्मत्वादौ व्यभिचारो दर्शितः तत्र आदिपदग्राह्यमनस्त्वस्य लाभादिति वदन्ति । परं तु कूपावदर्थकमित्यनेन अस्वरसो जगदीशेन कथितः ॥ १ ॥

अथ सकलमेव प्रत्यक्षफलमुपजीवत्यदृष्टजननीं समयमतकर्तव्यत्वादिपरिच्छेदिकामनुमितिमिति दीधितिग्रन्थो न सङ्गच्छते यत्र प्रत्येकं मानसात्मकमेव शक्तिघटकपदार्थज्ञानं तन्मूलकमदृष्टं मन्यते तत्रानुमानापेक्षाभावात् इत्यर्थिका जागदीशी । इयन्तु न सङ्गच्छते ज-

न्यमात्रं प्रति अदृष्टस्य हेतुत्वमिति मानसात्मकशक्तिज्ञानजनकानुमानस्य परम्परया अपेक्षायाः सत्त्वात् अन्यथा उत्तरग्रन्थे अन्ततोऽदृष्टजनकानुमानमेवापेक्षते निखिलमेवोपमानमिति दीधितिग्रन्थेन विरोधापत्तेरिति चेत् । न । एतदस्वरसेनैव किञ्चेत्यग्रयुक्तत्वात् किं वा अन्ततो ऽदृष्टजनकेत्यादिग्रन्थे ऽपि दोषोऽस्त्येवेति ॥ २ ॥

यत् प्रमाणं यत्प्रमाणोपजीवकं तत् तदनन्तरनिरूप्यमिति नियमः । अत्र चक्षुरादावनुमानोपजीवके ऽनुमानानन्तरमनिरूपिते व्यभिचारः इत्यदृष्टाद्वारकमुपजीवकत्वमेव अनन्तरनिरूप्यत्वव्याप्यमिति दीधितिकृता उक्तम् । अत्र चक्षुर्घर्षणादिजन्यचरमचक्षुषि अदृष्टाद्वारकानुमानोपजीवके व्यभिचारः तत्र जन्यत्वरूपोपजीवकत्वनिवेशे ऽदृष्टाद्वारकत्ववैयर्थ्यमित्युक्तं जगदीशेन । अत्र केचित् वदन्ति अदृष्टाद्वारकोपजीवकत्वं स्वजनकादृष्टजनकानिरूपितोपजीवकत्वम् । एवं च उपादानप्रत्यक्षविधया ईश्वरज्ञानस्य व्याप्तिज्ञानात्मकानुमानस्योपजीवके चक्षुषि अनुमानानन्तरमनिरूपिते व्यभिचारवारणाय अदृष्टाद्वारकत्वसार्थक्यम् । ईश्वरज्ञानस्य चक्षुर्जनकादृष्टजनकतया तन्निरूपितजन्यतायाश्चक्षुषि सत्त्वादिति । अत्र जगदीशस्याशयः एवं सति अनुमाने ऽपि न प्रत्यक्षस्यादृष्टाद्वारकोपजीवकत्वसम्भवः चक्षुरादेरपि स्वजनकादृष्टजनकत्वात् जन्यमात्रं प्रति कालविधया अदृष्टस्य हेतुत्वात् । न च मनोरूपप्रत्यक्षप्रमाणस्य नित्यत्वेन कालत्वाभावात् नादृष्टं प्रति हेतुतेति तादृशप्रत्यक्षनिरूपितैकजन्यताया एवानुमाने सम्भव इति वाच्यम् । मनसो जन्यत्वावच्छिन्नं प्रति द्रव्यत्वेन(१) हेतुत्वात् एवं च अदृष्टनिष्ठसाधारणजन्यतावारणाय जन्यत्वानवच्छिन्नत्वं देयम् । तथा च कथमीश्वरज्ञानमादाय अदृष्टाद्वारकत्वसार्थक्यमिति जन्यत्वावच्छिन्नकार्यतानिरूपितकारणतावारणाय जन्यत्वानवच्छिन्नत्वं प्रक्षिप्यादृष्टाद्वारकत्वसार्थक्यं क्रियत इति चेत् । गौरवमेवेति ॥ ३ ॥

आनन्तर्येति । यदभिधानानन्तरं यदभिधानप्रयोजिका या जिज्ञासा तज्जनकीभूतज्ञानविषयः तस्य सङ्गतिरित्यर्थः । जिज्ञासाजनकज्ञानविषयत्वमात्रस्य घटादावतिप्रसक्तत्वेन प्रयोजकान्तं विशेषणमिति जगदीशः । अथ घटादौ सङ्गतित्वमिष्टमेव अन्यथा कुत्रचिदपि सङ्गतित्वानुपपत्तेः सङ्गतित्वे सति उपोद्घातादिपञ्चक-

(१) समवायेन जन्यत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यं कारणमित्याशयः ।

भिन्नस्य प्रसङ्गरूपत्वादिति चेत् । न । घटादौ प्रत्यक्षादिनिरूपितसङ्गतित्ववारकत्वात् प्रयोजकान्तोपादानस्य । अथ तथापि प्रत्यक्षनिरूपणानन्तरं कस्यचित् घटवत् किमिति जिज्ञासया घटवन्निरूपितं तादृशनिरूपणप्रयोजकजिज्ञासामादाय घटादौ प्रत्यक्षनिरूपितसङ्गतित्वापत्तिः प्रयोजकान्तमुपादायापि न शक्यते वारयितुमित्यादिकं भट्टाचार्यटीप्पण्यामालोकनीयम् । जागदीश्यास्तु प्रयोजकान्तव्यावृत्तिः प्रत्यक्षकार्याभिधाने ऽतिव्याप्तिवारणम् । तत्र वक्ष्यमाणयद्धर्मविशिष्टविषयकज्ञानधर्मिताकेत्यादिनिष्कृष्टकल्पेनैव वारणसम्भवात् विफलमेवेति चेत् । न । वक्ष्यमाणनिष्कृष्टार्थघटकीभूतजिज्ञासालाभायैव तदुपादानस्य सफलत्वात् । अथ तथापि जिज्ञासापदवैयर्थ्यमिति चेत् । न । जिज्ञासापदसार्थक्यस्याग्रे वक्ष्यमाणत्वात् ॥ ४ ॥

ननु जिज्ञासाप्रयोजकत्वमुपेक्ष्य तज्जनकत्वानुसरणं सुखादावतिव्याप्तिवारणार्थम् तथापि फलेच्छामादाय सुखादावतिव्याप्तिवारणाय ज्ञानपदमित्यर्थकजागदीशी । अथात्र वक्ष्यमाणार्थपदार्थत्वाभावेन अतिव्याप्तिवारणसम्भवात् प्रकृतस्थले प्रत्यक्षज्ञानजन्यानुमानविशेष्यकसुखप्रकारकयथार्थस्मृतिप्रकारतापन्नत्वरूपार्थपदार्थत्वाभावात् ज्ञानपदं व्यर्थम् । अत एव पूर्वोक्तजिज्ञासाप्रयोजकत्वमुपेक्ष्य जनकत्वविशेषणमपि व्यर्थमिति चेत् । न । प्रत्यक्षजन्यानुमानविशेष्यकयथार्थस्मृतिजातीयसामानाधिकरण्यकालिकसम्बन्धावच्छिन्नप्रकारतापन्नत्वसत्त्वेन तयोः तद्वारकत्वेन सार्थक्यात् न च प्रत्यक्षज्ञानस्य सुखप्रकारकस्मृतिजनकत्वाभावात् तथापि तयोर्वैयर्थ्यमिति वाच्यम् । सम्बन्धिज्ञानविधया तस्यापि जनकत्वात् अन्यथा अग्रे प्रदर्शनीयदण्डकार्यत्वं चक्रनिरूपिता सङ्गतिरित्यप्यसङ्गता स्यात् । अत एव तादृशविषयो यो धर्मः तन्निष्ठः तस्य सङ्गतिरित्यर्थस्यावश्यकत्वेन तदुपपत्तौ ज्ञानपदं जनकत्वविशेषणं च व्यर्थं सुखादेरनुमाननिष्ठत्वाभावादिति परास्तम् । सामानाधिकरण्यसम्बन्धेन कालिकेन वा तन्निष्ठत्वात् । न च तत्रेति व्यर्थमिति वाच्यम् प्रत्यक्षकार्यत्वे घटादिनिष्ठसङ्गतित्ववारणाय तन्निवेशात् । न च तस्येति व्यर्थम् प्रत्यक्षकार्यत्वस्य घटस्य सङ्गतित्ववारकत्वात् । न च यथार्थपदं व्यर्थम् गगणादौ दण्डकार्यत्वस्य सङ्गतित्वापत्तिवारकत्वात् । न चेष्टापत्तिः अनुभवविरोधात् ॥ ५ ॥

अथ तज्ज्ञानजन्ये तज्ज्ञाननिष्ठजनकतानिरूपितजन्यत्वाश्रये इत्यर्थं परित्यज्य ज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यत्वाश्रये इत्यर्थो विवक्षणीयः । तथा च यथार्थपदं पूर्वोक्तं ज्ञानपदं च व्यर्थं सम्बन्धिज्ञानविधया जनकत्वेऽपि ताद्रूप्येण जन्यत्वासम्भवादिति चेत् । न । प्रत्यक्षकार्यत्वादौ सङ्गतित्वाभावात् प्रत्यक्षज्ञानत्वेन तादृशस्मृतिं प्रति हेतुत्वासम्भवात् कथञ्चित् सम्भवेऽपि यथा सन्निवेशे वैयर्थ्यासम्भवाच्च । अथ उद्बोधकस्य स्मृतिं प्रति केन रूपेण हेतुता । अत्र केचित् तत्तत्पदार्थविषयकसम्बन्धिज्ञानस्य तत्तत्पदार्थविषयकसम्बन्धिज्ञानत्वेन तत्तत्पदार्थविषयकस्मृतिं प्रति अनुगतरूपेण हेतुता इति वदन्ति । तदसमीचीनतया प्रतिभाति तत्तत्पदार्थसम्बन्धाविषयकान्यपदार्थसम्बन्धविषयकज्ञानस्यापि तत्तत्पदार्थस्मारकत्वात् । परे तु तत्तत्पदार्थसम्बन्धविषयकस्यान्यपदार्थविषयकस्यापि ज्ञानस्य अनियतोद्बोधकत्वात् तत्राननुगततत्तद्व्यक्तित्वादिना हेतुत्वं कल्पनीयम् । तदसत् तत्तत्पदार्थसम्बन्धिज्ञानसत्त्वेऽसत्यां विरोधिसामग्र्यां ज्ञानसामान्यसामग्रीसत्त्वे नियमतस्तत्तत्पदार्थस्मरणोपगमात् तादृशज्ञानस्यानुगतरूपेण हेतुता कल्प्यते लाघवात् न तु तत्तद्व्यक्तित्वेन अनन्तकार्यकारणभावप्रसङ्गात् न च हेतुताद्वयकल्पने व्यभिचारभिया सर्वत्र तत्तद्व्यक्तित्वेन हेतुत्वं कल्पनीयमिति वाच्यम् । अनन्तकार्यकारणभावकल्पनापेक्षया कार्यतावच्छेदककोटावव्यवहितोत्तरत्वसम्बन्धेन कारणवैशिष्ट्यं निवेश्यानुगतरूपेण तादृशसम्बन्धिज्ञानानामेव कारणताकल्पनात् । एवं यादृशधर्मप्रकारकज्ञानसत्त्वेऽसत्यां विरोधिसामग्र्यां यस्य पुंसो नियमतो यादृशपदार्थस्मरणं तत्पुरुषीयतादृशपदार्थस्मरणे तादृशधर्मप्रकारकज्ञानस्यानुगतरूपेण हेतुता कल्प्यते नतु तत्तद्व्यक्तित्वेन गौरवादिति दिक् ॥ ६ ॥

अथैकज्ञानविषयतासम्बन्धेन यथार्थस्मृतिप्रकारतापन्नत्वमादाय तद्दोषतादवस्थ्यमिति वाच्यम् । तस्य सम्बन्धत्वे मानाभावात् । अत एव गगनादिरित्युक्तम् कालिकसम्बन्धेन जन्यादावापत्त्यसम्भवात् । न च कालिकसम्बन्धेन प्रत्यक्षकार्यत्वं अनुमितिनिष्ठा सङ्गतिः स्यादिति वाच्यम् । तादृशस्मृतिप्रकारतावच्छेदकसम्बन्धेन तस्य तत्र सङ्गतिरित्यस्य विवक्षितत्वात् । यत्र कालिकसम्बन्धः प्रकारतावच्छेदकः तदा तस्य तादृशसम्बन्धेन सङ्गतित्वमिष्टमेवेति ध्येयम् ॥ ७ ॥

अथैवं सति यथार्थपदं व्यर्थम् तादृशप्रकारतावच्छेदकसम्बन्धेन गमननिष्ठत्वाभावादिति चेत् । न । प्रकारतावच्छेदकसम्बन्धेन तस्य तत्र सङ्गतिरित्यर्थलाभाय यथार्थपदोपादानात् ॥ ८ ॥

यद्यपीत्यादिकल्पे ज्ञानत्वादावतिव्याप्तिवारणार्थं यद्धर्मविशिष्टविषयकज्ञानधर्मिकेष्टसाधनताज्ञानत्वेन जिज्ञासायां जनकत्वमित्यादिलिखितमेवं यत्र को घटः किं च द्रव्यमिति ग्रन्थोऽवतारितः तत्र बहवः पूर्वपक्षयन्ति तथाहि यद्यपीत्यादिशङ्काया असङ्गतिः यथार्थत्वाभावेनातिव्याप्त्यभावसम्भवात् । यदि च प्रत्यक्षज्ञानजन्यानुमानविशेष्यकयथार्थस्मृतिनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नप्रकारतामादाय यथार्थत्वसम्भवः तदा सङ्गतित्वमिष्टमेवेति । अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मृतिविषयत्वे सति उपोद्घातादिपञ्चकभिन्नस्य प्रसङ्गत्वात् । यद्धर्मविशिष्टेत्यादिनिष्कृष्टकल्पे पूर्वोक्तदण्डकार्यत्वं चक्रस्य सङ्गतिः स्यादिष्टापत्तिकरणायोग इति ध्येयम् ॥ ९ ॥

यन्निरूपणानन्तरं यदभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयोऽर्थस्तस्य सङ्गतिः न च को घटः किं च द्रव्यमितिजिज्ञासानन्तरं नीलघटो निरूपितः तत्र नीलघटत्वमिव द्रव्यत्वमपि सङ्गतिः स्यादिति वाच्यम् । यद्रूपेण यादृशजिज्ञासाप्रयोजकत्वं तद्रूपावच्छिन्नकार्यतानिरूपितकारणत्वस्य विवक्षितत्वात् । न च यद्धर्मविशिष्टविषयकज्ञानेच्छात्वेनानन्तराभिधानप्रयोजकत्वमित्येव सम्यक् ज्ञानविषयत्वादिप्रवेशो व्यर्थ इति तस्य लक्षणान्तरत्वात् । अत एवानन्तराभिधेयवृत्तित्वे सति तज्ज्ञानजन्यस्मृतिप्रकारतापन्नत्वमिति परास्तम् । एतन्न समीचीनम् । अत एवेत्यादिकल्पे को घटः किं च द्रव्यमिति समूहालम्बनजिज्ञासया नीलघटो निरूपितः तत्र द्रव्यत्वेऽतिप्रसङ्गवारणसम्भवात् । न च तत्र पूर्ववद्वारणमिति वाच्यम् । तथा सत्येतत्कल्पस्य यथार्थघटितत्वेन पूर्वकल्पापेक्षया वैलक्षण्येन शङ्कनीयत्वेऽपि गुरुत्वेन शङ्कानास्पदत्वापत्तेः आनन्तर्यघटितत्वात् । यदि च भ्रमसामान्यभिन्नरूपयथार्थशरीरेऽनन्तभ्रमस्य निवेशात् इदं लघु इत्युच्यते तदा तादृशशङ्का सम्भवतीति वाच्यम् ॥ १० ॥

अत एव तदनन्तरं तदभिधेयवृत्तित्वे सति तद्विशेष्यकस्मृतिप्रकारतापन्नो धर्मः तन्निरूपिता तन्निष्ठा सङ्गतिरित्यादिकं समाहितमिति जगदीशः । स न सन्दर्भशुद्धः । एतत्कल्पे यदि तदनन्तरा-

भिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वदलं नास्ति तदा को घटः किं च द्रव्यमितिसमूहालम्बनजिज्ञासानन्तरं यत्र घटो निरूपितः तत्र द्रव्यत्वादेरपि सङ्गतित्वापत्तिः यदि तद्दलमपि वर्तते तदा एतत्कल्पस्य शङ्कास्पदत्वमपि नास्ति । न चैतत्कल्पे यथार्थपदमेव नास्तीत्येव विशेष इति वाच्यम् । यथार्थत्वापेक्षया तदनन्तरं तदभिधेयवृत्तित्वे सति इत्यस्य लघुत्वाभावेन शङ्कानास्पदत्वात् । यदि च अत एवेत्यस्य को घटः किं च द्रव्यमित्युक्तदोषादेवेत्यर्थकत्वमुच्यते तदा यथासन्निवेशे वैयर्थ्याभावादित्यनन्तरं एतेन परास्तमिति नियमस्य सन्दर्भविरोध इति ॥ ११ ॥

स्वमते स्मृतिं प्रति ज्ञानत्वेन तत्प्रकारकतद्विशेष्यकसंस्कारं प्रति तादृशनिश्चयत्वेन हेतुत्वं निश्चित्यातिव्याप्तिं निराकृत्य अन्येषां यन्मतं निश्चयत्वघटकदलद्वयस्य विशेष्यविशेषणभावेन विनिगमनाविरहेण गुरुतरकार्यकारणद्वयप्रसङ्गेण गौरवमतस्तत्प्रकारकतद्विशेष्यकसंस्कारे तादृशज्ञानत्वेन कारणत्वं तद्विशेष्यकतदभावप्रकारकज्ञानत्वेन प्रतिबन्धकत्वं तन्निष्ठप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यताशालिज्ञानत्वरूपनिश्चयत्वेन कारणत्वे निश्चयत्वघटकदलद्वयस्यैवाभावात् इत्युक्त्वा निराकृत्य एतेनेत्यादिना यत् केषाञ्चिन्मतं वह्निव्याप्यवत्तास्मृतिं प्रति व्याप्यवत्ताज्ञानत्वेन कारणत्वं वह्निव्याप्याभावस्मृतिं प्रति वह्निव्याप्याप्रकारकवह्निव्याप्याभावप्रकारकज्ञानत्वेन कारणत्वं न तु वह्निव्याप्यवत्तास्मृतिं प्रति वह्निव्याप्यवत्तानिश्चयत्वेन व्याप्यवत्त्वस्मृतिकारणतावच्छेदककोटौ वह्निव्याप्याभावाप्रकारकत्वापेक्षया वह्निव्याप्याभावप्रकारकस्मृतिकारणतावच्छेदककोटौ व्याप्याप्रकारकत्वनिवेशे लाघवम् । अत एव संशयाकारकस्मृतिवारणमिति । तदपि न प्रागुक्तदिशा निश्चयत्वघटकदलद्वयाघटितत्वात् पर्वतो वह्निव्याप्याभाववान्नवेति संशयादपि तादृशसंशयाकारस्मृत्यापत्तिभयेन व्याप्याभाववत्तास्मृतिं प्रति व्याप्याभावाभावाप्रकारकत्वघटितेन व्याप्याभाववत्ताज्ञानत्वेन हेतुताया आवश्यकत्वेन परं गौरवाच्चेति हेतुद्वयमुपन्यस्य दूषितं जगदीशेन । अत्रेयमनुपपत्तिः । व्याप्याभाववान्न वेति स्मृतेर्व्याप्याभावाभावप्रकारकस्मृतिकारणीभूतव्याप्याभावाप्रकारकव्याप्याभावाभावप्रकारकज्ञानविरहेण तादृशापत्तेरभावात् कुतो व्याप्याभावप्रकारकस्मृतिकारणतावच्छेदककोटौ व्याप्याभावाभावप्रकारकत्वनि-

वेशः । अत्र समाधानम् । यत्रादौ पर्वतो वह्निव्याप्याभाववान्न वेति संशयः ततः पर्वतो वह्निव्याप्याभावाभाववान्न वेति संशयान्तरं तत्र वह्निव्याप्याभाववान्न वेति संशयाकारकस्मृतित्वापत्तिः । तन्नोभयप्रकारकस्मृतेः कारणत्वात् अतस्तद्वारणाय वह्निव्याप्याभावप्रकारकस्मृतिकारणतावच्छेदककोटौ वह्निव्याप्याभावाभावाप्रकारकत्वनिवेशनमावश्यकं युक्तमिति । यद्वा पर्वतो वह्निव्याप्यवान्नवेति संशयानन्तरं पर्वतो वह्निव्याप्यवान्न वेति संशयाकारकस्मृतित्वापत्तिरतस्तादृशस्मृतिकारणतावच्छेदककोटौ वह्निव्याप्याभावाभावप्रकारकत्वनिवेश इति ॥ १२ ॥

अत्र च घटत्वादिविशिष्टवैशिष्ट्यबुद्धौ न घटत्वादिनिश्चयत्वेन हेतुत्वं किं तु घटत्वादिप्रकारकज्ञानत्वेन निश्चत्वेन हेतुत्वे ऽयं घटो न वेति संशयानन्तरं तादृशबुद्ध्युत्पादेन तत्र व्यभिचारात् किं तु यत्र विशेषणतावच्छेदकांशे धर्मितावच्छेदकतया किंचित् भासते तत्रैव तत्प्रकारकनिश्चयत्वेन हेतुत्वं यथा नीलघटवदित्यादौ घटत्वविशिष्टविशेष्यकनीलत्वनिश्चयत्वेनेत्यावेदयितुमुक्तं तत्तादितीति जगदीशः । अयं घटो न वेति ज्ञानस्य घटभेदकोटिकसंशयत्वे घटांशे घटत्वप्रकारकनिश्चयसत्त्वात् न व्यभिचारः घटत्वाभावकोटिकसंशयत्वे च घटत्वाभावकोट्यंशे प्रतियोगितासम्बन्धेन घटत्वस्याभावे प्रकारत्वेन घटत्वस्य निश्चयसत्त्वात् विशिष्टवैशिष्ट्यबोधमात्रे निश्चयत्वेन हेतुत्वे ऽपि घटवदितिनिश्चये न व्यभिचार इति चेत् । न। विशेषणताच्छेदकप्रकारकविशेषणधर्मिकनिश्चयस्यैव कारणत्वेन तदसत्त्वात् अन्यथा वह्निव्याप्यो धूम आलोकश्चेति ज्ञानोत्तरं वह्निव्याप्यालोकवान् पर्वत इति ज्ञानं स्यात् किं च समवायेन घटत्वविशिष्टवैशिष्ट्यस्य भूतले भानात् तादृशबोधे घटधर्मिकस्य समवायेन घटत्वप्रकारकनिश्चयस्य कारणत्वेन उक्तस्थले तदभावादेव व्यभिचारात् । नन्वेवं तथापि घटत्वत्वावच्छिन्नाभावकोटौ घटत्वत्वं घटेतरावृत्तित्वे सति सकलघटवृत्तित्वं एवं च तत्र समवायेन घटत्वविशिष्टवैशिष्ट्यस्य भूतले भाने ऽपि घटेतरावृत्तित्वसमानाधिकरणसकलघटवृत्तित्वत्वावच्छिन्नाभावकोटौ घटेतर इत्यशंस्यापि घटधर्मिकघटत्वप्रकारकनिश्चयत्वावश्यकत्वात् तदंश एव घटत्वनिश्चय इत्यतो न व्यभिचार इति चेत् । न । अयमित्यनेन अन्यघटस्य धर्मित्वेन निर्देशात् घटेतर इत्यादौ घटे घटत्वनिश्चये ऽपि इदन्त्वा-

वच्छिन्ने निश्चयाभावात् तथा च घटत्वविशिष्टवैशिष्ट्यबोधे तादृशघटधर्मिकघटत्वप्रकारकनिश्चयस्यैव कारणत्वेन व्यभिचार एव अत्र संशयादपि घटवदिति ज्ञानोत्पत्तेः। इत्थं च अन्तरा सधर्मितावच्छेदककविशिष्टवैशिष्ट्यबोधे एव तादृशनिश्चयत्वेन कारणत्वं न तु सर्वत्र इत्येतदर्थं तत्तदित्युक्तमिति। न च सामान्यलक्षणया निखिलघटभाने बाधकाभावात् कथं व्यभिचार इति वाच्यम्। तावतापि अयं घटवान्न वेति संशयोत्तरं घटवत्त्वानितिनिश्चये व्यभिचारादिति ध्येयम् ॥ १३ ॥

अथ दण्डो रक्तो न वेति संशयोत्तरं रक्तदण्डं सन्देह्मीति अनुव्यवसाये व्यभिचार इति चेत्। न। तादृशानुव्यवसायस्य रक्तत्वसंशयविषयकत्वविरहात् रक्तदण्डसंशयानुव्यवसायस्य तथाकारात् न च तथापि रक्तो दण्डो न वेति संशयात् रक्तदण्डवान्न वा पुरुष इति ज्ञाने व्यभिचार इति वाच्यम् तादृशसंशयोत्तरं तादृशज्ञानानभ्युपगमात् अभ्युपगमे तु विशेष्ये विशेषणमितिन्यायेन तत्स्वीकारात्।(१) अथाभावबुद्धौ प्रतियोग्यंशे उपलक्षणतया भानानभ्युपगमात् कथं रक्तदण्डाभावकोऽस्यंशे रक्तत्वस्य विशिष्टवैशिष्ट्यमर्यादा परित्याज्या इति चेत्। न। तत्रापि रक्तत्वस्य प्रतियोगितावच्छेदकत्वभान भवत्येव न तूपलक्षणतया भान परं तु जगदीशमते विशेषणतावच्छेदकताख्यविषयताविशेषानङ्गीकारात् विशेष्येऽपि विशेषणमितिरीत्या प्रकारतायास्तत्र स्वीकारात्। यदि च अभावप्रत्ययो हि विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते इति नियमस्य तादृशविशेषणतावच्छेदकताख्यविषयताशून्यो न भवतीत्येवार्थ इति मन्येत तदा अनुपपत्तिरस्त्येवेति ॥ १४ ॥

अथ वह्निव्याप्यवत्पर्वत इतिस्मरणेऽतिव्याप्तिः तत्र निश्चयत्वेन हेतुत्वात् यत्तु व्याप्यवत्त्वज्ञानत्वेन व्याप्यस्मृतिहेतुत्वं व्याप्याभावनिश्चयत्वेन व्याप्याभावस्मृतिहेतुत्वं तावतैव संशयाकारस्मृतेर्वारणं भवतीति व्याप्यस्मृतौ नातिव्याप्तिः व्याप्यनिश्चयत्वस्य व्याप्याभावाप्रकारकत्वघटिततया व्याप्याप्रकारकत्वघटितव्याप्याभावनिश्चयत्वस्य लघुनः तस्यैव निवेशादिति। तन्न। व्याप्याभाववान्न वेतिसंशयकाले तादृशसंशयाकारस्मृतेर्वारणाय व्याप्याभावाभावाप्रकारकत्वस्य व्याप्याभावनिश्चये निवेशनीयतया विपरीत-

---

(१) अथेत्यादिस्वीकारादित्यन्त जगदीशग्रन्थस्यानुवाद इति बोध्यम्।

गौरवात् इत्यर्थकजागदीशी । अत्रेदं बोध्यम् । व्याप्याभाववान्न वेति संशयाकारस्मृतेर्नापत्तिसम्भवः तत्र व्याप्याभावाभावस्मृतिकारणीभूतस्य व्याप्याभावाप्रकारकत्वघटितव्याप्याभावाभावनिश्चयस्यासत्त्वात् किं तु व्याप्यवान्न वेतिसंशयोत्तरं व्याप्यनिश्चयात्मकस्मरणापत्तिसम्भवेन व्याप्यस्मरणे व्याप्याभावाप्रकारकत्वघटितनिश्चयत्वेन हेतुताया वक्तव्यत्वेन उक्तगौरवाभिधानादिति ॥ १५ ॥

इति सङ्गत्यनुमितिजागदीशीक्रोडपत्रम् ।



# अथ पञ्चलक्षणीजागदीश्याः

## कालीशङ्करविरचितं क्रोडपत्रम् ।

---

अव्याप्यवृत्तिसाध्यकसद्धेताविति शिरोमणिः । कपिसंयोगी गगनादित्यादावव्याप्तिविरहाद्वृत्तिमद्धेतावव्याप्त्यर्थे सत्पदम् । अथैवमपि कपिसंयोगाभाववान् गुणत्वादित्यादावव्याप्तिर्न सम्भवतीति कथम् अव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाव्याप्तिरुक्ता । न चाव्याप्यवृत्ति साध्यं यत्रेति व्युत्पत्त्या तत्र सन् वर्तमानो यो हेतुस्तत्राव्याप्तिरिति वाच्यम् । तथा सति अव्याप्यवृत्तिसाध्यके हेतुरिति समासेनैव गगनहेतुनिराकरणे सत्पदवैयर्थ्यापत्तेः अपि च संयोगाभावसाध्यकद्रव्यत्वहेताव-व्याप्तिसम्भवे द्वितीयलक्षणेऽपि तद्वारणायोगात् । तस्मात् केवलान्वयिभिन्नाव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाव्याप्तिवारणाय द्वितीयलक्षणमिति युक्तमुत्पश्यामः ॥ १ ॥

साध्यवद्भिन्नश्चासौ साध्याभाववांश्चेति कर्मधारये साध्याभावपदवैयर्थ्यापत्तेः अतः सप्तमीसमासः कृतः । न च तत्रापि साध्यवद्भिन्नेऽभाव इत्यास्तां किं साध्यपदेन अधिकरणभेदेनाभाव-भिन्नत्वमतेनैवैतल्लक्षणकरणात् गगनाभावादिकमादायाव्याप्तिविरहादिति वाच्यम् । स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्ने वर्तते यः समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्तद्वति हेतोर्वृत्तितयाऽव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितालाभाय साध्यपदमिति जगदीशः । अत्रेयमाशङ्का । एवं सति स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयः कथं परित्यक्त इति विभावनीयम् । अत्र केचित् । सप्तमीसमासपक्षे स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्ने यः साध्यताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्तद्वद्वृत्तित्वमेव वा-

ध्येयम् । अन्यथा साध्यताघटकसम्बन्धावच्छिन्नप्रतियोगिताकाभावमात्रनिवेशे घटभिन्नस्य तादात्म्येन साध्यत्वे पटत्वादिहेतौ द्रव्यत्वात्मकं द्रव्यभिन्नभेदमादायाव्याप्त्यापत्तेरभावाभावस्यातिरिक्तत्वे ऽपि तद्भिन्नभेदस्य तत्स्वरूपत्वोपगमात् कर्मधारयपक्षे तु साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वनिवेशवैयर्थ्यमिति ध्येयम् ॥

केचित्तु कर्मधारयपक्षे ऽभावत्वेनाभावप्रवेशवैयर्थ्यम् साध्यताघटकसम्बन्धावच्छिन्नप्रतियोगिताकत्वमात्रेणाभावनिवेशस्यैव सम्यक्त्वात् । सप्तमीसमासपक्षे तु तदनिवेशे एकधर्मावच्छिन्नाधिकरणत्वस्यैक्यमते साध्यवद्भिन्नवृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्ननिरूपकताकाधिकरणत्वमादाय वह्निमान्धूमादित्यादावव्याप्तिरतस्तद्वारणायाभावत्वेनाभावनिवेशः निरूपकताया अपि सम्बन्धप्रतियोगित्वाभिन्नत्वात् । न चाभावीयाधिकरणत्वीयप्रतियोगित्वयोरेकजातीयत्वमप्रामाणिकमिति वाच्यम्। तयोरेकजातीयत्वस्य केवलान्वयिग्रन्थे भट्टाचार्येणोक्तत्वादित्याहुः(१) । उच्छृङ्खलास्तु साध्यवद्भिन्नश्चासौ साध्याभावश्चेति कर्मधारयोत्तरमतुप्प्रत्ययः । तत्र साध्यवत्त्वं स्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन एवं च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं साध्यतावच्छेदकावच्छिन्नत्वं च न देयं सामानाधिकरण्यमात्रस्य सम्बन्धत्वे घटाभावादेरपि तादृशसम्बन्धेन साध्यवत्तया तमादायाव्याप्तिविरहेण साध्याभाव इत्यत्र साध्यपदवैयर्थ्यापत्तेः । स्वप्रतियोगिकत्वमात्रस्य सम्बन्धत्वे तादृशसाध्यवद्भिन्नसाध्याभावाप्रसिद्धिरतो द्वयमुपात्तं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय स्ववृत्तिसाध्यतावच्छेदकावच्छि-

(१) अत्रापरे पत्रिकान्तरकृतः तत्पुरुषपक्षे स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्नवृत्तित्वस्वतादात्म्यैतदुभयसम्बन्धेन साध्याभावविशिष्टो योऽभावः तदधिकरणावृत्तित्वमर्थः पर्यवस्यति । कर्मधारयपक्षे ऽपि स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्नत्वस्वाधिकरणत्वैतदुभयसम्बन्धेन साध्याभाववत्त्वरूपार्थः पर्यवस्यति । स्वपदेन विशेष्यविधया समासे यो बोध्यते तत्प्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्न एव स्वरसतो बोध्यते । अतः साध्याभावस्तत्पुरुषपक्षे विशेष्यः स्वपदेन तस्यैव बोधनात् । कर्मधारयपक्षे तु साध्याभाववतो विशेष्यतया स्वपदेन साध्याभावोपादानं न सम्भवति साध्याभावस्य कर्मधारये विशेष्यविधया अनुपस्थापनात् । अतः कर्मधारयं परित्यज्य तत्पुरुष आदृत इत्याहुः ।

ऽसामानाधिकरण्यसम्बन्धेन साध्यवत्त्वमित्याहुः। तन्न । साध्याभाव इत्यत्र साध्यपदसार्थक्याय स्वप्रतियोगिकत्वघटितसम्बन्धानुधावनं प्रक्षालनाद्धीत्यादिन्यायेनायुक्तं सामानाधिकरण्यमात्रसम्बन्धेनैव साध्यवत्त्वविवक्षणे सर्वदोषाभावात् विशेषणताविशेषसम्बन्धेनाभावाधिकरणत्वं सामानाधिकरण्यघटकवृत्तित्वं च वक्तव्यं सर्वत्र गगनघटितोभयाभावं व्यधिकरणसम्बन्धेन साध्याभावं विपक्षमात्रवृत्त्यभावं चादायाव्याप्तिवारणसम्भवात् अधिकरणभेदेनाभावभेदादिति ॥ २ ॥

सकलेति । साकल्यं साध्याभाववति साध्ये च बोध्यमिति दीधितिग्रन्थः। तत्र साध्याभाववति साकल्यविशेषणे दत्ते एव साध्ये साकल्यविशेषणं सार्थकमतः प्रथमतः साध्याभाववति साकल्यविशेषणमिति प्राञ्चः । तन्न मनोरमम् ।गगनावृत्तिधर्मवान् द्रव्यत्वादित्यादावतिव्याप्तिरिति जगदीशः । अत्रेयमाशङ्का । ननु साकल्यविशेषणे दत्ते ऽपि गगनत्वसाध्योभयाभावमादायातिव्याप्तिरिति चेत् । न । इदानीं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायामस्तीत्यभिप्रायात् ॥

अत्रेदं तत्त्वम्। साध्ये साकल्यविशेषणस्य वास्तवं फलं यद्व्याप्तिवारणं तदग्रे न सम्भवतीति प्राचामाशयः। न च गगनैतद्रूपोभयवान् एतद्रसादित्यादौ साध्याभाववति साकल्यविशेषणे दत्ते ऽप्यतिव्याप्तिस्तत्र साध्यप्रतियोगिकस्य एतद्रूपाभावस्याधिकरणे हेतोरभावात् गगनैतद्रूपोभयत्वावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणत्वाभावात् तादृशसकलसाध्याभावाप्रसिद्ध्या एव नास्माकमतिव्याप्तिरिति साध्ये साकल्यविशेषणस्य फलमपि वास्तवमातिव्याप्तिः प्रथमतो भवतीति वाच्यम् । तत्र साध्ये साकल्यविशेषणासत्त्वे ऽपि एतद्घटावृत्तित्वावच्छिन्नाभावं तद्रूपगगनान्यतराभावं चादायातिव्याप्तिवारणसम्भवेन तस्यावान्तरफलत्वाभावात् साध्याभाववति साकल्यविशेषणेन यत्फलं न भवति तस्यैव साध्ये साकल्यविशेषणस्य फलत्वात् । वस्तुनस्तु साध्याभाववतीत्युक्त्वा साध्याभावो वा, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्य इत्युक्तौ साध्याभावो वेत्यनेन सह साध्याभाववति साकल्यविशेषणस्यापि सान्निध्येन वैकल्पिकसंशयः स्यात् स च नावगच्छेत अतः साध्याभाववति साध्ये चेत्युक्तमिति गदाधरभट्टाचार्यः ।

अत्र हेतुतावच्छेदकावच्छिन्नव्यधिकरणापेक्षया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावीयहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वनिवेशनं यद्यपि गुरु तथापि यथा सन्निवेशे न वैयर्थ्यम् । वस्तुतः साध्याभाववत्सकलनिष्ठहेतुतावच्छेदकावच्छिन्नस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वापेक्षया हेतुतावच्छेदकावच्छिन्नयत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं साध्याभाववतस्तत्प्रतियोगित्वरूपं लाघवेनास्तामिति तन्नोक्तम् । न चास्माकमपि यद्धर्मावच्छिन्नानधिकरणं साध्याभाववत्तद्धर्मवत्त्वरूपस्य तदपेक्षया लाघवमिति वाच्यम् । तथा सति व्याप्तेः प्रतियोगित्वरूपत्वानुपपत्त्या मूलासङ्गतिः ॥ ३ ॥

सकलस्य साध्यप्रतियोगिकाभावस्याधिकरणाप्रसिद्ध्या व्यभिचारिण्यतिव्याप्तिवारणार्थं यदि साध्याभावस्य विशेषणं साकल्यं तदा वह्निमान्धूमादित्यादावव्याप्तिस्तत्रापि सपक्षावृत्तित्वावच्छिन्नाभावस्य विपक्षावृत्तित्वावच्छिन्नाभावस्य वा साध्याभावस्तोमस्याधिकरणाप्रसिद्धेरत आह साकल्यं साध्याभाववतीति जागदीशी । अत्रायं भावः । तन्त्रोक्तसाकल्यविशेषणं किं दोषवारणाय कुत्र देयमित्याशङ्कायां गगनावृत्तिधर्मवान् द्रव्यत्वात् इत्यत्रातिव्याप्तिवारणाय साकल्यस्य साध्यांशे विशेषणत्वेऽपि धूमवान् वह्नेरित्यादावतिव्याप्तिवारणासम्भव इति सर्वत्रातिव्याप्तिवारणार्थं साध्याभाव एव विशेषणं देयमिति पुनः सकलसाध्याभावाधिकरणाप्रसिद्ध्याव्याप्तिरित्युक्तं यावदतिव्याप्तिवारणाय साकल्यं प्रथमतः साध्याभावविशेषणं न तु साध्ये इति । अत्रेयमाशङ्का । ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य लक्षणे निवेशनीयतया तमादाय कथमव्याप्तिरिति वाच्यम् । अभावद्वये प्रतियोगिवैयधिकरण्यावच्छिन्नत्वस्यावश्यं निवेशनीयतया समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय दोषाभावात् एतल्लक्षणे तस्यानिवेशनीयत्वादन्यथा धूमवान् वह्नेरित्यादौ संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य गुणादावेव सत्त्वादप्रसिद्ध्यभिधानस्योन्मत्तप्रलापापत्तेः । अथवा धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थं साध्याभावाधिकरणं साध्यतावच्छेदकसम्बन्धेन किञ्चिद्धर्मवत्त्वस्य विशेषणीयतया संयोगसंसर्गेण च घटावृत्तित्वावच्छिन्नाभावपटावृत्तित्वावच्छिन्नाभावरूपसाध्याभावस्तोमस्याधिक-

रणे गुणादौ संयोगेन किञ्चिद्धर्मवत्त्वाप्रसिद्ध्याव्याप्तेर्दुर्वारत्वात् । अथ प्रागुक्तयुक्त्याऽसम्भवसम्भव ऽव्याप्त्यभिधानमसङ्गतम् । न च तद्घटभिन्नं पटत्वादित्यादावेव लक्षणगमनान्नासम्भव इति वाच्यम् । अत्रापि पटभेदावच्छिन्नाभावरूपसाध्याभावस्तोमस्याधिकरणाप्रसिद्धेर्दुर्वारत्वात् । न च पटभेदावच्छिन्नाभावस्य प्रतियोगित्वं घटादिभेदे स्वीक्रियते न तु तस्य प्रतियोगित्वं साध्ये ऽपीति वाच्यम् । तावत्पर्यन्तानुधावने धूमवान् वह्नेरित्यादौ घटावृत्तित्वावच्छिन्नाभावस्य प्रतियोगित्वं घटादिभेदे स्वीक्रियते न तु प्रतियोगित्वं धूमादावप्यतो लाघवानुसन्धानं नास्तीति वक्तव्यमिति चेत् सत्यम् । पटावृत्तिधर्मवान् घटत्वादित्यादौ लक्षणसमन्वयसम्भवान्नाऽसंम्भव इति । न च पटभेदत्वावच्छिन्नाभावस्य मठावृत्तित्वावच्छिन्नाभावस्य घटावृत्तिधर्माभावस्य च साध्याभावस्तोमस्याधिकरणाप्रसिद्ध्यैवाव्याप्तिसम्भव इति वाच्यम् । तादृशाभावस्य यावत्साध्यप्रतियोगिकत्वविरहेण साध्यामात्रे यावत्साध्यप्रतियोगिकत्वविवक्षया तद्वारणात् । न च तत्पटावृत्तिधर्माभावतत्पटानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावोभयात्मकसाध्याभावस्तोमस्याधिकरणाप्रसिद्ध्यैवाव्याप्तिसम्भव इति वाच्यम् । विशेषरूपेण संसर्गत्वास्वीकारे क्षत्यभावात् । केचित्तु साध्ये साकल्यविशेषणादाने ऽप्युभयपक्षे नित्यज्ञानानुयोगिकविषयत्वसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावे साध्ये पटत्वादिहेतौ लक्षणगमनान्नासम्भवस्तत्र साध्याभावस्याधिकरणत्वस्य नित्यज्ञाने सत्त्वादिति दिक्(१) ॥ ४ ॥

---

(१) सकलसाध्याभाववन्निष्ठात्यन्ताभावप्रतियोगित्वमित्यत्र द्वितीयाभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणोऽन्यथा पृथिवी कपिसंयोगादित्यत्र साध्याभाववति जले कपिसंयोगाभावस्य वर्तमानत्वेऽपि नाव्याप्तिः । तत्र प्रतियोगिव्यधिकरणत्वं प्रतियोगितावच्छेदकसम्बन्धेन वाच्यमन्यथा अयमात्मा ज्ञानादित्यत्र ज्ञानाभावरूपहेत्वभावस्य प्रतियोगि यज्ज्ञानं विषयतासम्बन्धेन तदधिकरणत्वस्य हेत्वभाववति सत्त्वेऽपि प्रतियोगिव्यधिकरणहेत्वभावाप्रसिद्ध्याऽव्याप्तिप्रसङ्गादित्युक्तं जगदीशेन । ननु प्रतियोगितावच्छेदकसम्बन्धानुपादाने वह्निमान् धूमादित्यत्र वह्न्यभाववत्सकलान्तर्गतधूमावयवे समवायेन धूमाभावप्रतियोगिनः सत्त्वात् साध्याभाववति सकले सम्बन्धसामान्येन प्रतियोगिव्यधिकरणश्च धूमाभावो नास्तीति कथं तत्राव्याप्तिमुपेक्ष्य अयमात्मा ज्ञानादित्यादिस्थले ऽव्याप्तिपर्यन्तानुधावनं कृतमिति चेत् । न साध्याभाववति यदि साकल्यविशेषणं

प्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं प्रतियोगिवैयधिकरण्यावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ तु न कोपि दोष इति ध्येयमिति जगदीशः । न च कपिसंयोग्येतद्वृक्षत्वादित्यादावव्याप्तिवारणाय साध्याभावे प्रतियोगिवैयधिकरण्यस्य सार्थक्ये ऽपि हेत्वभावे प्रतियोगिवैयधिकरण्यमनर्थकमेव । न चैतद्वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिवारणाय तदिति वाच्यम् । तत्र साध्याभाववति जलादौ कपिसंयोगाभावस्य सत्त्वे ऽपि तदवच्छिन्नाभावस्यापि तत्र सत्त्वादिति चेन्न । द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यस्य व्यापकताशरीरे देयत्वात् अन्यथा द्रव्यत्वाभाववति गुणादौ विशिष्टसत्त्वाभावत्वावच्छिन्नाभावस्य सत्तास्वरूपतया सत्त्वेन विशिष्टसत्ताभावत्वस्य व्यापकतावच्छेदकत्वविरहात् अधुना तु तत्रापि विशिष्टसत्ताभावाभावस्य सत्त्वे ऽपि तादृशाभावप्रतियोगिनो विशिष्टसत्ताभावस्य गुणादौ सत्त्वेन प्रतियोगिवैयधिकरण्यावच्छिन्नाभावस्य व्यापकताशरीरे निवेशनीयतया तद्दोषवारणे ऽपि वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिर्दुर्वारैवेति तद्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यावच्छिन्नत्वविशेषणमवश्यं निवेशनीयमिति ध्येयम् । इदं तु यथाश्रुतमेवान्यथा साध्याभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकतावदनुयोगितानिरूपितप्रतियोगिताया अवच्छेदकत्वाभावस्य तादृशाभावत्वे निवेशनीयतयैव द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणसम्भवे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यमनादेयमिति ध्येयम् । केचित्तु व्यापकताघटकीभूताभावस्य साध्याभाववद्वृत्तित्वं यदि येन केनापि सम्बन्धेन तदा वन्हिमान् धूमादित्यादावव्याप्तिः वन्ह्यभाववति कालादौ कालिकसम्बन्धेन धूमाभावाभावस्य सत्त्वात् ।

तदा वह्निमान् धूमादित्यत्र वह्न्यभाववति महाप्रलये सम्बन्धसामान्येन प्रतियोगिवय्रधिकरणधूमाभावसत्त्वात धूममात्रस्यैव जन्यतया परमाणौ धूमत्वानङ्गीकारेण महाप्रलये केनापि सम्बन्धेन धूमस्याधिकरणत्वाभावात् विषयत्वातिरिक्तसम्बन्धेन विभिन्नकालीनयोराधाराधेयभावाभावात् अयमात्मा ज्ञानादित्यत्र च ज्ञानाधिकरणत्वस्य महाप्रलये ऽपि सत्त्वात् प्रतियोगिवय्रधिकरणहेत्वभावः प्रलये ऽपि न सम्भवति । एवं सति वह्निमान् धूमादित्यत्र प्रतियोगिवय्रधिकरणहेत्वभावाप्रसिद्धिनिबन्धनाव्याप्तिर्न सम्भवति अयमात्मा ज्ञानादित्यत्र तु तदप्रसिद्धिनिबन्धनैवेति ध्येयम् ।

नापि हेतुतावच्छेदकसम्बन्धेन सत्तावान् जातेरित्यादौ सत्ताभाववति सामान्यादौ प्रकृतहेतुतावच्छेदकसम्बन्धेन वृत्तित्वाप्रसिद्धेः। नापि हेतुतावच्छेदकसम्बन्धान्यहेतुप्रतियोगिकसम्बन्धातिरिक्तसम्बन्धेन सत्तावान् समवायेन प्रमेयादित्यादावव्याप्तेस्तत्र समवायस्यैव निरुक्तसम्बन्धतया साध्याभाववति सामान्यादौ तेन सम्बन्धेन वृत्तेरप्रसिद्धेः। एतेन हेतुतावच्छेदकसम्बन्धान्य(१)हेतुतावच्छेदकसम्बन्धेन वर्तमानहेतुप्रतियोगिकान्यसम्बन्धेन वृत्तित्वनिवेशान्न क्वापि दोष इत्यपि निरस्तम्। निरुक्तस्थले स्वरूपसम्बन्धस्यापि तथात्वात् साध्याभाववति सामान्यादौ तेन सम्बन्धेन प्रमेयस्वरूपहेत्वभावाभावस्य वृत्तेरिति। नापि हेतुतावच्छेदकसम्बन्धस्वरूपान्यतरसम्बन्धेन घटत्ववान् प्रमेयत्वादित्यादौ घटानुयोगिकस्वरूपसम्बन्धेन हेतुतायामव्याप्तिस्तत्र साध्याभाववत्पटादौ स्वरूपसम्बन्धेन हेतोर्वृत्तेरतो येन केन सम्बन्धेन वृत्तित्वं वह्निमान्धूमादित्यादावव्याप्तिवारणार्थे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयत्वात्। तन्निवेशे च हेत्वभावे एतद्वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिवारणार्थे प्रतियोगिवैयधिकरण्यावच्छिन्नत्वस्यावश्यकत्वमिति ध्येयम् ॥ ५ ॥

निर्धूमत्वव्याप्येति। निर्धूमत्वव्याप्याभाववति पर्वतमहानसादौ वह्न्यभावाभावस्य वह्निस्वरूपस्य यावद्विपक्षावृत्तित्वे ऽपि वह्न्यभावभेदस्य यावद्विपक्षवृत्तित्वसम्भवात् नाव्याप्तिः। न चात्यन्ताभावानिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिरयोगोलके वह्निभेदसत्त्वादिति वाच्यम्। धूमाभाववति वह्न्यादौ वह्निभेदासत्त्वेनातिव्याप्तेरनवकाशादिति चेदत्र केचित्। वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यवान् वह्न्यभावान्यत्वविशिष्टनिर्वह्नित्वादित्यादावव्याप्तिस्तत्र साध्याभाववति वह्न्यभावे वह्न्यभावभेदात्मकहेतुभेदस्यासत्त्वात् पर्वतादौ च वह्न्यात्मकहेत्वभावस्य यावद्विपक्षावृत्तित्वादिति। न च वह्न्यभावान्यत्वविशिष्टवह्न्यभावाभावो न वह्निस्वरूपः किन्त्वतिरिक्त एवान्यथा वह्न्यभावे विशिष्टाभावबुद्ध्यनुदयप्रसङ्ग इति वाच्यम्। प्रतियोगितासंयोगान्यतरसम्बन्धेन व-

(१) अत्र हेतुतावच्छेदकसम्बन्धान्यत्वं हेतुतावच्छेदकसम्बन्धेन वर्तमानहेतुप्रतियोगिकसम्बन्धे बोध्यम्।

ह्निनैवोपपत्तौ अतिरिक्ताभावानभ्युपगमादिति । अत्रेदं चिन्त्यम् । भवतु विशिष्टाभावो वह्निस्वरूपः तथापि संयोगेनैव वह्न्यभावाभावप्रतियोगितानवच्छेदकत्वात् वह्न्यभावत्वस्येति नाव्याप्तिः । न च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावात्मकतया उक्ताभावप्रतियोगितावच्छेदकमभावत्वमिति हेतुतावच्छेदकस्यानवच्छेदकत्वादव्याप्तिस्तथापीति वाच्यम् । विषयतासम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावान्यत्वविशिष्टवह्न्यभावाभावस्य साध्याभाववति सर्वस्मिन्नेव सम्भवादव्याप्त्यभावात् । एवञ्च धूमाभावव्याप्यवान् वह्न्यभावादित्यत्र हेतुतावच्छेदकविशेषणताविशेषसम्बन्धेन प्रतियोगिव्यधिकरणविषयतासम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभावस्य यावद्विपक्षे सत्त्वान्नाव्याप्तिरिति चेदत्र केचित् । वृत्त्यनियामकस्य व्यधिकरणसम्बन्धस्य वा प्रतियोगितावच्छेदकत्वानङ्गीकारेण तत्राव्याप्तिरित्यभिप्रायेणायं ग्रन्थ इति ध्येयम् ॥ ६ ॥

इति श्रीकालीशङ्करविरचितं व्याप्तिपञ्चकजागदीशीक्रोडपत्रं समाप्तम् ।

---

# अथ सिंहव्याघ्रजागदीश्याः

## कालीशङ्करविरचितं क्रोडपत्रम्(१)।



साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वानधिकरणत्वमित्यस्य साध्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वानाधिकरणत्वमिति पर्यवसितार्थे वह्निमान् धूमादित्यादौ महानसीयवह्न्यादिनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणपर्वतादिवृत्तित्वस्य धूमे सत्त्वात् अव्याप्तिरिति साध्यसामान्यनिष्ठाभावप्रतियोगीत्येवं वक्तव्यम्। तथा च सामान्यपदस्य व्यापकत्वार्थकत्वादतिगौरवमतः कल्पान्तरमिति जगदीशेनोक्तम्। नन्वत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिवेशस्यावश्यकत्वम्। अन्यथा समवायसम्बन्धावच्छिन्नपर्वतवृत्तित्वाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिः तथा च द्रव्यवान् धूमादित्यादौ साध्यसामान्यनिष्ठाभावप्रतियोगिसाध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वाप्रसिद्धिः। एवं वह्निमान् पर्वतरूपान्यतरत्वादित्यादावतिव्याप्तिः। तथाहि साध्यनिष्ठाभावप्रतियोगि यत् साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वं तन्निरूपकह्रदादौ तादृशान्यतरत्वस्यासत्त्वात्। अत्र केचित्। साध्यसामान्यनिष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रतियोगित्वाश्रयनिरूपितवृत्तित्वस्यानधिकरणत्वमेव निष्कृष्टदलार्थः। तथा च पर्वतादौ वह्निनिष्ठाभावप्रतियोगित्वाभावान्नाव्याप्तिरिति। अत्र यद्यप्येतादृशसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽसम्भवापत्ति। तथापि साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभाववत्त्वस्याधेयतायां निवेशे न पूर्वोक्तदोषावकाश। न च वह्निमान् धूमादित्यादौ समवायसम्बन्धावच्छिन्नपर्वताधेयत्वस्यापि

(१) अस्मन्निकटे सिंहव्याघ्रजागदीश्याः क्रोडपत्रद्वय वर्तते तदुभय विभिन्नमपि कालीशङ्करकृतमिति प्रसिद्धिः किन्त्वद समीचीनमिति प्रकाश्यते।

तथात्वेनाव्याप्त्यापत्तिरिति वाच्यम् । साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतावन्निरूपितत्वोभयाभाववदाधेयत्वस्यैव विवक्षितत्वात् न पूर्वोक्तदोषः । न च तथापि समवायेन प्रमेयसाध्यकसत्त्वादिहेतावव्याप्तिः प्रमेयसामान्यनिष्ठाभावप्रतियोगिताहशाधेयत्वस्याप्रसिद्धेरिति वाच्यम् । सामान्यपदस्य व्यापकतार्थकत्वेन साध्यतावच्छेदकसम्बन्धप्रतियोग्यनुयोगिकसाध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकस्य व्यापकत्वनिवेशान्न दोष इति ध्येयम् । अत्रेदं चिन्त्यम् । आधेयभेदेनाधेयताया भिन्नत्वात्तद्वह्निमान् तद्धूमादित्यादावव्याप्तिः । तद्वह्निनिष्ठो योऽभावस्तत्प्रतियोगि यत्तद्धूमनिष्ठाधेयत्वं तन्निरूपकाधिकरणं यत्तद्धूमाधिकरणं तद्वृत्तित्वानधिकरणत्वस्य तद्धूमे सत्त्वात् । न च यन्निरूपितवृत्तित्वसामान्याभावः साध्ये तन्निरूपितवृत्तित्वानधिकरणत्वमेव हेतौ व्याप्तिः । तथा च तद्वह्नौ तद्धूमाधिकरणनिरूपितवृत्तित्वसामान्याभावो नास्ति तत्पदेन तद्धूमाधिकरणं धर्तुं न शक्यते किन्तु ह्रदादिकमेव तन्निरूपितवृत्तित्वानधिकरणत्वं तद्धूमे ऽस्तीति वाच्यम् । एवं सति धूमवान् वन्हेरित्यादौ धूमे ह्रदनिरूपितवृत्तित्वसामान्याभावस्य सत्त्वात् यत्पदेन ह्रदं धृत्वा तन्निरूपितवृत्तित्वानधिकरणत्वस्य वह्नौ सत्त्वादतिव्याप्तिः । न च यन्निरूपितवृत्तित्वाभावः साध्ये तत्तन्निरूपितवृत्तित्वानधिकरणत्वमेव हेतौ विवक्षणीयम् । तथा च धूमे अयोगोलकनिरूपितवृत्तित्वाभावा ऽप्यस्ति तत्तन्निरूपितवृत्तित्वानधिकरणत्वं वह्नौ नास्तीति नातिव्याप्तिरिति वाच्यम् । एवं सति यदधिकरणानधिकरणं साध्यमिति पूर्वव्याख्यायां धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणार्थं यद्यत्पदप्रवेशे गौरवमिति कथनं जगदीशस्य विरुध्येत यद्यत्पदप्रवेशस्यावश्यकत्वादिति ध्येयम् ॥ १ ॥

अत्र लक्षणे वह्निमान् धूमादित्यादौ विषमव्याप्तहेतावव्याप्तिः महानसीयवह्नौ पर्वतनिरूपितवृत्तित्वाभावो वर्तते तत्प्रतियोगिपर्वतनिरूपितवृत्तित्वं तन्निरूपकाधिकरणं पर्वतः तन्निरूपितवृत्तित्वमेव धूमे ऽस्तीति न तदनधिकरणत्वमिति जगदीशेनोक्तम् । अत्र आर्द्रेन्धनप्रभववह्निमान् धूमादित्यादिसमव्याप्तहेतावव्याप्तिः सम्भवति महानसीयवह्न्यात्मकार्द्रेन्धनप्रभववह्नौ वर्तमानो यः प-

र्वतवृत्तित्वाभावस्तत्प्रतियोगि पर्वतवृत्तित्वं तन्निरूपकाधिकरणवृत्तित्वस्य पर्वतीयधूमे सत्त्वात् । ननु शब्दवान् गगनत्वादित्यादिसमव्याप्ते नाव्याप्तिः सम्भवति शब्दे गगनवृत्तित्वाभावविरहात् समव्याप्तत्वावच्छेदेनाव्याप्तिर्न सम्भवति अतो विषमव्याप्तानुधावनमिति चेन्न । सत्ताद्रव्यत्वान्यतरवान् द्रव्यत्वादित्यत्र विषमव्याप्ते ऽप्यव्याप्तिर्न सम्भवति सत्तायां द्रव्यत्वे वा द्रव्यत्वासामानाधिकरण्यविरहात् विषमव्याप्तत्वावच्छेदेनापि अव्याप्त्यसम्भवादिति चेत् । अत्राहुः । साध्यनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नाभावेत्यादिकल्पे आर्द्रेन्धनप्रभववह्निमान् धूमादित्यादिसमव्याप्ते व्याप्यार्द्रेन्धनप्रभववह्नौ सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकधूमसामान्याभावो नास्ति वह्निमान् धूमादित्यत्र यत्र हेतौ व्यभिचारः तदधिकरणावच्छेदेन सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकहेतुसामान्याभावसत्त्वात् समव्याप्ते तु साध्यहेतौ व्यभिचार एव नास्ति कुतस्तदवच्छेदेन साध्ये निरुक्तसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकहेतुसामान्याभावसत्त्वमित्यपि न युक्तम् । तथा सति वह्निनिष्ठस्य सामानाधिकरण्यसम्बन्धेन तत्तद्धूमाभावस्य प्रतियोगित्वाधिकरणत्वस्य तत्तद्धूमे सत्त्वात् आर्द्रेन्धनप्रभववह्निमान् धूमादित्यादावव्याप्तेर्दुर्वारत्वात् तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकहेतुनावच्छेदकमिति विवक्षया ऽव्याप्तिवारणे ऽपि धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । वस्तुतो विषमव्याप्तत्वं व्यधिकरणवृत्तिसाध्यतावच्छेदकत्वमिति नानुपपत्तिरिति । केचित्तु स्वासमानाधिकरणसाध्यकहेतोरेव विषमव्याप्तपदेन विवक्षिततया आर्द्रेन्धनप्रभववह्निमान् धूमादित्यादौ विषमव्याप्तत्वं न तु शब्दवान् गगनत्वात् सत्ताद्रव्यत्वान्यतरवान् द्रव्यत्वादित्यादावित्याहुः ॥ २ ॥

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वमित्यर्थः । साध्यनिष्ठाधेयत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं बोध्यम् । अन्यथा रूपवान् महाकालत्वादित्यादौ समवायेन व्यभिचारिण्यतिव्याप्तिरिति जगदीशेनोक्तम् । अत्र यद्यपि कालिकसम्बन्धावच्छिन्नरूपनिष्ठाधेयतानिरूपकाधिकरणत्वस्यैव महाप्रलये ऽपि सत्त्वात् सम्बन्धसामान्येन रूपनिष्ठाधेयत्वानिरूपकाधिकरणत्वं न महाप्रलये किं तु गगन एव तन्निरूपितवृत्तित्वानधिकरणत्वस्य कालत्वहेतावपि

सत्त्वात् तत्राप्यतिव्याप्तिसम्भवे महाकालत्वानुधावनं व्यर्थमिति तथापि यादृशहेतुकव्यभिचारिमात्र एवाधेयतायां साध्यतावच्छेदकसम्बन्धानिवेशे ऽतिव्याप्तिः तादृशहेतुः महाकालत्वमेव न तु केवलं कालत्वम् । तथाहि जन्यरूपवान् कालत्वादित्यादौ जन्यभावानधिकरणरूपमहाप्रलये कालिकसम्बन्धावच्छिन्ना या जन्यरूपादिनिष्ठाधेयता तदनिरूपकाधिकरणत्वस्य सत्त्वात् । तादृशकालनिरूपितवृत्तित्वस्य कालत्वे सत्त्वादतो महाकालत्वानुधावनम् । तथा च महाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन वृत्तित्वात् न तु कालिकसम्बन्धावच्छिन्नकिञ्चिन्निष्ठाधेयताया अनिरूपकाधिकरणत्वं महाकाले ऽस्तीति । न च तथापि यत्र कालिकसम्बन्धेन वाच्यत्वस्य साध्यता जन्यत्वं हेतुः आधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे तत्राव्याप्तिरेव भवति स्वरूपसम्बन्धावच्छिन्नवाच्यत्वनिष्ठाधेयतानिरूपकाधिकरणत्वस्य सर्वत्र सत्त्वात् सम्बन्धसामान्यावच्छिन्नवाच्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणत्वस्याप्रसिद्धेः । एवं महाकालान्यत्वस्य यत्र स्वरूपसम्बन्धेन साध्यता समवायेन घटत्वं हेतुस्तत्र कालिकसम्बन्धेन महाकालान्यत्वस्य महाकाले सत्त्वात् स्वरूपसम्बन्धेन महाकालान्यत्वस्य महाकालातिरिक्ते सत्त्वात् सम्बन्धसामान्यावच्छिन्नमहाकालान्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणत्वाप्रसिद्धेः अत्राव्याप्तिसम्भवे ऽतिव्याप्तिपर्यन्तानुधावनं जगदीशेन कथं कृतमिति वाच्यम् । यत्किञ्चित्सम्बन्धावच्छिन्नसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वं यदि हेतावस्ति तदैव हेतौ लक्षणगमनं सम्भवतीति यद्युच्यते तदा कालिकसम्बन्धेन वाच्यत्वसाध्यकजन्यत्वहेतौ कालिकसम्बन्धावच्छिन्नवाच्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वस्य जन्यत्वे सत्त्वात् । स्वरूपसम्बन्धेन महाकालान्यत्वसाध्यकघटत्वहेतौ च स्वरूपसम्बन्धावच्छिन्नमहाकालान्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वस्य घटत्वे सत्त्वान्नाव्याप्तिः सम्भवति । एवं प्रकारेण कालिकसम्बन्धावच्छिन्नरूपनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधिकरणत्वस्य महाकालत्वे सत्त्वात् रूपवान् महाकालत्वादित्यत्रातिव्याप्तिः प्रसज्येत अत आधेयतायां यत्किञ्चित्सम्बन्धावच्छिन्नत्वमनिवेश्य विशेषतः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशने कृतमिति ॥ ३ ॥

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्ष इति जगदीशः । अथात्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वं स्वरूपसम्बन्धेन तादृशानिरूपकत्ववत् यदधिकरणत्वं तद्व्यापकत्वं वा अधिकरणत्वं परित्यज्य तादृशानिरूपकत्वव्यापकत्वं वा किं वा सामानाधिकरण्यसम्बन्धेन तादृशानिरूपकत्वविशिष्टं यदधिकरणत्वं तद्व्यापकत्वं वा निवेश्यते । नाद्यः । घटभिन्नं पटत्वादित्यादावव्याप्तेः साध्याधिकरणताभिन्नाधिकरणतामात्रस्यैव साध्यनिष्ठाधेयत्वानिरूपकत्वसत्त्वात् तादृशानिरूपकाधिकरणत्वव्यापकत्वस्य हेत्वधिकरणत्वाभावे ऽप्रसिद्धेः । परकल्पद्वयं न साधु । वह्निमान् वह्न्यधिकरणतात्वाद्वह्न्यधिकरणत्वपर्वतान्यतरत्वाद्वेत्यादावतिव्याप्तेः हेत्वधिकरणात्मकाधिकरणतायां हेत्वधिकरणपर्वते च साध्यनिष्ठाधेयत्वानिरूपकत्वस्यासत्त्वादिति चेत् । न साध्यनिष्ठाधेयत्वाभावव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वस्य निष्कृष्टार्थस्य विवक्षितत्वात् । तादृशाधेयत्वाभावश्च स्वनिरूपकत्वस्वनिरूपकाधिकरणत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको बोध्य इति न कोऽपि दोष इति ॥ ४ ॥

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कृष्टकल्पोपरि । न च हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाभावत्वेन तादृशाधिकरणताव्यापकत्वमित्यस्यैव सम्यक्त्वे अधिकरणत्वाभावपर्यन्तप्रवेशो व्यर्थ इति वाच्यम् । वृत्त्यनियामकसम्बन्धेन हेतावव्याप्तेः तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः । अस्माकं तु तादृशसम्बन्धेन यद्धेतुसम्बन्धित्वं तस्य स्वरूपसम्बन्धावच्छिन्नाभावमादाय लक्षणसमन्वयसम्भवादिति जगदीशः । अत्रेयमाशङ्का । हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वेन व्यापकतानिवेशे साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमवश्यं हेतुतावच्छेदकसम्बन्धेन वक्तव्यम् । अन्यथा वह्निमान् धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतो यो धूमावयवः तत्र धूमाभावाभावस्य समवायेन वर्तमानत्वात् तत्प्रतियोगितावच्छेदकं धूमाभावत्वमित्यव्याप्तेः । एवं च सत्तावान् जातेरित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तित्वा ऽप्रसिद्ध्याऽव्याप्तिः । एवञ्च यादृशस्थले अव्याप्त्या पूर्वोक्तलक्षणं परि-

त्यज्य एतादृशलक्षणं कृतं तादृशस्थल एवाव्याप्तिः सम्भवति तामुपेक्ष्य कथं चैत्रत्ववान् तद्धनादित्यादिस्थलान्तरानुधावनं कृतम् । एवं द्रव्यं विशिष्टसत्त्वादित्यत्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे गुणे सत्तास्वरूपविशिष्टसत्ताभावाभावो वर्तते तत्प्रतियोगितावच्छेदकं विशिष्टसत्त्वाभावत्वमिति तत्राप्यव्याप्तिपरीहार एतादृशविवक्षायां न सम्भवतीति चेत् । अत्राहुः । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकतावच्छेदकत्वमत्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यधिकरणतानवच्छेदकं यत्तद्भिन्नत्वरूपं निवेशनीयम् । अत्र यत्किञ्चिद्व्यक्तिवृत्त्यधिकरणता हेतुमत्ताग्रहाविरोधिताघटकसम्बन्धावच्छिन्ना ग्राह्या । तथा च वह्निमान् धूमादित्यत्र धूमावयवनिष्ठा या स्वरूपसम्बन्धावच्छिन्नाधिकरणता तदवच्छेदकत्वस्यैव संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावत्वे सत्त्वात् । एवं द्रव्यं विशिष्टसत्वादित्यादौ द्रव्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणीभूतो यो गुणः तद्वृत्तिर्या स्वरूपसम्बन्धरूपहेतुमत्त्वग्रहविरोधिताघटकसम्बन्धावच्छिन्नाधिकरणता तदवच्छेदकत्वस्यैव विशिष्टसत्ताभावत्वे सत्त्वात् निरुक्तव्यापकतावच्छेदकत्वमक्षतमेव । धूमवान् वह्नेरित्यत्र धूमानिष्ठाधेयत्वानिरूपकाधिकरणं यदयोगोलकं तन्निष्ठा या स्वरूपसम्बन्धरूपहेतुमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नाधिकरणता तदनवच्छेदकत्वस्य वह्न्यभावत्वे सत्त्वान्न साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यधिकरणतानवच्छेदकभिन्नत्वमस्तीति नातिप्रसङ्गः । यत्किञ्चित्पदमपि अतिव्याप्तिवारणार्थमेव । अन्यथाऽत्र ह्रदनिष्ठाधिकरणतावच्छेदकत्वस्यैव वह्न्यभावत्वे सत्त्वात् वह्न्यभावत्वस्य व्यापकतावच्छेदकत्वापत्तेः । अत्रेदं चिन्त्यते । द्रव्यगुणान्यतरत्ववान् कर्मत्वाभावादित्यत्र व्यभिचारिण्यतिव्याप्तिः । तथाहि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणपदेन जात्यादिकं धर्तुं न शक्यते तन्निष्ठसमवायरूपहेतुमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नाधिकरणत्वाप्रसिद्धेः । यदि कर्म ध्रियते तदा समवायरूपहेतुमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्यैव कर्मत्वाभावाभावत्वरूपहेत्वभावत्वे सत्त्वान्निरुक्तव्यापकतावच्छेदकत्वस्याक्षतत्वात् । एतेन तादृशाधिकरणताव्यापकत्वं न तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं किं तु तादृशाधिकरणविशिष्टान्यत्वं वैशिष्ट्यं च

स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन अवच्छेदकता च निरवच्छिन्नाधेयतासम्बन्धेन आधेयता च हेतुमत्ताग्रहविरोधिताघटकसम्बन्धेन एवं सति सत्तावान् द्रव्यत्वादित्यादौ नाव्याप्तिसम्भव इति निरस्तम् । द्रव्यत्वगुणत्वान्यतरवान् द्रव्यगुणान्यतरत्ववान् वा कर्मत्वाभावादित्यादावतिव्याप्तिः । तथाहि ताद्दशानिरूपकाधिकरणपदेन जात्यादेर्धारणं न सम्भवति तन्निष्ठहेतुमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नाधेयत्वाप्रसिद्धेः किं तु ताद्दशाधिकरणपदेन कर्मण एव ग्रहणं तद्विशिष्टान्यत्वस्य हेत्वभावे सत्त्वादिति । यदि च साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठाधिकरणतासामान्ये हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वहेतुमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वैतदुभयाभावः तद्धर्मभिन्नहेतुतावच्छेदकवत्त्वमेव व्याप्तिः । तथा च धूमवान् वह्नेरित्यादावयोगोलकनिष्ठाधिकरणतासामान्ये एव विशेषणताविशेषसम्बन्धावच्छिन्नत्ववह्न्यभावत्वावच्छिन्नत्वैतदुभयाभावसत्त्वाद्यद्धर्मपदेन वह्नित्वं धर्तुं शक्यते तद्धर्मभिन्नो न हेतुतावच्छेदकः । वह्निमान् धूमादित्यत्र तु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणतायां धूमाभावत्वावच्छिन्नत्वविशेषणताविशेषरूपहेतुमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वैतदुभयोः सत्त्वात् यद्धर्मपदेन धूमत्वं धर्तुं न शक्यते । अधिकरणत्वं तु निरवच्छिन्नं ग्राह्यम् । अन्यथा धूमवान् वह्नेरित्यत्र संयोगेन वह्नेरव्याप्यवृत्तित्वात् अयोगोलकनिष्ठाधिकरणतायां वह्न्यभावत्वावच्छिन्नत्वविशेषणताविशेषसम्बन्धावच्छिन्नत्वैतदुभयोः सत्त्वे ऽपि अयोगोलकनिष्ठनिरवच्छिन्नाधिकरणतायां ताद्दशोभयाभावसत्त्वान्नातिव्याप्तिरित्युच्यते तदास्य सामान्यपदघटितत्वेन यद्धर्मावच्छिन्नाधिकरणत्वाभावत्वेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वापेक्षया गुरुत्वेनानुत्थितेः । वस्तुतः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं न देयम् । किं तु वह्निमान् धूमादित्यादावव्याप्तिवारणाय हेतुनिष्ठत्वहेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वैतदुभयाभावस्य निवेश्यत्वान्न सम्बन्धान्तरावच्छिन्नवृत्तित्वमादाय वह्निमान् धूमादित्यादावव्याप्तिः । सत्तावान् द्रव्यत्वादित्यादौ समवायसम्बन्धावच्छिन्नताद्दशवृत्तित्वाप्रसिद्धावपि स्वरूपसम्बन्धावच्छिन्नवृत्ति-

त्वस्य तादृशत्वान्न दोषः । यद्यपि सत्तावान् समवायेन प्रमेयादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणसामान्यादिनिरूपितनिरुक्तोभयाभाववद्वृत्तित्वाप्रसिद्धिः । तथापि हेत्वभावाभावत्वावच्छिन्नत्वहेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वैतदुभयाभावस्य विवक्षितत्वात् । सामान्यादिनिरूपितवाच्यत्वत्वावच्छिन्नवृत्तितायाः प्रसिद्धत्वान्न कोपि दोषः । परे तु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणनिष्ठाधिकरणतानिरूपकतावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकं यद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात् । अधिकरणता च न सम्बन्धविशेषेण निवेशनीया संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावाभावत्वस्य संयोगातिरिक्तसम्बन्धेन अधिकरणतानिरूपकतानवच्छेदकत्वात् वह्निमान् धूमादित्यादावव्याप्तेरभावात् । एकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावत्वस्यान्यसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वास्वीकारात् । अत एव कपालस्य समवायेन घटत्वावच्छिन्नवत्त्वे ऽपि संयोगसम्बन्धावच्छिन्नघटाभावाभावत्वावच्छिन्नवत्त्वाप्रसिद्ध्यैव ताद्रूप्येण प्रमात्वासम्भवात् संयोगादिसम्बन्धेनैव तादृशघटाभावाभावत्वावच्छिन्नाधिकरणतायाः पारमार्थिकत्वादिति केवलान्वयिग्रन्थे जगदीशेन समाहितमिति। तच्चिन्त्यम् ॥५॥

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमित्यत्र सत्तावान् द्रव्यत्वादित्यादौ तादृशाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वाप्रसिद्ध्याऽव्याप्तिरतो निष्कृष्टकल्प उक्तः । नन्वत्र हेतुतावच्छेदकसम्बन्धान्यहेतुनिरूपितसम्बन्धान्यसम्बन्धेन तादृशाधिकरणवृत्तित्वं विवक्षणीयम् । तथा सति सत्तावान् द्रव्यत्वादित्यादौ तादृशसम्बन्धः स्वरूप एव तेन सम्बन्धेन तादृशाधिकरणनिरूपितवृत्तित्वं वाच्यत्वादौ प्रसिद्धं तद्भेदस्य हेतौ सत्त्वान्नाव्याप्तिसम्भावनापीति केचित् पूर्वपक्षयन्ति । तन्न । सत्तादौ साध्ये समवायेन प्रमेयत्वेन हेतावव्याप्तेः हेतुतावच्छेदकसम्बन्धान्यहेतुनिरूपितसम्बन्धान्यसम्बन्धः केवलसमवाय एव तेन सम्बन्धेन सत्तानिष्ठाधेयत्वानिरूपकाधिकरणं यत्सामान्यादि तन्निरूपितवृत्तित्वाप्रसिद्धेः । हेतुतावच्छेदकसम्बन्धान्यहेतुतावच्छेदकसम्बन्धप्रतियोगिप्रतियोगिकसम्बन्धान्यसम्बन्धेन वृत्तित्वोक्तौ सत्तावान् प्रमेयादित्यादौ तादृशसम्बन्धः स्वरूप एव तेन सम्बन्धेन साध्यनिष्ठाधेयत्वानिरूपकाधि-

करणसामान्यादिनिरूपितवृत्तित्वस्य प्रमेये सत्त्वादिति ध्येयम् ॥ ७ ॥

चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया इत्यादिव्याख्यानं दीधितिकृता कृतम्। अथात्र तद्दलानुक्तौ यद्धर्मावच्छिन्नाभावः तादृशाधिकरणत्वव्यापक. तद्धर्मवत्त्वमित्यर्थः। अत्र यद्धर्मावच्छिन्नाभावो हेतुतावच्छेदकसम्बन्धेनैव वाच्यः । अन्यथा धूमवान् वह्नेरित्यादौ स्वरूपादिसम्बन्धेन वह्नित्वावच्छिन्नाभावस्यापि तादृशाधिकरणत्वव्यापकत्वादतिव्याप्तिः । नन्वेवं वृत्त्यनियामकसम्बन्धेन हेतुतायां तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या ऽव्याप्तिः वह्न्यादौ साध्ये संयोगेन रूपादिहेतौ तादृशसम्बन्धावच्छिन्नरूपाभावस्य केवलान्वयितया ऽतिव्याप्तिश्च । चरमाधिकरणत्वांशस्योपादाने च हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नसम्बन्धित्वस्य स्वरूपसम्बन्धावच्छिन्नाभावस्य लक्षणाघटकतया नाव्याप्तिः संयोगसम्बन्धावच्छिन्नरूपत्वावच्छिन्नसम्बन्धित्वाप्रसिद्ध्या नातिव्याप्तिश्चेति चेत् । न । हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदः तादृशाधेयत्वानिरूपकाधिकरणत्वव्यापकस्तद्धर्मवत्त्वमित्यर्थकरणादेवाधिकरणत्वांशस्यानतिप्रयोजनकत्वात् । वृत्त्यनियामकसम्बन्धेन हेतुतायां तत्सम्बन्धावच्छिन्नावच्छेदकत्वस्वीकारान्नाव्याप्तिः । संयोगादिसम्बन्धेन रूपसम्बन्ध्यप्रसिद्ध्या तत्सम्बन्धावच्छिन्नरूपानिष्ठावच्छेदकत्वस्यालीकत्वात् नातिव्याप्तिरिति गूढाभिप्रायः ॥ ८ ॥

साध्यानधिकरणानधिकरणत्वमिति लक्षणस्य साध्यं यदधिकरणानधिकरणं तत्त्वाभाव इत्यर्थः। ननु निरुक्तमूलेन तादृशार्थाबोधनात् दीधितिग्रन्थासङ्गतिरिति चेत् । न। अधिकरणमनधिकरणं यस्येति समासेन तादृशार्थलभ्यत्वात् । तथाहि व्यासार्थो यन्निरूपिताधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणम् । समासार्थस्तु अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकम्।साध्यमधिकरणानधिकरणं यस्येति साध्याधिकरणानधिकरणम् । अत्र-व्यासार्थस्तु यन्निरूपिताधिकरणनिष्ठभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकं साध्यमिति । समासार्थस्तु साध्यनिरूपिताधिकरणत्वावच्छिन्नप्रतियोगिताकभेदाश्रयीभूताधिकरणवृत्तित्वमिति भावप्रत्ययात्तादृशवृत्तित्वलाभ. । ततः न साध्याधिकरणानधिकरणमिति नञ्तत्पुरुषः । नञ् च साध्यपदोत्तरनिपातः इ-

स्यर्थस्य भट्टाचार्येण लिखितत्वादिति प्रथमलक्षणार्थप्राप्तिः । साध्यस्यानधिकरणं साध्यवद्भिन्नमिति यावत् । तादृशाधिकरणमाधेयतानिरूपकं यस्य ततो भावप्रत्ययात् साध्यानधिकरणवृत्तित्वलाभः । ततो नञ्समासः । नञ् साध्यानधिकरणपदोत्तरनिपात इति द्वितीयार्थस्य प्राप्तिः । तदुभयमपीत्यादौ साध्य इत्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वाभाव इति दीधितिः । अत्र जागदीशी साध्यानधिकरणेत्यादौ नञ्व्यत्ययेन चरमाधिकरणत्वेन सहान्वयलाभाल्लाभ इति । ननु साध्यानधिकरणानधिकरणत्वशब्देन साध्यं यदधिकरणानधिकरणं तत्त्वाभावस्याबोधनादसङ्गतिरिति चेन्नव्यमते बहुव्रीहिस्थले विग्रहवाक्येन यादृशार्थः प्रत्याय्यते तत्पदार्थवैपरीत्येनान्वयावगाहिबोधः समासेन जन्यते इति व्युत्पत्तेरधिकरणमनधिकरणमाधेयत्वानिरूपकं यस्य साध्यस्येति प्रथमं बहुव्रीहिः । ततोऽधिकरणानधिकरणं यस्य इति तदुत्तरं भावप्रत्ययाच्च नञ्तत्पुरुषः नञ् साध्यपदोत्तरं निपातः तत्प्रथमबहुव्रीहिवाक्येन यत्पदार्थे साध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणमिति बोधः । समासेन तु अधिकरणनिष्ठाभावप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयतावत्साध्यमिति बोधो जन्यते । द्वितीयबहुव्रीहिवाक्येन तु यत्पदोत्तरषष्ठ्यर्थस्य वृत्तितानिरूपकत्वस्याधिकरणांशे ऽवगाहित्वेनोक्तप्रकार एव बोधः । द्वितीयबहुव्रीहिणा तु पुनस्तत्पदार्थे नञ्व्यत्ययेन साध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणनिरूपितत्वं बोध्यते भावप्रत्ययेन तादृशवृत्तित्वमात्रं नञ्तत्पुरुषेण तदभाव इति रीत्या चरमाधिकरणांशविनिर्मुक्तस्य साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपस्य प्रथमलक्षणार्थस्यावगतेः । द्वितीयलक्षणार्थावगतिस्तु पूर्वरीत्या साध्यस्यानधिकरणं साध्यानधिकरणं साध्यवद्भिन्नमिति यावत् तदेवाधिकरणमाधेयतानिरूपकं यस्येति वाक्येन यन्निष्ठाधेयतानिरूपकं साध्यवद्भिन्नमिति बोधः । समासेन तु साध्यवद्भिन्ननिरूपितवृत्तित्वं यत्पदार्थे बोध्यते इति प्राचां समाधानम् ॥ ६ ॥

अत्रोत्पत्तिकालावच्छेदेन घटे पृथिवीत्वे न रूपवद्वृत्तित्वं इति प्रतीत्या पृथिवीत्वादौ रूपवद्वृत्तित्वाभावाभ्युपगमे हेत्वधिकरणनिष्ठावच्छेदकत्वं निरवच्छिन्नं ग्राह्यम् । तेन रूपवान् पृथिवीत्वादित्यादौ

नाव्याप्तिः । तत्र घटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादिति ध्येयमिति जगदीशः । अत्र केचिदाक्षिपन्ति । न च हेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणावच्छेद्यसाध्योपलक्षितनिरूपितवृत्तित्वाभाव एव लक्षणे निवेशनीयः । अन्यथा वह्निप्रागभावे वह्निविशिष्टनिरूपितवृत्तित्वाभावस्य सत्त्वात् वह्निमान् वह्निप्रागभावादित्यादावव्याप्तिः स्यात् । तथा च साध्यविशिष्टनिरूपितवृत्तित्वाभावसत्त्वे ऽपि साध्योपलक्षितनिरूपितवृत्तित्वाभावविरहेण वह्निमान् वह्निप्रागभावादित्यादावव्याप्तिविरहात् कथं हेत्वधिकरणनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं निवेशितमिति वाच्यम् । साध्योपलक्षितनिरूपितवृत्तित्वाभावस्य निवेशे ऽपि वह्निमान् वह्निप्रागभावादित्यादावव्याप्तिवारणार्थे हेत्वधिकरणनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं देयम् । अन्यथा वह्न्यधिकरणकालावच्छेदेन वन्ह्युपलक्षितनिरूपितवृत्तित्वाभावसत्त्वादव्याप्तिरिति ध्येयम् ॥ १० ॥

इति श्रीकालीशङ्करविरचितं सिंहव्याघ्रजागदीशीक्रोडपत्रं समाप्तम् ।



# अथ व्यधिकरणधर्मावच्छिन्नाभावजागदीश्याः

## कालीशङ्करविरचितं क्रोडपत्रम ।

---

नन्विदं वाच्यं(१) ज्ञेयत्वादित्यत्र समवायितया वाच्यत्वाभावरूपस्य साध्याभावस्य प्रसिद्धावपि प्रमेयवान् वाच्यत्वादित्यादिकेवलान्वयिनि तदप्रसिद्धेरनुद्धारान्मूलस्य न्यूनत्वमत आह प्रमेयसाध्यके चेति जगदीशेनोक्तम् । नन्वत्रापि समवायितया वाच्यत्वाभावस्यैव स्वीयलक्षणघटकत्वसम्भवे ऽभावान्तरानुसरणस्य स्वव्यापकसाध्यतावच्छेदकव्यापकप्रतियोगिताकाभावघटितवक्ष्यमाणसार्वभौमीयलक्षणाभिप्रायकतया भावत्वेनाभावाभावीयप्रतियोगित्वस्य प्रमेयत्वरूपसाध्यतावच्छेदकाव्यापकत्वात् भावत्वेनाभावाभावस्य लक्षणाघटकत्वं दुर्वारमेवेति चेन्न । समनियताभावानामैक्यमतेनैव तदभिधानादिति ॥ १ ॥

अथ किं स्वरूपसम्बन्धेन तादात्म्येन वा प्रमेयस्य साध्यतायामभावप्रसिद्धिः कृतेति । नाद्यः । वह्नित्वेन प्रमेयाभावं परित्यज्याव्यवृत्तिमात्रवृत्तिगगनत्वादिना प्रमेयाभावानुधावनस्य सन्दर्भविरोधापत्तेः । नापि द्वितीयः । ननु कालिकसम्बन्धेन प्रमे-

---

(१) नन्वीश्वरेच्छारूपस्य वाच्यत्वस्य गुणत्वेच्छात्वादिसमवायित्वात् समवायित्वं न तद्व्यधिकरणधर्म इत्यत आह वाच्यत्वमिति अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वमेव वाच्यत्वं पदार्थान्तरं वा न तु तादृशेच्छाभावमतिप्रसक्तत्वादिति जगदीशः । अयमाशयः । वाच्यत्वस्येश्वरेच्छारूपत्वे पटस्य घटपदवाच्यतापत्तिः घटपदजन्यबोधविषयत्वप्रकारकभगवदिच्छाया एकत्वेन केवलान्वयितया विषयतासम्बन्धेन पटे ऽपि सत्त्वात् विषयत्वरूपत्वे तु विषयता भिन्नैवेति न प्रसङ्गः । अत्र घटपदजन्यबोधविषयत्वप्रकारकत्वविशिष्टेच्छावत्त्व विषयतासम्बन्धेन न पटस्येति नातिप्रसङ्ग. । न च गुणे गुणान्यत्वविशिष्टसत्तेतिवत् पटे घटपदवाच्यत्वमित्यतिप्रसङ्गो दुर्वार एवेति वाच्यम् । तथापि घटपदजन्यबोधविषयत्वप्रकारतानिरूपितविषयतासम्बन्धेन इच्छावत्त्वमेव वाच्यत्वमस्तु इति चेन्न । विशेषरूपेण संसर्गत्वास्वीकारात् उक्तातिप्रसङ्गवारणासम्भवादिति । केचित्तु इत एवास्वरसादघटादिसमवायित्वेति दीधितिग्रन्थावतार इत्याहुः । विषयताया विषयिरूपत्वे ऽतिप्रसङ्गः विषयरूपत्वे घटादीना समवायित्वमेव इत्यतः पदार्थान्तरमिति ॥

यसाध्यकस्थले कालिकसम्बन्धेन साध्याभावस्य प्रसिद्धिः कार्या इत्यव्यवहितवक्ष्यमाणजागदीश्यसङ्गतेः तादात्म्येन साध्यतायामपि तद्दोषस्य सम्भवे स्थलान्तरानुधावनवैयर्थ्यादिति सम्बन्धसामान्येन साध्यतायामपि तद्दोषस्य जागरूकत्वादिति चेन्न । सम्बन्धसामान्येन साध्यतास्थले एव प्रसिद्धेः कृतत्वात् । ननु कालिकसम्बन्धेन प्रमेयसाध्यकस्थले इत्यादिजगदीशग्रन्थस्य सम्बन्धसामान्यान्तर्गतकालिकसम्बन्धस्यापि साध्यतावच्छेदकसंसर्गत्वमित्यभिप्रायकत्वादिति ॥ २ ॥

अप्रसिद्धिदोषस्यैव सत्त्वान्मूले प्रतियोग्यवृत्तिश्चेत्यादिदोषान्तरं किमर्थं अतः तदवतारार्थं शङ्कते नन्विति । अव्यभिचरितत्वमिति अथेदं वाच्यं ज्ञेयत्वादित्यादिग्रन्थाभिप्रेतमिति शेषः । तथा च न चैवं घट इत्यादिमूलस्य केवलान्वयिनो व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वान्न पूर्वापरमूलासङ्गतिरितिध्येयमिति जगदीशः(१) । अथैवं तर्हि

(१) अस्यायमाशयः। तथा च न चैवं घट एव व्यभिचार इत्यादिमूलस्य च केवलान्वयिनो व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वादित्यत्र तथा चेत्यस्य पारिभाषिकाव्यभिचरितत्वस्य अथेदं वाच्यमित्यादिग्रन्थाभिप्रेतत्वे चेत्यर्थः। तथा च पारिभाषिकाव्यभिचरितत्वस्य अथेदं वाच्यमित्यादिग्रन्थाभिप्रेतत्वे सति न चैवं घट एव व्यभिचार इति मूलस्य केवलान्वयिनो व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वादित्यर्थकसमुदाय' पूर्वापरग्रन्थासङ्गत्यभावे हेतुः पारिभाषिकाव्यभिचरितत्वस्य अथेदं वाच्यमित्यादिग्रन्थानभिप्रेतत्वे व्याप्तेः साध्यसामान्याभावघटितत्वेन समवायित्वेन वाच्यत्वाभावमादाय प्रसिद्ध्यभिधानस्यासङ्गत्यापत्तेरिति पूर्वमूलासङ्गतिसन्निरसनार्थं सत्यन्तं हेतुविशेषणम्। न चैवं घट इत्यादिमूलस्य केवलान्वयिनो व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वाभावे पारिभाषिकाव्यभिचरितत्वस्य व्याप्तित्वे घटान्तर्भावेन तादृशसाध्याभाववद्वृत्तित्वाभिधानमनुचितमेव तच्चाभिप्रेताव्याप्तेः तादृशाभाववद्वृत्तित्वाभावाघटितत्वेन घटान्तर्भावेन हेतौ तादृशाभाववद्वृत्तित्वं न क्षतिकरमिति अपरमूलासङ्गतिसन्निरसने व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वं हेतुः। तथा चाय मूलाशयः। अयं हेतुरलक्ष्यः व्यभिचारित्वादित्यनुमानात् ज्ञेयत्वे ऽलक्ष्यत्वं सिद्धम्। तथा च तत्साधारणपारिभाषिकाव्यभिचरितत्वलक्षणकरणमनुचितमेवेत्यभिप्रेत्याह न चैवं घट एव व्यभिचार इति। साध्यसामान्याभाववद्वृत्तित्वस्यैव व्यभिचाररूपत्वेनालक्ष्यतानुमापकत्वात् प्रकृते च तादृशाभावाप्रसिद्ध्या व्यभिचाराप्रसिद्धिरित्यभिप्रेत्याह साध्यतावच्छेदकावच्छिन्नेत्यादि। व्यभिचारधीविरोधिज्ञानविषयस्यैव व्याप्तित्वेन पारिभाषिकाव्यभिचरितत्वानुधावनं व्यर्थं तज्ज्ञानस्य व्यभिचारज्ञानाविरोधित्वात् इत्यभिप्रेत्याह तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिरिति। पारिभाषिकाव्यभिचरितत्वज्ञानाय व्यभिचारज्ञानं प्रति मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वमस्त्येवेति पारिभाषिकाव्यभिचरितत्वलक्षणमेव करणीयमतस्तदपि खण्डयति प्रतियोग्यवृत्तिश्चेत्यादिना।

तादृशसामानाधिकरण्याभावो व्याप्तिरिति मूलासङ्गतिः । अथेदं वाच्यं ज्ञेयत्वादिग्रन्थस्य पारिभाषिकाव्यभिचरितत्वाभिप्रायकतया तादृशवृत्तित्वसामान्याभावस्य व्याप्तित्वाभिधानानुपयुक्तत्वादिति चेत् । न । अथेदं वाच्यं ज्ञेयत्वादित्यादिमूलस्य पारिभाषिकाव्यभिचरितत्वाभिप्रायकतया न चैवमित्यादिमूलस्याप्यलक्ष्यताप्रदर्शनपरत्वेन च साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यादिग्रन्थस्यालक्ष्यतापरिहारपरत्वात् । ननु अव्यभिचरितत्वस्य पारिभाषिकपरत्वे व्यभिचारधीविरोधिज्ञानविषयस्यैव व्याप्तित्वमिति नियमभङ्गः स्यादित्यत उक्तं मूले तादृशसामानाधिकरण्याभावो व्याप्तिरिति तत्सङ्गतेः। तस्याप्रामाणिकत्वाभिप्रायेण शङ्कते प्रतियोग्यवृत्तिश्चेति॥३॥

अत्र यत्समानाधिकरणा इत्यस्यानुक्तौ साध्यव्यापकतावच्छेदकप्रतियोगिताकस्यात्मत्वसामान्याभावस्यापि यावदन्तर्गतत्वात्तस्य च व्यापकताघटकसमवायसम्बन्धेन प्रतियोग्यधिकरणे केनापि सम्बन्धेनावृत्तित्वादयमात्मा ज्ञानादित्यादावव्याप्तिरतस्तदुपात्तमित्यग्रे स्फुटीभविष्यति इति जागदीशी । ननु सर्वत्रैव गगनाभावाभावस्य तादृशत्वात्तस्य च यावदन्तर्गतस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावादसम्भव इति तत् कथं परित्यक्तमिति चेन्न । तादृशाभावस्य वृत्तिमत्त्वेन विशेषणीयत्वात् । तथा च तादृशाभावस्य गगनरूपतया वृत्तित्वविरहात्तमादाय नासम्भव इति ॥ ४ ॥

ननु व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्त्यभावस्यैकदेशभेदस्य च सर्वैरेव स्वीकारात् । आत्मघटयोर्नात्मत्वमितिप्रतीत्योभयत्वावच्छेदेनात्मन्यप्यात्मत्वसामान्याभावस्य सत्त्वेन तत्र व्यापकताघटकसमवायसम्बन्धेन प्रतियोगिसामानाधिकरण्यसौलभ्यादयमात्मा ज्ञानादित्यत्राव्याप्तिविरहेण कथं तद्वारणाय यत्समानाधिकरणत्वदलं निवेशितमिति। अत्र केचित्। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानभ्युपगमात् । अन्यथा यत्समानाधिकरणदलनिवेशेऽपि धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेर्धूमाद्यभावस्य पर्वतायोगोलकोभयत्वावच्छेदेन पर्वतादौ सत्त्वेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वविरहेण लक्षणाघटकत्वादित्याहुः । तन्न । साध्यव्यापकताघटकसाध्यवद्वृत्तित्वस्य व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणत्वानिरूपितत्वनिवेशेनैव धूमाद्यभा-

वस्य लक्षणघटकतया धूमवान् वह्नेरित्यादावतिव्याप्त्यनवकाशात् व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानभ्युपगमस्यानुचितत्वादिति । अत्रेदं समाधीयते(१) । रूपध्वंसाभावाभावस्य यावदन्तर्गतस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावेन तत्राव्याप्तिरतो यत्समानाधिकरणत्वदलमिति ॥ ५ ॥

ननु वह्निमान् धूमादित्यादावपि प्रलयाभावाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावेनाव्याप्तिसम्भवे ऽयमात्मा ज्ञानादित्यादौ यत्समानाधिकरणत्वदलव्यावृत्तिदानं जगदीशस्यासङ्गतमिति चेन्न । महाप्रलयानङ्गीकारमते ऽव्याप्तिविरहात् तस्य महाकालान्तर्भावेण प्रतियोगिसामानाधिकरण्याच्च । स्वविशिष्टेत्यादेरप्रवेशे तत्राव्याप्तिविरहात् उभयथैवायमात्मा ज्ञानादित्यत्राव्याप्तिसम्भवे ग्रन्थकारस्य तत्राव्याप्तिदानस्य युक्तत्वादिति । केचित्तु महाकालस्यापि हेत्वधिकरणतया तत्र हेतोरसत्वे ऽपि हेतुसम्बन्धित्वात् स्वविशिष्टहेत्वधिकरणमहाकालान्तर्भावेण प्रलयाभावाभावे प्रतियोगिसामानाधिकरण्याद्वह्निमान् धूमादित्यादावव्याप्तेरेवासम्भवादित्याहुः ॥ ६ ॥

अथात्र आत्मत्वाभावस्यापि समानकालीनत्वादिसम्बन्धेन प्रतियोगिसमानाधिकरणत्वात् कथमव्याप्तिरुक्तेति । मैवम् । प्रतियोगिसमानाधिकरणा इत्यत्र प्रतियोग्यधिकरणवृत्तित्वस्यैव निवेशात् । सम्बन्धित्वनिवेशे तु गगनाभावाभावस्य समानकालीनत्वादिसम्बन्धेन प्रतियोगिसमानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावं विनापि सर्वत्र लक्षणसमन्वयात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थानप्रसङ्गः ॥ ७ ॥

न च हेतुसमानाधिकरणा इत्यपहाय साध्यसमानाधिकरणा यावन्तस्तादृशाभावाः स्वविशिष्टयद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणास्तद्धर्मवत्त्वमित्येव लक्षणं कुतो न कृतमिति वाच्यम् । द्रव्यमात्मत्वादित्यादौ महाकाले साध्यसमानाधिकरणस्य द्रव्यत्वादिसामान्याभावस्य स्वविशिष्टहेत्वधिकरणाप्र-

(१) अत्र केचित् आत्मभेदमादाय अयमात्मा ज्ञानादित्यादावव्याप्तिः स्यात् यदि यत्समानाधिकरणत्वदलप्रवेशो न स्यात् तत्र व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदस्यानुपगमात् । अत एवावयवग्रन्थे घटपटौ न घट इति प्रतीतेरसिद्धेरित्युक्तमित्याहुः ।

सिद्ध्याऽव्याप्तिप्रसङ्गात् । दैशिकविशेषणतया साध्यसामानाधिकरण्योक्तौ च गौरवादिति जगदीशः(१) । अथात्र दैशिकविशेषणतया साध्यसामानाधिकरण्योक्तावपि द्रव्यत्वात्मत्वोभयाभावस्यापि तादृशस्य स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्याऽव्याप्तितादवस्थ्येन कथं गौरवमित्युक्तमिति चेत् । न । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन साध्याधिकरणवृत्त्यभावस्य विशेषणीयत्वादिति । केचित्तु स्वप्रतियोगिसामानाधिकरण्यजगद्वृत्तिभिन्नत्वोभयाभाववत्त्वस्याभावविशेषणत्वान्नोक्ताभावमादायाव्याप्तिरित्याहुः । न च तथापि समनियताभावैक्यमते अयमात्मा आत्मगगनान्यतरत्वादित्यत्रातिव्याप्तिः व्यधिकरणधर्मावच्छिन्नाभावस्यैव तत्र साध्यसमानाधिकरणतया तस्य च यावत एव वाच्यत्वादिरूपप्रतियोगिसामानाधिकरण्यादिति वाच्यम् । समनियताभावानामैक्यमनङ्गीकृत्यैव गौरवाभिधानादिति ध्येयम् ॥ ८ ॥

यत्तु यत्समानाधिकरणा यावन्तस्तादृशाभावाः साध्यसमानाधिकरणास्तत्त्वमित्येव लक्षणमस्तु स्वस्वप्रतियोगिसामानाधिकरण्यप्रवेशे बीजाभाव इति । तत्तुच्छम् । तथा सति यत्समानाधिकरणा यावन्तोऽभावाः साध्यसमानाधिकरणा इत्यस्यैव सम्यक्त्वे साध्य-

---

(१) न च साध्यसमानाधिकरणत्वप्रवेशे न लाघवमिति वाच्यम् । अनुगमे लाघवात् तथाहि साध्यतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वमिति तत्कल्पस्यार्थः । साध्यतावच्छेदकवैशिष्ट्यञ्चाभावे स्वावच्छिन्नसामानाधिकरण्यस्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वैतदुभयसम्बन्धेन स्व साध्यतावच्छेदकम् । अभावत्वव्यापकत्वञ्चाभावे स्वतादात्म्यस्वविशिष्टहेत्वधिकरणत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वकूटत्वावच्छिन्नवत्त्वैतदुभयसम्बन्धेन स्वमभावे । कूटत्वावच्छिन्नवत्त्वं च स्वनिरूपिताधेयताविशिष्टाधेयतावत्त्वसम्बन्धेन आधेयतावैशिष्ट्यमाधेयतायां स्वाश्रयाभावनिरूपितप्रतियोगिताविशिष्टनिरूपकतानिरूपिताधिकरणतावन्निरूपितत्वस्वतादात्म्यैतदुभयसम्बन्धेन स्वमाधेयता । प्रतियोगितावैशिष्ट्यं निरूपकतायां स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वैतदुभयसम्बन्धेन स्व प्रतियोगितेति । यत्समानाधिकरणेत्यादिलक्षणार्थस्तु हेतुतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वम् । अभावे हेतुतावच्छेदकवैशिष्ट्यं स्वावच्छिन्नसामानाधिकरण्यस्वकालीनसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वैतदुभयसम्बन्धेन स्व हेतुतावच्छेदकम् । अभावत्वव्यापकत्वं पूर्ववत् । एवं च वैशिष्ट्यघटके सम्बन्धांशे कालीनत्वमधिकं पतित साध्यसामानाधिकरण्येत्यादिकल्पे तु न तस्य प्रवेश इति एतत्कल्पस्य लाघवमिति सङ्क्षेपः ।

व्यापकतावच्छेदकप्रतियोगिताका इत्यस्य व्यर्थत्वापत्तेरिति जगदीशः। अथ यावत्पदोपादाने ऽपि कालो गोमान् गोत्वादित्यादौ अतिव्याप्तिवारकतया हेत्वधिकरणावच्छेदेन साध्यसामानाधिकरण्यं वक्तव्यम्। अन्यथा गवाद्यभावस्यापि सृष्टिकालाद्यवच्छेदेन साध्यसमानाधिकरणत्वेनातिव्याप्त्यापत्तेः। इत्थञ्च यः कश्चिदभावो हेत्वधिकरणावच्छेदेन साध्यसमानाधिकरण इत्यस्यैव सम्यक्त्वे यावदन्तस्य वैयर्थ्यं कथं नोक्तं जगदीशेनेति चेन्न। साध्याधिकरणवृत्तित्वस्य दैशिकविशेषणतासम्बन्धेन वाच्यतया कालो गोमान् गोत्वादित्यादौ प्रलयान्यत्वाद्यभावस्य प्रलयत्वादिस्वरूपस्य दैशिकविशेषणतासम्बन्धेन साध्याधिकरणे ऽवृत्तितया अतिव्याप्तिविरहेण एतन्मते हेत्वधिकरणावच्छेदेन साध्यसामानाधिकरण्यस्यानुक्तत्वादिति। तथा च यावत्पदानुक्तौ घटाद्यभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेरिति। न च वह्न्यादिसामान्याभावमादाय वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम्। हेत्वधिकरणवृत्तित्वस्यापि दैशिकविशेषणतया वाच्यत्वादिति ध्येयम्। केचित्तु व्यापकत्वदलवैयर्थ्यकथनस्य प्रतियोग्यवृत्तीत्यादिमूलासङ्गत्या प्रकृतोपयोगित्वं यावत्पदस्य वैयर्थ्यकथनं तु न प्रकृतोपयोगि इत्यतस्तन्नोक्तं जगदीशेन। अत एवावयवग्रन्थे प्रतिज्ञालक्षणे अवयवत्वघटकविशेष्यदलपरित्यागमात्रेणैव व्यावृत्तिः सङ्गच्छत इति तादृशजनकतापर्यन्तानिवेशने प्रतिज्ञाद्यघटकत्वदलपरित्यागसम्भवे ऽपि तत्परित्यागस्य प्रकृतानुपयुक्तत्वमित्येतल्लाभायावयवाघटकेत्यभिहितमिति दीधितिग्रन्थसङ्गतिर्दर्शिता गदाधरभट्टाचार्येण इत्याहुः ॥ ९ ॥

अथात्र प्रतियोगिसामानाधिकरण्यघटितलक्षणे ऽपि विशिष्टाभावोभयाभावादिकमादाय व्यधिकरणधर्मावच्छिन्नाभावासत्त्वे ऽपि लक्षणगमनसम्भवेन प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्गस्य स्वयं वक्ष्यमाणत्वेन इदानीमेतत्कल्पे तदभिधानमनुचितमिति चेत्। न। एतल्लक्षणकृन्मते विशिष्टाभावस्य प्रतियोगित्वं वैशिष्ट्ये उभयाभावस्य प्रतियोगित्वं यदभावप्रयुक्तोभयाभावस्तस्मिन्नेव स्वीक्रियते विशिष्टाभावस्य विशेष्यप्रतियोगिकत्वमुभयाभावस्य उभयप्रतियोगिकत्वमितिमतानुसारेण बीजमात्रमुपन्यस्य तत्तदभिधानादिति। एवञ्च कस्यचिन्मते एतल्लक्षणे ऽपि व्यधिकरणधर्मावच्छि-

अभावोऽतिथिनिरस्त्येव साध्यसामानाधिकरण्यघटितलक्षणे तदपि नास्तीति भावः ॥ १० ॥

अथात्र यत्समानाधिकरणा यावन्तस्तादृशाभावा भावभिन्ना इत्यस्यैव सम्यक्त्वे स्वस्वप्रतियोगिसामानाधिकरण्यप्रवेशो व्यर्थ इति । हेत्वधिकरणवृत्तित्वञ्च विशेषणतया बोध्यम् । तेन वह्निसंयोगात्मकाभावमादाय वह्निमान् धूमादित्यादौ नाव्याप्तिरिति । न च तथापि प्रतियोगिवैयधिकरण्यघटितव्यापकताकल्पे पर्वत इति यत्किञ्चिज्जन्यज्ञानविषयत्वाभावाभावस्य भावभिन्नत्वाभावेन तमादाय वह्निमान् धूमादित्यादावसम्भव इति वाच्यम् । प्रतियोगिवैयधिकरण्याघटितव्यापकत्वस्यानुसरणीयत्वादिति । अत्रोच्यते । सप्तपदार्थातिरिक्तपदार्थस्यानभ्युपगन्तृमते अभावत्वस्याभाववृत्तिप्रतियोगित्वादेश्चाभावात्मकतया घटाभावभिन्नमभावत्वादित्यत्रातिव्याप्तिः हेत्वधिकरणवृत्त्यभावमात्रस्यैव भावभिन्नत्वादिति ॥ ११ ॥

अथ यत्समानाधिकरणा यावन्तस्तादृशाभावाः प्रतियोगिवृत्तय इत्यस्य सम्यक्त्वे कृतं गुरुतरस्वस्वप्रतियोगिसामानाधिकरण्यनिवेशनेति चेन्न । वह्निमान् धूमादित्यादौ साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य वाच्यत्ववृत्तित्वविशिष्टवाच्यत्वाभावस्य गगनाभावयत्किञ्चिद्धेत्वधिकरणान्यत्वैतदुभयाभावस्य च प्रतियोगिवृत्तित्वाभावेनासम्भवापत्तेरिति ॥ १२ ॥

यदपि यत्समानाधिकरणाः साध्यव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावा दैशिकविशेषणतयोभयवृत्तयस्तत्त्वमित्येवास्तु लक्षणं स्वस्वप्रतियोगिसामानाधिकरण्यान्तर्भावे गौरवात् हेतुसमानाधिकरणस्य तत्तदयोगोलकान्यत्वाभावस्यैव दैशिकविशेषणतयोभयवृत्तित्वविरहाद्धूमवान् वह्नेरित्यादावतिव्याप्तिविरहात् (१) ।

(१) उभयवृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वं भेदे च प्रतियोगितावदन्यत्वं विशेषणं देयम् । तेन उभयभेदमादाय न दोषः । प्रतियोगितावत्ता च स्वनिरूपकत्वस्वसामानाधिकरण्योभयसम्बन्धेन । आधेयतासम्बन्धेन उभयवत्त्वमेवोभयवृत्तित्वमित्यपि केचित् । अथात्र अयोगोलकान्यत्वाभावस्यायोगोलकत्वस्वरूपतया तस्य स्वरूपेणोभयवृत्तित्वविरहादेव नातिव्याप्तिः सम्भवतीति तत्तदयोगोलकान्यत्वाभावमादायातिव्याप्तिवारणं कथं कृतमिति चेत् । न । अभावाभावस्यातिरिक्तत्वमते तस्य स्वरूपेणोभयवृत्तित्वात् उभयसत्त्वाभावस्यानुयोगिना तत्तदयोगोलकान्यत्वाभावस्यावृत्तेश्च यद्वत्वादिति ।

तन्मन्दम् । हेतुसमानाधिकरणस्य वह्निसंयोगात्मकाभावस्य दैशिकविशेषणतयोभयवृत्तित्वविरहाद्वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गात् । न च भावभिन्नस्यैव हेतुसमानाधिकरणाभावस्य प्रवेशे नैष दोषः । तद्घटभिन्नं घटत्वादित्यादावतिव्याप्त्यापत्तेः । तद्घटभिन्नत्वाद्यभावस्य तद्घटत्वादिस्वरूपत्वेन भावत्वात् पटत्वादिना तद्घटभिन्नत्वाद्यभावस्योभयवृत्तित्वादलं पल्लवितेन इति जगदीशः(१) । अत्र कल्पे यावत्पदानुक्तौ धूमवान् वह्नेरित्यादावतिव्याप्तिः

---

(१) नन्वत्र संयोगाभावाभावमादायापि दोषसम्भवे कथं वह्निसंयोगाद्यात्मकाभावपर्यन्तानुधावनमिति चेत । अत्राहुः । संयोगाभावस्य द्रव्ये ऽनङ्गीकर्तृणां प्राचां नये तत्र प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकप्रतियोगिताकत्वाभावात् । वस्तुत. वह्न्यात्मकसंयोगात्मकाभावमादायेति तस्यार्थ इति न काप्यनुपपत्तिरिति ।

अथात्र धूमवान् वह्नेरित्यादिप्रसिद्धस्थल एवातिव्याप्तिसम्भवे तद्घटभिन्नं घटत्वादित्यादिस्थलान्तरानुधावनं कथं कृत तदयोगोलकान्यत्वाभावस्य तदयोगोलकत्वस्वरूपत्वेन भावत्वादिति चेत् । न । तदयोगोलकवृत्तिरूपध्वंसस्वरूपाभावमादाय तथातिव्याप्तिविरहात् । न च तद्घटभिन्नं घटत्वादित्यत्रापि तद्घटवृत्तिरूपध्वंसात्मकाभावमादाय नातिव्याप्तिरिति वाच्यम् । यत्र घटनाशात् पूर्वं गुणनाशो न जातः तद्घटभेदस्यैव साध्यत्वात् अथवा अत एवास्वरसादादिपदमुपात्तं तेन तद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तिरिति ध्येयम् ।

नन्वत्र स्वमते ऽपि भावभिन्नत्वस्य निवेश्यतया तत्राप्युक्तातिव्याप्तिरस्त्येवेति तद्घटभेदाभावस्य भावभिन्नत्वाभावात् पटत्वेन तद्घटभेदाभावस्य च पटत्वेन वाच्यत्वाभावतया प्रतियोगिसामानाधिकरण्यात् पारिभाषिकभावभिन्नत्वस्य निवेशे मन्मते ऽपि तथावक्तुं शक्यत्वात् तद्घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य तद्घटत्वस्वरूपत्वात् मन्मते ऽपि तादृशाभावस्य धर्तुं शक्यत्वाच्चेति चेत् । न । स्वमते पटवृत्तित्वविशिष्टतद्घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावमादायातिव्याप्तेरुद्धारात यदपिकल्पकृन्मते तु तादृशाभावस्योभयवृत्तित्वात् । न च विशिष्टाभावमात्रस्य वक्ष्यमाणस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविरहेण ग्रहीतुमशक्यतया कथमतिव्याप्त्युद्धार' स्वमतेऽपीति वाच्यम् । स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वपदेन स्वन्यूनवृत्तिधर्मावच्छिन्नत्वसाध्यवत्त्वप्रकारकप्रमाविशेष्यत्वावृत्तित्वोभयाभावस्य विवक्षितत्वात् यथोक्तप्रतियोगितायाञ्च स्वन्यूनवृत्तिधर्मावच्छिन्नत्वसत्त्वे ऽपि साध्यवत्त्वप्रकारकप्रमाविशेष्यत्वावृत्तित्वविरहेण उभयाभावसत्त्वादिति केचित् ।

अथैतत्कल्पस्य साध्यवद्वृत्तिभावप्रतियोगिप्रतियोगिकान्यत्वरूपभावभिन्नत्वनिवेशेनैव परिष्कारो भवेदिति । न च अयोगोलकभेदाभावस्यापि कालिकेन साध्यवद्वृत्तिभावत्वादतिव्याप्तिरिति वाच्यम् । स्वप्रतिमत्त्वबुद्धेर्विरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वस्य विवक्षणीयत्वादिति । मैवम् । वह्निमान् धूमादित्यादौ वह्निसंयोगात्मकाभावमादाय पुनरव्याप्तेः अव्याप्यवृत्तित्वज्ञानस्यानुत्तेजकतामते निरवच्छिन्नसमवायस्यैव स्वप्रतियोगि-

इदानीं तु यावदन्तर्गतस्य तत्तद्योगोलकान्यत्वाभावस्य तदीयरूपध्वंसवदन्यत्वाभावस्य च विशेषणतयोभयवृत्तित्वाभावान्नातिव्याप्तिः । यत्समानाधिकरणत्वदलानुक्तौ वह्निमान् धूमादित्यादौ तद्धटीयरूपध्वंसवदन्यत्वाभावमादायाव्याप्तिः । व्यापकत्वदलानुक्तौ तत्पर्वतीयरूपध्वंसात्मकाभावमादाय तत्रैवाव्याप्तिः । दैशिकविशेषणत-

---

त्त्वबुद्धिविरोधिताघटकसम्बन्धतया तेन सम्बन्धेन वह्निसंयोगस्य साध्यवद्वृत्तित्वविरहात् ।

न च कालिकदिक्कृतविशेषणताद्यन्यसम्बन्धेन साध्यवद्वृत्तित्वविवक्षणान्नाय दोष इति वाच्यम् । गगनाभावभिन्नमभाववत्वादित्यादौ अतिव्याप्तिः, हेतुसमानाधिकरणाभावत्वस्यैवोभयवृत्तित्वात् सप्तपदार्थातिरिक्तपदार्थानभ्युपगमात् नन्वेवं त्वन्मतेऽपि स एव दोषः गगनाभावभेदाभावस्य गगनाभावस्य घटत्वेन वाच्यत्वाभावरूपतया तस्य वाच्यत्वरूपप्रतियोगिसामानाधिकरण्यादिति चेत् । मैवम् । उक्तरीत्याऽतिव्याप्तिवारणाय प्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायाः केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकानवच्छिन्नत्वोभयाभावस्य निवेश्यत्वात् तथा च वाच्यत्वनिष्ठप्रतियोगितायाः केवलान्वयितानवच्छेदकीभूतगगनाभावभेदाभावत्वरूपानुयोगितानिरूपितगगनाभावभेदनिष्ठप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकगगनाभावभेदत्वानवच्छिन्नत्वोभयोः सत्त्वान्नातिव्याप्तिः वाच्य ज्ञेयत्वादित्यादौ वाच्यत्वत्वेन ज्ञेयत्वाभावमादाय लक्षणसमन्वय । न च प्रमेयवान् वाच्यत्वादित्यादौ उक्तरीत्या अव्याप्तिरिति वाच्यम् । केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वस्य वाच्यत्वात् । तथा च घटत्वेन वाच्यत्वाभावमादाय लक्षणसङ्गतिः । न च गगनाभावभिन्नमभाववत्वादित्यादौ गगनाभावभेदत्वावच्छिन्नवाच्यत्वोभयाभावप्रतियोगितायां तादृशोभयाभावसत्त्वादतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकानवच्छिन्नत्वपदेन स्वावच्छिन्नत्वस्वेतरधर्मानवच्छिन्नत्वोभयसम्बन्धेन साध्यतावच्छेदकवदन्यत्वस्य वाच्यत्वात् तादृशप्रतियोगितायां तदुभयोः सत्त्वात् । न च तत्र स्थले गगनाभावभेदत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां तदुभयाभावसत्त्वात् अतिव्याप्तिरिति वाच्यम् । स्वेतरधर्मानवच्छिन्नस्वावच्छिन्ननिरूपकतानिरूपितानुयोगितानिरूपितत्वघटितत्रितयसम्बन्धस्यैव साध्यतावच्छेदकवदन्यत्वघटकत्वोपगमात् । न चैव भेदवान् वाच्यत्वादित्यादौ तादृशोभयाभाववत्प्रतियोगित्वाप्रसिद्धेरव्याप्तिः भेदत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायां वाच्यत्वत्वावच्छिन्नभेदनिष्ठप्रतियोगितायां च केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितभेदत्वावच्छिन्नगगनाभावनिष्ठप्रतियोगिताकाभावीयत्वसाध्यतावच्छेदकविशिष्टान्यत्वयोः सत्त्वादिति वाच्यम् । केवलान्वयितानवच्छेदकीभूतानुयोगितानिरूपितसाध्यतावच्छेदकविशिष्टप्रतियोगिताकाभावीयत्वस्य उभयाभावप्रतियोगिघटकत्वात् । वैशिष्ट्यं च स्वपर्याप्त्यवच्छेदकताकत्वस्वपर्याप्त्यवच्छेदकताकनिरूपकताकानुयोगिताकत्वोभयरूपं बोध्यम् । न च तत्स्थले केवलान्वयितानवच्छेदकानुयोगितानिरूपिततादृशप्रतियोगित्वाप्रसिद्धिरिति वाच्यम् । घटानुयोगिकस्वरूपावच्छिन्नभेदत्वावच्छिन्नप्रतियोगितायास्तादृशत्वात् अधिकमन्यत्रानुसन्धेयम् ।

येत्यनुक्तौ तत्तद्योगोलकीयरूपध्वंसात्मकाभावस्यापि कालिकादिसम्बन्धेन उभयवृत्तित्वाद्व्यभिचारिण्यनिव्याप्तिरिति । न चात्र कल्पे संयोगाद्यात्मकाभावमादाय सर्वत्रासम्भवसम्भवे तमपहाय कथं वह्निमान् धूमादित्यादावव्याप्तिरित्युक्तं जगदीशेनेति वाच्यम् । प्रमेयवान् घटभेदत्वादित्यादौ लक्षणगमनात् विषयतादेर्वृत्त्यनियामकत्वमते घटभेद इत्याकारकयत्किञ्चिज्ज्ञानाभावाभावस्यापि हेत्वधिकरणावृत्तित्वविरहेण तमादायाव्याप्त्यसम्भवात् ॥ १३ ॥

अथात्र तत्पर्वतवृत्तिरूपध्वंसात्मकाभावस्यापि तादृशयावदन्तर्गतस्य विशेषणतयोभयवृत्तित्वविरहेण वह्निमान् धूमादित्यादावव्याप्तिरिति चेन्न । प्रतियोगिवैयधिकरण्याघटितव्यापकत्वस्यानुशरणीयत्वादिति । अत्रेदं शङ्कते । तद्घटभिन्नं घटत्वादित्यादौ तद्घटवृत्तिरूपध्वंसप्रागभावात्मकाभावस्य यावदन्तर्गतस्य भावभिन्नस्य दैशिकविशेषणतयोभयवृत्तित्वविरहान्नातिव्याप्तिरिति चेन्न । आदिपदेन तद्गुणभिन्नं गुणत्वादित्यादावतिव्याप्तेरुक्तत्वात् । न च तथापि तद्रूपभेदगुणत्वप्रकारकप्रमाविशेष्यत्वैतदन्यतराभावस्य तादृशयावदन्तर्गतस्य भावभिन्नस्य विशेषणतयोभयवृत्तित्वविरहान्नातिव्याप्तिरिति वाच्यम् । विषयत्वस्य ज्ञानासमानकालीनतया तादृशाभावस्याप्रसिद्धेः । न च तद्रूपभेदतत्क्षणवृत्तित्वैतदन्यतराभावस्य तत्क्षणविगमकालावच्छेदेन तद्रूपादौ सत्त्वेन प्रसिद्धतया तादृशयावदन्तर्गतस्य भावभिन्नस्य विशेषणतयोभयवृत्तित्वविरहान्न तत्रातिव्याप्तिरिति वाच्यम् । तदभावस्य तत्क्षणवृत्तित्वाभावविशिष्टतद्रूपत्वस्वरूपत्वेन कल्पनीयतया भावभिन्नत्वाभावात् । अथात्र तद्घटवृत्तिरूपध्वंसात्मकाभावस्यापि कालिकादिसम्बन्धेन हेत्वधिकरणे वृत्तितया साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य विशेषणतयोभयवृत्तित्वविरहाद्वह्निमान् धूमादित्यादावव्याप्तिरिति चेत् । न । भावभिन्नपदेन विशेषणतया हेत्वधिकरणवृत्त्यभावस्य लक्ष्यत्वात्तादृशाभावस्य विशेषणतया हेत्वधिकरणवृत्तित्वविरहेण लक्षणाघटकत्वात् । यदि च भावभिन्नत्वपदेन विशेषणतया हेत्वधिकरणवृत्तित्वविवक्षणे तत्क्षणवृत्तित्वतद्रूपभेदैतदन्यतराभावस्य तद्रूपनिष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगित्वाभावाभावस्य च तादृशसम्बन्धेन हेत्वधिकरणवृत्तितया न तमादाय प्रागुक्तातिव्याप्तिरिति विभाव्यते तदा तत्पर्वतवृत्तिरूपध्वंसाभावविशिष्टवा-

ध्यत्वाभावस्य तादृशरूपध्वंसाभाववाच्यत्वोभयाभावस्य च निरुक्तयावदन्तर्गतस्य भावभिन्नस्य च दैशिकविशेषणतयोभयवृत्तित्वाभावाद्वह्निमान् धूमादित्यादावव्याप्तिरेव एतत्कल्पे दोषो मन्तव्यः। यदि च विशिष्टाभावप्रतियोगित्वं वैशिष्ट्ये उभयाभावस्य प्रतियोगित्वञ्च यदभावप्रयुक्तोभयाभावस्तस्मिन्नेव स्वीक्रियते वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वं वा साध्यव्यापकतावच्छेदकप्रतियोगिताविशेषणं दीयते तदा एतन्मते कोपि दोषो नास्तीति निपुणतरं विभावनीयम् ॥ १४ ॥

अत्र च(१) साध्यवन्निष्ठाभावः प्रतियोगिव्यधिकरणत्वेन विशेषणीयः तेन साध्यवन्मात्र एव समवायित्वावच्छिन्नवाच्यत्वाभावप्रतियोगित्वेन घटाद्यभावस्य सत्त्वे ऽपि न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकाभावस्याप्रसिद्धिः । इत्थञ्च(२) तत्सम्बन्धेन स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो यस्तदन्यत्वे सति तत्सम्बन्धावच्छिन्नाधेयतावच्छेदकत्वरूपं तत्सम्बन्धेन साध्यव्यापकतावच्छेदकत्वमिति जगदीशेनोक्तम् । अथात्र यद्यत्प्रतियोगित्वावच्छिन्नानधिकरणं साध्यवत् तत्तत्प्रतियोगिताभिन्नत्वं साध्यव्यापकतावच्छेदकत्वमित्यस्यैव सम्यक्त्वे साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वपर्यन्तानुधावनं

---

(१) साध्येत्यादि साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदिका यदभावप्रतियोगिता तादृशाभावा इत्यर्थ इति जगदीशेनोक्तम्। तत्र साध्यतावच्छेदकावच्छिन्नत्वस्य प्रयोजनं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणमुक्तम् । अत्र प्रतियोगिवैयधिकरण्याघटितस्यैव कल्पस्य निर्दुष्टतया तत्कल्पे साध्यवन्निष्ठत्वस्य स्वरूपेण निविष्टतया यावदन्तर्गतव्यभिचारिस्थलभेदाभावमादाय नातिव्याप्तिः सम्भवतीति चेत् । न । तत्रातिव्याप्तिवारणे ऽपि घटाभाववृत्तित्वविशिष्टगगनाभाववान् अभावत्वादित्यादौ अतिव्याप्तेः साध्यतावच्छेदकावच्छिन्नत्वमनिवेश्य वारयितुमशक्यत्वात् एवमग्रे ज्ञानवान् द्रव्यत्वादित्यत्रापीदृश एव पूर्वपक्षः ईदृशमेव चोत्तरं बोध्यम्।

(२) अथात्र साध्यवन्निष्ठाभावस्य सामान्यतः प्रतियोगिव्यधिकरणत्वेन निवेशनैव वह्न्यभावीयप्रतियोगित्वेन घटाद्यभावमादायासम्भववारणासम्भवात् इत्थञ्चेत्यादिग्रन्थानुत्थितिप्रसङ्गः तादृशाभावस्य केवलान्वयितया प्रतियोगिसमानाधिकरणत्वात् इति चेत्। मैवम् । जलसंयोगस्वरूपाभावमादाय नित्यगुणाद्यधिकरणकसंद्धेतौ ऽव्याप्तिप्रसङ्गात् तादृशाभावस्य प्रतियोगिव्यधिकरणत्वाभावेन व्यापकतावच्छेदकप्रतियोगिताकत्वादिति ध्येयम्।

अथात्र स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठेत्यादिकमेव निवेश्यतां किं तत्सम्बन्धेनेति कथनेनेति चेत्। न। घटवान् महाकालत्वादित्यादौ महाकालानुयोगिककालिकेन साध्यतायां स्वावच्छिन्नानधिकरणसाध्यवतोऽप्रसिद्धेरिति केचित्।

व्यर्थमिति चेन्न । व्यापकतावच्छेदकत्वपदेन अधिकरणनिष्ठाभाव-प्रतियोगितानवच्छेदकत्वस्यैव प्रतीयमानत्वेन तदनुक्तौ व्यापकता-वच्छेदकत्वपदस्य पारिभाषिकत्वापत्त्या जगदीशेन तत्परित्यक्त-त्वात् व्यापकतापदस्य पारिभाषिकत्वं स्वीकृत्य लाघवमात्रानुरो-धेन भट्टाचार्येण तथैवोक्तत्वाच्च ॥ १५ ॥

अथात्र कल्पे प्रतियोगिव्यधिकरणत्वेनाभावस्य विशेषणीयत्वेऽपि समवायित्वेन वाच्यत्वाभावप्रतियोग्यधिकरणत्वेन घटादि-भेदस्य साध्याधिकरणे सत्त्वेन पुनरप्रसिद्धितादवस्थ्यमिति चेत् । न । साध्याधिकरणवृत्तिताहशाभावप्रतियोगितावच्छेदिका या या प्रतियोगिता तदन्यत्वस्य व्यापकतावच्छेदकत्वपदेन विवक्षितत्वा-त् । साध्याधिकरणवृत्तित्वं च स्वनिष्ठावच्छेदकताकप्रतियोगिता-कभेदवत्त्वसम्बन्धेन । अवच्छेदकता च स्वावच्छिन्ननिरूपकताका-धिकरणत्वसम्बन्धेन । स्वं साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वे-नाभिमता प्रतियोगिता । न च तथापि स्वावच्छिन्ननिरूपकताकाधि-करणत्वसम्बन्धेन समवायित्वेन वाच्यत्वाभावप्रतियोगित्ववद्-घटादिभेदस्यापि संसर्गतया ताहशप्रतियोगित्वस्यापि साध्याधि-करणवृत्तित्वेन पुनरप्रसिद्धितादवस्थ्यमिति वाच्यम् । प्रतियो-गितायाः अन्यूनानतिरिक्तवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्यैव संसर्गत्वाभ्युपगमात् । लब्धार्थिका सती रूढिरित्यादिपङ्क्तिव्याख्या-नावसरे पङ्कजशब्दार्थविचारप्रस्तावे एतस्य स्वयमेवोक्तत्वाच्च ॥१६॥

अथात्र लघुरूपसमनियतगुरुधर्मस्य प्रतियोगितावच्छेदकत्वा-स्वीकर्तृनये घटाद्यभावप्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकत्वं घटत्वावच्छिन्नप्रतियोगित्वापेक्षया लघुनि घटत्वे एव स्वीकरणीयम् । तथा च घटाद्यभावप्रतियोगित्वस्य साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकभिन्नत्वेन घटाद्यभावस्य सा-ध्यव्यापकतावच्छेदकप्रतियोगिताकतया यावदन्तर्गतस्य स्ववि-शिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसामानाधिकरण्यादसम्भव इति चेत् । न । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यानुशरणीय-त्वात् । तथा च यत्किञ्चित्साध्याधिकरणावृत्तिस्वविशिष्टसामा-न्यिका या या प्रतियोगिता तदन्यत्वं साध्यव्यापकतावच्छेदकत्व-मिति समुदितार्थः । इत्थञ्च घटाद्यभावप्रतियोगिताविशिष्टसा-मान्यस्यैव साध्याधिकरणावृत्तितया तदन्यत्वस्य घटाद्यभावप्रतियो-

गित्वे ऽसत्त्वेन घटाद्यभावस्य लक्षणाघटकत्वमिति सर्वं सुस्थितम् ॥१६॥

वस्तुतः साध्यवन्निष्ठाभावस्य तत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमेव तत्सम्बन्धेन साध्यव्यापकतावच्छेदकत्वं वाच्यम् । तत्र साध्यवन्निष्ठत्वमभावस्य स्वरूपसम्बन्धेन ग्राह्यम् । तेन स्पन्दः कालत्वादित्यादौ स्पन्दत्वाभावस्यापि कालिकसम्बन्धेन साध्यवति वृत्त्या यावदनन्तर्गतत्वेन वाच्यत्वाद्यभावस्य च तादृशस्य प्रतियोगिसामानाधिकरण्ये ऽपि न क्षतिः । इत्थञ्च जातिसामान्याभावादेरपि वह्न्यादिव्यापकतया तत्प्रतियोगिकस्य जात्यादिस्वरूपस्य हेतुसमानाधिकरणाभावस्य प्रतियोगिसामानाधिकरण्याभावादसम्भवापत्तेरतोऽभावा इत्युक्तम् । भावभिन्ना इति च तदर्थ इति जगदीशेनोक्तम्(१) । न च प्रमेयवान् घटाभावत्वादित्यादौ जातिस्वरूपाभावस्य हेत्वधिकरणवृत्तित्वाभावेन लक्षणाघटकतयाऽभावान्तरमादाय लक्षणसमन्वयात् कथमसम्भवापत्तिरित्युक्तं जगदीशेन अव्याप्त्यापत्तिरित्यस्यैव वक्तुमुचितत्वादिति वाच्यम् । विषयतादेर्वृत्तिनियामकत्वमते घटाभावानुयोगिकविषयतासम्बन्धेन नित्यज्ञानाभावाभावस्य व्यभिचारित्वादिसम्बन्धस्य वृत्तिनियामकत्वमते जातिसामान्याभावाभावस्यापि तादृशसम्बन्धेन हेत्वधिकरणवृत्तितया तमादायोक्तस्थले ऽपि लक्षणागमनासम्भवात् ॥ १७ ॥

अथ घटत्वेन जातिसामान्याभावाभावस्यातिरिक्तस्य तादृशतया तस्य च स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावात्पुनरसम्भवापत्तिरिति चेत् । न । भावभिन्नत्वपदेन साध्यवद्वृत्तिभावप्रतियोगिप्रतियोगिकान्यत्वस्य विवक्षितत्वात् । अत एव मनोन्यत्वाद्यभावस्यातथात्वान्नातिप्रसङ्ग इति दीधितिकारोक्तमपि सङ्गच्छते । साध्यवद्वृत्तिभावरूपाभावप्रतियोगी प्रतियोगी यस्येति विग्रहः भावप्रतियोगिप्रतियोगिकान्यत्वोक्तौ मनस्त्वात्मकस्य मनोभेदाभावस्य तद्विरहात् पुनर्दीधितिकारोक्तास-

(१) न चात्र कल्पे विषयितया गुणत्वाभावस्य साध्यत्वे तज्ज्ञानत्वादिहेतौ तादृशगुणत्वाभाववद्भेदाभावमादायाव्याप्तिरिति वाच्यम् । व्यापकताघटकसम्बन्धेन साध्यवद्वृत्तितावच्छेदकत्वस्य प्रतियोगितायां विवक्षितत्वात् । इत्थं च जातिसामान्याभावाभावस्य वाच्यं ज्ञेयत्वादित्यादौ पर्वतत्वाभावाभावस्य च वह्निमान् धूमादित्यादौ लक्षणघटकत्वात् भावभिन्नत्वपर्यन्तानुसरणमिति केचित् ।

ङ्गतिरत उक्तं साध्यवद्वृत्तीति । प्रतियोगिप्रतियोगिकान्यत्वोक्तौ च तादृशाभावाप्रसिद्धिरत उक्तं भाव इति । ननु साध्यवद्वृत्तिभावप्रतियोगिप्रतियोगिकान्यत्वरूपभावभिन्नत्वनिवेशे ऽपि पृथिवीत्वमनस्त्वैतदन्यतरस्वरूपस्यान्यतराभावाभावस्य साध्यवद्वृत्ति यत्पृथिवीत्वं तत्प्रतियोगिप्रतियोगिकत्वेन मनस्त्वस्वरूपाभावस्य भावभिन्नत्वविरहात् दीधितिकारोक्तासङ्गतितादवस्थ्यमिति । न च घटत्वेन मनोन्यत्वाभाव एव तादृशभावभिन्न इति वाच्यम् । तस्यापि पृथिवीत्वं पूर्वक्षणावृत्तित्वविशिष्टः घटत्वेन मनोन्यत्वाभाव एतदन्यतरस्वरूपाभावमादाय साध्यवद्वृत्तिभावप्रतियोगिप्रतियोगिकत्वादिति चेत् । न । साध्यवद्वृत्तिभावप्रतियोगिनिष्ठं यत्प्रतियोगित्वं तदन्यप्रतियोगिताको योऽभावः स एव भावभिन्नः अभाव इत्यर्थस्यैव पर्यवसितत्वादिति । साध्यवद्वृत्तिभावश्च साध्यव्यापकताघटकसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । तेन घटत्वेन वाच्यत्वाद्यभावस्य पर्वतभिन्नभेदस्य पर्वतत्वस्वरूपत्वेन साध्यवद्वृत्तिभावत्वात् तत्तत्प्रतियोगिप्रतियोगिकत्वे ऽपि न लक्षणाघटकत्वम् । वस्तुतो भावभिन्नपदेन साध्यवद्वृत्तिभावीयप्रतियोगितावच्छेदकप्रतियोगिताकान्यत्वस्य विवक्षणान्न को ऽपि दोष इत्याहुः । तच्चिन्त्यम् । साध्यवद्वृत्तित्वं यदि येन केनापि सम्बन्धेनोच्यते तदा मनस्त्वस्वरूपस्य मनोभेदाभावस्य कालिकादिसम्बन्धेन साध्यवद्वृत्तित्वेन मनोन्यत्वाद्यभावस्यातथात्वान्नातिव्याप्तिप्रसङ्ग इति दीधितिकारोक्तासङ्गतिः रूपभिन्नं गुणत्वादित्यादौ रूपत्वस्वरूपाभावस्यातथात्वादतिव्याप्तिश्च । यदि स्वरूपसम्बन्धेन साध्यवद्वृत्तित्वं विवक्ष्यते तदा जातिसामान्याभावाभावमादाय पुनरसम्भवतादवस्थ्यम् । तस्मात् स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वं वाच्यम् । तथा सति मनस्त्वस्य मनोन्यत्वाभावीयप्रतियोगिमत्ताग्रहविरोधिताघटकसमवायसम्बन्धेन साध्यवद्वृत्तित्वविरहेण मनोन्यत्वाभावस्य निरुक्तभावभिन्नत्वमस्त्येवेति नासङ्गतिः । जातिस्वरूपाभावस्य स्वीयप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तितया जातिसामान्याभावाभावस्य लक्षणाघटकत्वमिति बोध्यम् । एवञ्च व्यापकताघटकीभूतसाध्यवन्निष्ठत्वमेव स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन वाच्यम् । तावतैव जात्यादिस्वरूपाभावस्य लक्षणाघटकतयाऽसम्भववारणसम्भवात् भावभिन्नत्वदलं व्यर्थमिति

पूर्वपक्षो दुर्वार इति सुधीभिर्विभावनीयम्(१) । केचित्तु स्वाभावत्वं स्वप्रतियोगित्वमितिमते समानाधिकरणधर्मावच्छिन्नप्रतियोगित्वस्य प्रतियोगितावच्छेदकस्वरूपत्वेन जातिसामान्याभावत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाभावस्य जातिस्वरूपत्वे ऽपि घटत्वेन जातिसामान्याभावाभावीयप्रतियोगित्वस्यातिरिक्ततया तदवच्छिन्नाभावस्य जात्यनात्मकतया घटत्वेन जातिसामान्याभावाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन लक्षणाघटकत्वात् तमादाय नासम्भव इति प्राहुः । तदपि न मनोरमम् । एवमपि द्वितीयलक्षणे जात्यभावत्वेन घटाद्यभावमादायासम्भवस्य दुर्वारत्वादिति ध्येयम् । परे तु समनियताभावानामैक्यमते घटत्वादिना जातिसामान्याभावाभावस्यैव घटत्वादिना वाच्यत्वाद्यभावस्वरूपतया तस्य च वाच्यत्वादिरूपप्रतियोगिसामानाधिकरण्यान्नासम्भवशङ्काप्यस्ति भावभिन्नत्वं साध्यवद्वृत्तिभावान्यत्वं किं वा यथाश्रुतमेव मनोन्यत्वाद्यभाव इत्याद्युत्तरग्रन्थस्तु समनियताभावानामनैक्यमते घटत्वेन मनोन्यत्वाभावमादाय सङ्गमनीयः । न चैवमपि जातित्वादिविशिष्टजातिसामान्याभावाभावमादायासम्भवो दुर्वार एवेति वाच्यम् । तादृशाभावस्य वक्ष्यमाणस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविशेषणेनैव वारणीयत्वादित्याहुः ॥ १८ ॥

यत्तु साध्यवदवृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताका इत्यर्थ इति । तन्मन्दम् । केवलान्वयिसाध्यकसद्धेतौ तादृशप्रतियोगित्वाप्रसिद्ध्या अव्याप्तेः गगनस्वरूपाभावस्य तादृशत्वे ऽपि तस्य हेतुसामानाधिकरण्यासम्भवादिति जागदीशी(२) । अथात्र घटत्वेन

---

(१) अत्र केचित् । यथासन्निवेशे वैयर्थ्याभावादिति । अन्ये त्वेवमाहुः । प्रमेयमित्याकारकयत्किञ्चिज्ज्ञानविषयत्वाभावाभावमादाय लक्षणगमनसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तिः स्यात् यदि व्यापकताघटकसाध्यवन्निष्ठत्वस्य स्वप्रतियोगिमत्त्वघटकविरोधिताघटकसम्बन्धेन प्रवेशः स्यात् तथाहि निरवच्छिन्नस्वरूपस्यैव स्वप्रतियोगिमत्ता यद्दविरोधिताघटकसम्बन्धतया तेन सम्बन्धेन तदभावस्य साध्यवन्निष्ठत्वविरहेण तस्य व्यापकतावच्छेदकप्रतियोगिताकत्वात् स्वरूपेण साध्यवन्निष्ठत्वोक्तौ तु स्वरूपेण तस्य साध्यवन्निष्ठत्वेन व्यापकतावच्छेदकप्रतियोगिताकत्वाभावादेव व्युदासादिति ।

(२) अथात्र वह्निनिष्ठप्रतियोगित्वतद्वह्निनिष्ठप्रतियोगित्वैतदन्यतरवान् नास्तीत्याकारकाभावमादायासम्भवसम्भवे केवलान्वयिन्यव्याप्तिकथनमनुचितमिति चेत् । न । अप्रसिद्धिनिबन्धनासम्भवाभावादिति केचित् । अपरे तु यदभावप्रतियोगित्वमात्रावच्छिन्नाभावः साध्यवदवृत्तिः तदभाव इति विवक्षणात् दोषाभावादित्याहुः ।

गगनाभावाभावीयप्रतियोगित्वावच्छिन्नाभावस्य गगनस्वरूपतया साध्यवद्वृत्तित्वेन साधनसमानाधिकरणस्य साध्यवद्वृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताकस्य घटत्वेन गगनाभावाभावस्य प्रतियोगिसमानाधिकरणतया केवलान्वयिन्यपि लक्षणगमनसम्भवादेतद्दूषणमयुक्तमिति चेत् । न । स्वाभावत्वं स्वप्रतियोगित्वमिति मते समानाधिकरणधर्मावच्छिन्नप्रतियोगित्वस्य प्रतियोगितावच्छेदकस्वरूपत्वेन गगनाभावत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाभावस्य गगनस्वरूपत्वस्वीकारेऽपि घटत्वेन गगनाभावाभावीयप्रतियोगित्वस्यातिरिक्ततया तदवच्छिन्नाभावस्य गगनस्वरूपत्वास्वीकारेण तस्यैवासिद्धतया घटत्वेनगगनाभावाभावीयप्रतियोगित्वस्य साध्यवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वविरहादिति ध्येयम् ॥ १९ ॥

ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावोक्त्यैव वाच्यत्वाद्यभावमादाय उक्तातिप्रसङ्गव्युदाससम्भवात् साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावानां यावत्त्वोपादानं गौरवग्रस्तमत आह अत एवेति इति जगदीशेनोक्तम्(१) । तस्यायमाशयः । साध्यतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रतियोगिताका यावन्तोऽभावाः स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणास्तत्त्वमिति समुदितार्थः । सम्बन्धान्तरावच्छिन्नाभावमादायासम्भववारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्युक्तम् । कालिकादिसम्बन्धेन प्रतियोगिसामानाधिकरण्याद्धूमवान् वह्नेरित्यादावतिव्याप्तिरतः स्वप्रतियोगितावच्छेदकसम्बन्धेनेति । न च साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यं प्रतियोगित्वं तु यथाकथञ्चित्सम्बन्धावच्छिन्नं ग्राह्यं तत एव नासम्भवादिसम्भावनापीति वाच्यम् । सम्बन्धान्तरावच्छिन्नतादृशप्रतियोगिताकाभावमादाय लक्षणगमनसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिमूलानुत्थितिप्रसङ्गात् । न च धनी चैत्रत्वादित्यत्राव्याप्तिः साध्यतावच्छेदकीभूतस्वामित्वसम्ब-

(१) नन्वत्र मनोभेदाभावस्य ग्रहीतुमशक्यत्वेऽपि मनोभिन्नभेदमादाय तस्य स्वप्रतियोगितावच्छेदकतादात्म्येन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिरिति चेत् । नैवम् । पर्वतभिन्नभेदमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यस्यावश्यं निवेश्यतया भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादावतिव्याप्तिसङ्गतिरिति ।

न्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति वाच्यम् । वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वस्वीकर्तृनय एव निरुक्त्यादरात् । अत एव सिद्धान्तलक्षणे एतदुक्तमिति ध्येयम् ॥ २० ॥

यदपि ननु यादृशाभावप्रतियोगिताया व्यापकं साध्यतावच्छेदकं तादृशो यः कश्चिदभावो यद्धर्मावच्छिन्नाधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ च वाच्यत्वाद्यभावमादायातिव्याप्तिवारणसम्भवात् यावत्त्वगर्भलक्षणं गौरवग्रस्तमत आह अत एवेति । तदप्यसङ्गतम् । प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसितत्वेन वह्निधूमोभयत्वादेस्तद्व्यापकत्वासम्भवाद्वह्निधूमोभयवान् धूमादित्यादावव्याप्तिभयेन तादृशनिरुक्तेः शङ्कितुमशक्यत्वादिति जगदीशः । अत्रेदं शङ्कते । उभयत्वस्य पर्याप्तिसम्बन्धेन एकत्वावच्छेदेनाभावसत्त्वे ऽपि प्रतियोगिवैयधिकरण्यघटितव्यापकत्वमस्त्येवेति । मैवम् । प्रतियोगिवैयधिकरण्यं निवेश्य वह्निधूमोभयवान् धूमादित्यादावव्याप्तिवारणासम्भवे ऽपि गुणान्यत्वविशिष्टसत्तावत्त्वान् द्रव्यत्वादित्यादावतिव्याप्तेः सत्तावदभावीयप्रतियोगित्वाधिकरणे गुणे सत्त्वानतिरिक्तसाध्यतावच्छेदकीभूतविशिष्टसत्त्वाधिकरणत्वसत्त्वेन सत्तावदभावस्य लक्षणघटकत्वेन तस्य प्रतियोगिसामानाधिकरण्यसत्त्वादिति । न च तत्रातिव्याप्तिः भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादिवत्स्वीकरणीयेति वाच्यम् । जगदीशमते तत्रातिव्याप्त्यसम्भवेन भवन्मते तत्स्वीकारे ऽतीव सन्दर्भविरोधापत्तेः । न च तथापि साध्यतावच्छेदकतावच्छेदकावच्छिन्नानधिकरणत्वं व्यापकताघटकं वाच्यं सत्तावदभावीयप्रतियोगिनि गुणे साध्यतावच्छेदकतावच्छेदकीभूतविशिष्टसत्तात्वावच्छिन्नानधिकरणत्वेन विशिष्टसत्त्वस्य सत्तावदभावीयप्रतियोगित्वाव्यापकत्वात् सत्तावदभावस्य लक्षणाघटकत्वेन न तत्रातिव्याप्तिरिति वाच्यम् । तथा सति स्वरूपतः साध्यतावच्छेदकस्थले वह्निमान् धूमादित्यादावव्याप्तिः तत्र साध्यतावच्छेदकतावच्छेदकस्याभावादिति ध्येयम् । वस्तुतस्तु यथाश्रुताभिप्रायेण ग्रन्थकृता दूषितत्वेन प्रतियोगिवैयधिकरण्यं निवेश्य तत्राव्याप्तिवारणं न क्षतिमावहतीति भावः ॥ २१ ॥

नव्यास्तु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठयादृशप्रतियोगिताको यः कश्चिदभावो यदधिकरणावच्छेदेन साध्यताव-

च्छेदकसम्बन्धेन तादृशप्रतियोगित्वाश्रयसमानाधिकरणत्वमिति जगदीशेनोक्तम् । अत्र च वह्निधूमोभयत्वावच्छिन्नाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिवारणायानवच्छिन्नान्तम् । साध्यनिष्ठपदमपि तदर्थमेव । धूमवान् वह्नेरित्यादौ कालिकादिसम्बन्धेन धूमाद्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यादतिव्याप्तिरतः साध्यतावच्छेदकसम्बन्धेनेति । अत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्योक्तौ प्रतियोगितायां सम्बन्धावच्छिन्नत्वं न निवेश्यते प्रयोजनाभावात् । तथा च वह्निमान् धूमादित्यादौ व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्याद्यभावमादाय लक्षणगमनसम्भवेऽपि प्रमेयवान् वाच्यत्वादित्यादौ गगनादिरूपेण प्रमेयाद्यभावरूपव्यधिकरणधर्मावच्छिन्नाभावं विना लक्षणगमनासम्भवात् न प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्ग (१) । अत्र च लक्षणे तादृशपदेन साध्यनिष्ठप्रतियोगित्वमात्रं परामृश्यते न तु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगित्वपर्यन्तं तथा सति यः कश्चिदभावो यदधिकरणावच्छेदेन साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगित्वाश्रयसमानाधिकरण इत्यस्यैव सम्यक्त्वे साध्यनिष्ठप्रतियोगिताकत्वपर्यन्तमभावविशेषणं व्यर्थम् धूमवान् वह्नेरित्यादावतिव्याप्त्यभावात् । तावन्मात्रोक्तौ च व्यधिकरणधर्मावच्छिन्नाभावं विना लक्षणगमनसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिमूलानवतारप्रसङ्गः । अथात्र धर्मानवच्छिन्नत्वमेवोच्यतां किं साध्यतावच्छेदकातिरिक्तत्वस्य धर्मविशेषणत्वेनेति सर्वत्रैव गगनस्वरूपेण साध्याभावस्य लक्षणघटकत्वादव्याप्त्यसम्भवादिति चेन्न । अखण्डाभावघटकतया सार्थक्यात् । न चैवमप्यनतिप्रयोजनकतया कथमेतत्पर्यन्तं विशेषणमिति वाच्यम् । भूत-

---

(१) न च कालिकेन प्रमेयाभावस्तत्र ग्रहीतव्य इति वाच्यम् । सम्बन्धस्यापि वृत्तिमत्त्वरूपधर्मत्वात् साध्यतावच्छेदकातिरिक्तकालिकावच्छिन्नत्वात् प्रतियोगिताया इति तदभावस्य गृहीतुमशक्यत्वात् गुरुधर्मावच्छिन्नप्रतियोगित्वास्वीकर्तृनये विषयत्वापेक्षया प्रमाविषयत्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिद्धेः गगनादिना प्रमेयाभावं विना लक्षणगमनासम्भवाच्चेति । अत एव साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावनिवेशोऽपि प्रत्युक्त इति भट्टरतर्कवागीशकृतपत्रिकायामुक्तम् ।

त्वमूर्तत्वोभयत्वावच्छिन्नाभावस्येत्यादिदीधितिसङ्गमनार्थकत्वात् । केचित्तु धर्मानवच्छिन्नत्वमात्रनिवेशने प्रतियोगितामात्रस्यैव सम्बन्धावच्छिन्नत्वेन वृत्तिमद्रूपधर्मानवच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽसम्भवः स्यादत उक्तमतिरिक्तं धर्मविशेषणम् । न च धर्मविधया धर्मनिष्ठावच्छेदकत्वानिरूपकत्वनिवेशेनैवासम्भवाभावात् तद्वारकमतिरिक्तान्तविशेषणं व्यर्थमिति वाच्यम् । यथा सन्निवेशे वैयर्थ्याभावात् व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकत्वस्य प्रतियोग्यंशे प्रकारीभूतधर्मे ऽपि केचिदित्यादिना भट्टाचार्यैः स्वीकृततया तन्मते ऽसम्भवतादवस्थ्याच्चेत्याहुः । न चैवमपि साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमपहाय साध्यतावच्छेदकावच्छिन्नत्वमेव निवेश्यतां सर्वत्र व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय लक्षणगमनसम्भवादिति वाच्यम् । प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः प्रमेयत्वावच्छिन्नप्रतियोगिताया व्यधिकरणसम्बन्धाप्रसिद्ध्या प्रमेयत्वावच्छिन्नाभावमात्रस्यैव हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावात् । न च व्यधिकरणसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावमादायैव प्रमेयवान् वाच्यत्वादित्यादौ लक्षणगमनसम्भव इति वाच्यम् । कालिकसम्बन्धेन धूमत्वविशिष्टाभावमादाय धूमवान् वह्नेरित्यादौ अतिव्याप्तिवारणार्थं साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वस्यैव निवेश्यत्वात् । न च विरुद्धोभयसम्बन्धावच्छिन्नाभावमादायैव प्रमेयवान् वाच्यत्वादित्यादौ लक्षणसमन्वय इति वाच्यम् । विरुद्धोभयत्वस्य संसर्गतावच्छेदकतानभ्युपगमात् । विशिष्टधीनियामकतावच्छेदकस्यैव संसर्गतावच्छेदकत्वात् अभ्युपगमे तु विरुद्धोभयसम्बन्धेन प्रमेयत्वावच्छिन्नाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावं विनापि लक्षणागमनसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिमूलानुत्थितिप्रसङ्गः । केचित्तु गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन लघुरूपसमानियतगुरुरूपेण साध्यतायामव्याप्तिभिया साध्यतावच्छेदकावच्छिन्नत्वस्य निवेशासम्भव इत्याहुः ॥ २२ ॥

येन सम्बन्धेन व्यापकत्वं तेन सम्बन्धेन प्रतियोग्यधिकरणवृत्तित्वं वक्तव्यमन्यथा पृथिवी महाकालकपालान्यतरत्वादित्यत्र पृथिवीत्वाद्यभावस्य कालिकसम्बन्धेन पृथिवीत्वरूपप्रतियोग्यधिकरणे महाकाले वृत्तेरतिव्याप्त्यापत्तेः । कालिकसम्बन्धेन पृथिवीत्वस्य

व्यापकत्वं न घटते नित्यपृथिव्यां व्यभिचारात् अतो न तत्सम्बन्धमादायातिव्याप्तिसम्भावना । यदि च स्पन्दो महाकालत्वादित्यादावतिव्याप्तिः स्पन्दमात्रस्य जन्यतया कालिकसम्बन्धस्यापि स्पन्दत्वव्यापकतावच्छेदकत्वसम्भवेन तेन सम्बन्धेन स्पन्दत्वरूपप्रतियोग्यधिकरणे महाकाले स्पन्दत्वाद्यभावस्य सत्त्वात् । न च स्पन्द इत्याकारकयत्किञ्चिद्बोधव्यक्तेर्विषयतासम्बन्धेन स्पन्दत्वव्यापकत्वात् यावदन्तर्गतस्य तदभावस्यैव साध्यव्यापकताघटकविषयतासम्बन्धेन हेत्वधिकरणे महाकाले प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः । न हि तादृशबोधव्यक्तेः कालिकसम्बन्धेनापि स्पन्दत्वव्यापकत्वं भाविभूतस्पन्देषु व्यभिचारादिति वाच्यम् । विषयताया ज्ञानसमानकालीनतया तद्बुद्धिव्यक्त्यभावदशायामपि स्पन्दत्ववति विषयतासम्बन्धेन तद्बुद्धिव्यक्त्यभावसत्त्वादिति जगदीशेनोक्तम् । अत्रायं पूर्वपक्षः । प्रतियोगिवैयधिकरण्याघटितव्यापकतायां साध्याधिकरणे स्पन्दे स्पन्दत्वानधिकरणदेशावच्छेदेन स्पन्दत्वाभावीयप्रतियोगिताश्रयस्पन्दत्वस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वात् साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्यैव स्पन्दत्वाभावीयप्रतियोगितायां सत्त्वादिति कालिको न साध्यव्यापकताघटकसम्बन्धः कथं तत्सम्बन्धमादाय स्पन्दः कालत्वादित्यादावतिव्याप्तिः प्रतियोगिवैयधिकरण्यघटितव्यापकताकल्पे च यावदन्तर्गतस्य स्पन्द इत्याकारकयत्किञ्चिज्जन्यज्ञानाभावस्य व्यापकताघटकविषयतासम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरिति । अत्रेदं समाधानम् । समनियताभावानामैक्यमते स्पन्दानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्पन्दत्वाभावाभिन्नतया साध्यवन्निष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकस्पन्दानुयोगिकस्वरूपसम्बन्धावच्छिन्नवाच्यत्वनिष्ठप्रतियोगिताकत्वस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्पन्दत्वाभावेऽपि सत्त्वात् कालिकस्यापि व्यापकताघटकसंसर्गतया तद्ग्रन्थसङ्गतेरिति । प्रमेयमित्याकारकयत्किञ्चिज्जन्यज्ञानाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावव्यतिरेकेणापि लक्षणगमनात् प्रतियोगिवैयधिकरण्याघटितव्याप-

कत्वस्यैवानुसरणीयतया स्पन्द इत्याकारकयत्किञ्चिज्ज्ञन्यज्ञानाभावस्य प्रतियोगिवैयधिकरण्यघटितस्पन्दत्वव्यापकतावच्छेदकत्वसम्भवे ऽपि नानुपपत्तिरिति ध्येयम् । वस्तुतस्तु एतदस्वरसेनैव किञ्चेत्यादिना दोषान्तरस्य सम्बन्धत्रयस्यैक्यविवक्षणे बीजत्वमुक्तमिति भावः(१) ॥ २३ ॥

यत्तु घटादावुत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य प्रत्यक्षमेव सम्भवति । तदानीं चक्षुःसंयुक्तविशेषणताया असत्त्वे ऽपि द्रव्यसमवेतवृत्त्यभावप्रत्यक्षहेतोः चक्षुःसंयुक्तसमवेतविशेषणतायाः सत्त्वेन सन्निकर्षसम्भवादिति । तत्तुच्छम् । चक्षुःसंयुक्तसमवेतद्व्यणुकविशेषणतया रूपाद्यभावचाक्षुषापत्त्या चक्षुःसंयुक्तयोग्यसमवेतविशेषणताया एवाभावग्राहकत्वेन द्रव्यान्यद्रव्यसमवेतवृत्त्यभावचाक्षुषत्वस्यैव जन्यतावच्छेदकत्वात् । अन्यथा त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारापत्तेरिति ध्येयमिति जगदीशः । अथात्र चक्षुःसंयुक्तसमवेतद्व्यणुकविशेषणतया रूपाद्यभावचाक्षुषापत्तेर्वारणाय कारणतावच्छेदककोटौ समवेतांशे योग्यत्वमेव निवेशनीयम् । तेन कार्यतावच्छेदककोटौ समवेतांशे द्रव्यान्यत्वविशेषणव्यतिरेकेणापि त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारासम्भवात् कार्यतावच्छेदककोटौ द्रव्यान्यत्वविशेषणं निवेश्य घटादावुत्पत्तिकालावच्छेदेन रूपाभावचाक्षुषवारणं जगदीशस्यानुचितमिति चेन्न । परमाणौ चक्षुःसंयोगदशायां द्रव्यत्वादौ रूपसामान्याभावचाक्षुषापत्तेः । चक्षुःसंयुक्तसमवेतयोग्यविशेषणतायास्तदानीमपि द्रव्यत्वादौ सत्त्वादिति उक्तापत्तिवारणाय संयुक्तांशे योग्यत्वनिवेशावश्यकत्वादुग्र-

(१) केचित्तु साध्यवत्त्वं व्यापकत्वं प्रतियोगित्वं प्रतियोगिसामानाधिकरण्यञ्च एकेन साध्यतावच्छेदकसम्बन्धेन वाच्यमित्यादिग्रन्थः । न च प्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशो व्यर्थ इति वाच्यम् । तदनुक्तौ वाच्यत्वादिभेदमादाय लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तेरिति जगदीशेनोक्तम् । अत्रे यमाशङ्का । ननु व्यभिचाराद्यवारकतया तस्य व्यर्थत्वं ध्रौव्यमेवेति चेत् । मैवम् । साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वं तेन व्यापकत्वं व्यापकतावच्छेदकसम्बन्धेन प्रतियोगित्वं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यमित्यस्यैवास्माकं लक्षणे निवेश्यतया प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वानुक्तौ समवायेन वह्न्यभावमादाय तत्प्रतियोगितावच्छेदकसमवायसम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहात् वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गादिति ध्येयम् ।

न्थसङ्गतेः । एवं चक्षुःसंयुक्तसमवेतांशे ऽपि योग्यत्वं निवेशनीयम् । अन्यथा घटनिष्ठगुरुत्ववृत्त्यभावचाक्षुषापत्तेस्तथा च गुरुत्वे योग्यत्वाभावान्न तथापत्तिरिति । ननु योग्यचक्षुःसंयुक्तसमवेतवृत्त्यभावचाक्षुषत्वस्यैव कार्यतावच्छेदकत्वं वक्तव्यं तावतैव न व्यभिचारः । न चोत्पत्तिकाले घटादौ रूपाभावचाक्षुषानुपपत्तिरिति चेन्न । एतदस्वरसेनैव परकल्पानुसरणात् । वस्तुत एतादृशकार्यकारणभावकल्पने ऽपि त्रसरेणुवृत्त्यभावचाक्षुषोत्पत्त्यर्थं द्रव्यवृत्त्यभावचाक्षुषत्वेन चक्षुःसंयुक्तयोग्यविशेषणतात्वेन च कार्यकारणभावस्यापि कल्पनीयतया द्रव्यवृत्त्यभावचाक्षुषत्वावच्छिन्नस्य तस्य कारणविरहेणैव न घटादावुत्पत्तिकालावच्छेदेनाभावचाक्षुषोत्पत्तिसम्भव इत्यवधेयम् ॥ २४ ॥

ननु धूमाद्यभावनिष्ठो जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावो धूमाद्यभाव एवाभावप्रतियोगिकस्याभावाधिकरणकाभावस्याधिकरणस्वरूपत्वात्तथा च धूमादौ साध्ये वह्न्यादिहेतावतिव्याप्तिः धूमाद्यभावस्य हेत्वधिकरणावच्छेदेन गोत्वाभावरूपप्रतियोगिसामानाधिकरण्यादत आह जलादिवृत्तीति जगदीशः(१) । ननु धूमवान् वह्नेरित्यत्र यावदन्तर्गतस्य भावस्वरूपस्यायोगोलकान्यत्वाभावस्य प्रतियोगिसामानाधिकरण्याभावेनातिव्याप्तिविरहान्न तत्सङ्गतिः अभावाधिकरणकस्यैवाधिकरणस्वरूपतया ऽयोगोलकत्वादिवृत्तेः जलादिवृत्तित्वविशिष्टगोत्वाद्यभावाभावस्यायोगोलकत्वानात्मकत्वात् । मैवम् । गगनाभावभिन्नं प्रमेयत्वादित्यादावतिव्याप्तिः यावदन्तर्गतस्य गगनाभावभेदाभावस्यापि तादात्म्येन गगनाभावात्मकतया तद्वृत्तेर्जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य तदात्मकतया तत्प्रतियोगिना गोत्वाभावेन समं सामानाधिकरण्यादिति ध्येयम् ॥ २५ ॥

यावत्पदस्य फलतः प्रतियोगिताविशेषणत्वेन साध्यव्यापकतावच्छेदकीभूतयद्यत्प्रतियोगिताकोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षितम् । न चैवं यत्समानाधिकरणा इत्यस्य वैयर्थ्यमिति वाच्यम् । आत्मत्वसा-

---

(१) ननु जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य जलत्वाभावरूपत्वे जल गोभिन्नद्रव्यत्वादित्यादौ जलत्वाभावस्य गोत्वाभावरूपप्रतियोगिसामानाधिकरण्यादतिव्याप्तिरिति चेत् । न । व्यभिचारस्थलभेदाभावमादाय तत्राप्यतिव्याप्तिविरहादिति ध्येयम् ।

मान्याभावीयप्रतियोगितया अपि साध्यव्यापकतावच्छेदकतया तत्प्रतियोगिताकस्यात्मत्वसामान्याभावस्य तादृशप्रतियोगित्वाश्रयसामानाधिकरण्याभावादयमात्मा ज्ञानादित्यादावव्याप्तिवारकत्वादिति सम्प्रदायविद इति जागदीशी(१)। अत्रेदं शङ्कते । साध्यव्यापकतावच्छेदिका यावत्यः प्रतियोगिताः कस्मिंश्चिदभावे प्रत्येकं तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यविवक्षणेनैव सामञ्जस्ये हेतुसमानाधिकरणपदस्य स्वविशिष्टपदस्य वैयर्थ्यमिति । न च भट्टाचार्येण एतद्वैयर्थ्यभयेन एतत्कल्पस्य परित्यक्ततया जगदीशेनापि तद्दोषेणापि साम्प्रदायिका इत्युक्तमिति वाच्यम् । न चैवं यत्समानाधिकरणा इत्यस्य वैयर्थ्यमित्याद्यभिधानासङ्गतेरिति । मैवम् । प्रतियोगिवैयधिकरण्यघटितव्यापकत्वस्य स्वयमेव दूषितत्वेन प्रतियोगिवैयधिकरण्याघटितव्यापकत्वस्यानुसरणीयतया जातिसामान्याभावाभावीयप्रतियोगित्वस्यापि यावदन्तर्गततया हेत्वधिकरणावच्छेदेन तत्प्रतियोगिताश्रयसामानाधिकरण्यविरहादसम्भवः स्यादतस्तदुपात्तम् । न च तथापि भावभिन्नाभावीयनिरुक्ततत्तत्प्रतियोगिताश्रयसामानाधिकरण्यविवक्षणेनैवासम्भववारणादुक्तदोषतादवस्थ्यमिति वाच्यम् । भावभिन्नत्वस्याभावान्वितत्तया प्रतियोगित्वांशे तस्यानिवेशेन यथा सन्निवेशे वैयर्थ्याभावादिति ध्येयम् । केचित्तु यत्समानाधिकरणाभावीयसाध्यव्यापकतावच्छेदकप्रतियोगितात्वव्यापको योऽभावस्तत्त्वमेव व्याप्तिः । व्यापकत्वं च स्वविशिष्टहेत्वधिकरणतात्वव्यापकत्वस्वनिरूपितत्वोभयसम्बन्धेन । स्वविशिष्टहेत्वधिकरणतात्वव्यापकत्वं च स्वाश्रयसामानाधिकरण्य-

---

(१) अथात्र वह्निमान् धूमादित्यादावव्याप्तिः तथाहि हेतुसमानाधिकरणस्य वह्न्यभावस्य यथा वह्निनिष्ठप्रतियोगित्वं तथा कालिकसम्बन्धावच्छिन्नस्वाभावस्यापि प्रतियोगित्वं तदपि प्रतियोगिवैयधिकरण्याघटितव्यापकतावच्छेदक तत्कल्पे स्वरूपसम्बन्धेन साध्यवन्निष्ठत्वस्याभावविशेषणत्वात् । तथा च स्वविशिष्टहेत्वधिकरणावच्छेदेन यावदन्तर्गततत्प्रतियोगिताश्रयसामानाधिकरण्याविरहादिति चेत् । न । व्यापकतावच्छेदकप्रतियोगितायां अभावावृत्तित्वस्य निवेशनीयत्वात् । न च जातिसामान्याभावाभावस्य लक्षणाघटकत्वात् भावभिन्नपदं व्यर्थमिति वाच्यम् । भावभिन्नपदेनापि तादृशविशेषणलाभात् । केचित्तु हेत्वधिकरणवृत्तित्व स्वरूपेण विवक्षणीयमिति नाव्याप्तिसम्भावना । न च भावभिन्नपदं व्यर्थमिति वाच्यम् । [illegible] तत्पदस्य पारिभाषिकार्थकस्य आवश्यकत्वात् मनोऽन्यत्वाद्यभाव इत्यादिग्रन्थस्तु आदिपदग्राह्यान्यविधाभावमादाय सङ्गत इत्याहुः ।

स्वनिरूपकाभाववद्वृत्तित्वोभयसम्बन्धेन बोध्यम् । एवं च यत्समानाधिकरणा इत्यनुक्तौ आत्मत्वाभावीयप्रतियोगित्वस्य निरुक्तोभयसम्बन्धेन स्वविशिष्टहेत्वधिकरणतात्वाव्यापकत्वात् अव्याप्तिरतस्तदुपात्तम् । कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगाभावनिष्ठप्रतियोगित्वस्य प्रागुक्तोभयसम्बन्धेन हेत्वधिकरणतात्वाव्यापकत्वादव्याप्तिरतः स्वविशिष्टपदम् । न च स्वविशिष्टहेत्वधिकरणतात्वदिशि सम्बन्धविधया स्वनिरूपकाभाववद्वृत्तित्वनिवेशनमनुचितमिति वाच्यम् । स्वविशिष्टपदसार्थक्यार्थे तन्निवेशात् । अन्यथा यावत्स्वस्याभावविशेषणत्वे ऽपि हेत्वधिकरणताव्यापकप्रतियोग्यधिकरणतावद्वृत्तित्वनिवेशेनापि सामञ्जस्ये स्वविशिष्टपदवैयर्थ्यभयेन तदर्थं त्यक्त्वा हेत्वधिकरणत्वानि यावन्तीत्यादिना गुरुतरार्थकरणस्यानौचित्यादित्याहुः ॥ २६ ॥

वस्तुतस्तु साध्यव्यापकतावच्छेदिकायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नयादृशप्रतियोगितायाः निरूपकोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तादृशप्रतियोगिताश्रयसामानाधिकरण्यमेव वक्तव्यम् । तथा च धूमादिसामान्याभावस्य धूमत्वादिना प्रमेयसामान्याभावानतिरेके ऽपि तदीयप्रमेयसामान्यनिष्ठप्रतियोगित्वं न्यूनवृत्तिनैव धूमत्वादिधर्मेणावच्छिन्नमतो न तादृशप्रतियोगिताश्रयसामानाधिकरण्यमुपादायातिप्रसङ्ग इति युक्तमुत्पश्याम इति जगदीशः(१) । अथ धूमाभावस्य धूमवद्वृत्तित्वविशिष्टगोत्वाभावाभावात्मकतया स्वन्यूनवृत्तिधर्मानवच्छिन्नगोत्वाभावनिष्ठप्रतियोगिताश्रयसामानाधिकरण्यादतिव्याप्तितादवस्थ्यमिति । न च स्वसामानाधिकरण्ये सति स्वाश्रयवन्निष्ठाभावप्रतियोगितावच्छेदकं यत्तदवच्छिन्नं यत्तदन्यप्रतियोगित्वं स्वन्यूनवृत्तिधर्मानवच्छिन्नपदेन विवक्षणीयम् । तथा च धूमवद्वृत्तित्वविशिष्टगोत्वाभावनिष्ठ-

---

(१) न चात्र हेतुसमानाधिकरणाभावे स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताश्रयसामानाधिकरण्यनिवेशेनैवातिव्याप्तिवारणसम्भवे ऽभावांशे तादृशप्रतियोगिताकत्वनिवेशो व्यर्थ इति वाच्यम् । तथा सति वह्निमान् धूमादित्यादावव्याप्त्यापत्ते यावदभावान्तर्गतस्य व्यापकतावच्छेदकप्रतियोगिताकस्य तद्वह्नित्वेन वह्निमद्वृत्त्यभावात्मकस्य तद्वह्न्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याविरहादत उभयदिशि तन्निवेशस्यावश्यकत्वात् । एव द्वितीयलक्षणे ऽपि वह्नित्वेन तद्वह्निमद्वृत्त्यभावात्मकतद्वह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिरत उभयदिशि स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वानिवेशनमावश्यकमिति ज्ञेयम् ।

प्रतियोगित्वस्य स्वसमानाधिकरणीभूतस्वाश्रयवन्निष्ठाभावप्रतियोगितावच्छेदकेन धूमवद्वृत्तित्वविशिष्टगोत्वाभावत्वेनावच्छिन्नत्वेन तादृशत्वाभावेन न तमादायातिव्याप्तिरिति वाच्यम् । विशिष्टाभावोभयाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावविनिर्मोकेण सद्धेतुमात्र एव लक्षणगमनसम्भवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्ग इत्युत्तरग्रन्थासङ्गतेः । मैवम् । धूमवद्वृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाद्यभाव एव पर्यवसानात् तत्प्रतियोगित्वमपि धूम एव स्वीक्रियते अतो न गोत्वाभावनिष्ठप्रतियोगित्वमादायातिव्याप्तिरिति । वस्तुतस्तु स्वन्यूनवृत्तित्वं स्वसमानाधिकरणत्वे सति स्वाश्रयवन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वमतो धूमवद्वृत्तित्वविशिष्टगोत्वाभावत्वावच्छिन्नाभावस्य धूमाद्यभावस्वरूपत्वे ऽपि तदीयधूमवद्वृत्तित्वविशिष्टगोत्वाभावत्वावच्छिन्नप्रतियोगित्वमादाय न धूमवान् वह्नेरित्यादावतिव्याप्तिः धूमवद्वृत्तित्वविशिष्टगोत्वाभावस्य गोत्वाभावनिष्ठप्रतियोगितायास्तादृशन्यूनवृत्तित्वात् । अत एव विशिष्टाभावमपहाय वाच्यत्वगगनोभयाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावविनिर्मोकेण लक्षणगमनं द्वितीयलक्षणानुशरणे बीजत्वेन दर्शितमिति । न च तथापि गोत्वाभावत्वेन धूमवद्वृत्तित्वविशिष्टगोत्वाभावाभावस्य प्रमेयत्वेन धूमधूमान्यप्रमेयोभयाभावस्य च धूमाभावानतिरेकितया तस्य निरुक्तस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रमेयत्वाद्यवच्छिन्ना या प्रतियोगिता तदाश्रयसामानाधिकरण्यादतिव्याप्तिर्दुर्वारैवेति वाच्यम् । निरुक्तस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताया अभावावृत्तित्वेनापि विशेषणीयत्वात् । वृत्तित्वं च स्वनिरूपकत्वस्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणवृत्तित्वोभयसम्बन्धेन बोध्यम् । वस्तुतस्तु स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगित्वपदेन प्रतियोगिताविशिष्टप्रतियोगिताया विवक्षणान्न क्वापि दोषः । वैशिष्ट्यं च स्वतादात्म्यनिरुक्तस्वन्यूनवृत्तिधर्मावच्छिन्नत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वकालीनाभाववृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वैतात्रितयसम्बन्धेन । संसर्गघटकवृत्तिता च प्रागुक्तोभयसम्बन्धेन ग्राह्येति बोध्यम् ॥ २७ ॥

अथ द्वितीयलक्षणे साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वानुपादाने जलवृत्तित्वविशिष्टद्रव्यत्वाभावं तद्वृत्तित्वविशिष्टसत्ता-

घभावं चादाय वह्निमान् धूमात् सत्तावान् द्रव्यत्वादित्यादावव्याप्तिर्दत्ता जगदीशेन(१)। सा न सङ्गच्छते। तादृशविशिष्टाभावस्य तत्प्रतियोगितावच्छेदकीभूतद्रव्यत्वत्वावच्छिन्नसामानाधिकरण्यात्। न च प्रतियोगितावच्छेदकतायाः पर्याप्तिनिवेशाभिप्रायेण तदभिहितमिति वाच्यम्। व्यभिचारिणि यावदन्तर्गतो यो व्यभिचारनिरूपकाधिकरणस्थलवृत्तित्वाभावविशिष्टाभावस्तस्य स्वप्रतियोगितावच्छेदकीभूतव्यभिचारस्थलवृत्तित्वाभावावच्छिन्नसामानाधिकरण्यविरहेणातिव्याप्तिविरहात् पर्याप्तिनिवेशस्य निष्प्रयोजनकतया परित्याज्यत्वात्। मैवम्। पर्याप्त्यनिवेशे ऽपि यावदन्तर्गतस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकस्याधेयतासम्बन्धेन जलविशिष्टाभावस्य स्वप्रतियोगितावच्छेदकीभूतजलावच्छिन्नसामानाधिकरण्यविरहेण वह्निमान् धूमात् सत्तावान् द्रव्यत्वादित्यादावव्याप्तिरित्यत्रैव जगदीशस्य तात्पर्यादिति केचिदाहुस्तन्न। पर्याप्त्यनिवेशे ऽपि वाच्यत्वगोत्वोभयाभावमादाय लक्षणसमन्वये प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्गात्। उक्तोभयाभावस्य प्रतियोगितावच्छेदकीभूतवाच्यत्वत्वाद्यवच्छिन्नसामानाधिकरण्यात्। तस्मात्समनियतनानाधर्मावच्छिन्नप्रतियोगिताया ऐक्यमते व्यभिचारस्थलावृत्त्यभावस्य प्रतियोगिताया व्यभिचारस्थलावृत्तित्वविशिष्टवाच्यत्वत्वादिनाप्यवच्छिन्नतया तत्प्रतियोगितावच्छेदकीभूतवाच्यत्वत्वाद्यवच्छिन्नसामानाधिकरण्यात्क्षनत्वाद्यभिचारिण्यतिव्याप्तिरतः पर्याप्तिनिवेशस्यावश्यकत्वमिति युक्तमुत्पश्यामः। अथेदं वाच्यं ज्ञेयत्वादित्यादावपि साध्यव्यापकतावच्छेदकप्रतियोगिताकस्याधेयतासम्बन्धेन घटविशिष्टाद्यभावस्य प्रतियोगितावच्छेदकीभूतघटाद्यवच्छिन्नसामानाधिकरण्यविरहादसम्भवसम्भवे ऽव्याप्तिदानं जगदीशस्यासङ्गतमिति चेन्न। अत्राव्याप्तिपदस्यासम्भवपरत्वादिति। केचित्तु साध्यताघटकसम्बन्धेन व्यापकत्वं तेनैव प्रतियोगित्वं प्रति-

(१) नन्वत्र समनियताभावानामैक्यात् जलत्वविशिष्टद्रव्यत्वाद्यभावस्य जलत्वद्रव्यत्वान्यतरत्वेन तदुभयाभावस्वरूपतया तत्प्रतियोगितावच्छेदकान्यतरत्वावच्छिन्नसामानाधिकरण्यात् नाव्याप्तिरिति चेत्। न। एवं सति धूमवान् वह्नेरित्यादौ वह्निधूमान्यतरत्वेन तदुभयाभावस्य धूमाभावस्वरूपतया तत्प्रतियोगितावच्छेदकान्यतरत्वावच्छिन्नसामानाधिकरण्यात् तद्वारणाय अभावानवच्छिन्नत्वादिकं वा चरमविशेषणं वा प्रतियोगितायां निवेश्य तद्वारणे ऽव्याप्तिसङ्गतिरिति ध्येयम्।

योगितावच्छेदकावच्छिन्नसामानाधिकरण्यं च वाच्यम् । तथा च कालो घटवान् महाकालत्वादित्यत्र लक्षणगमनान्नासम्भवः महाकालान्यत्वविशिष्टाधिकरणत्वस्यापि महाकाले स्वीकारादित्याहुः ॥२८॥

व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगिताया अनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति चक्रवर्तिलक्षणे(१) अव्याप्यवृत्तिसाध्यके साध्याभावमादायाव्याप्तिवारणाय व्याप्यवृत्तीति । वह्नित्वादिना घटाद्यभावमादायाव्याप्तिवारणाय साध्येति । प्रतियोगिवैयधिकरण्यप्रवेशे वाच्यं ज्ञेयत्वादित्यत्राव्याप्तिः प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धेरतस्तदुपेक्षितम् । ननु समनियताभावानामैक्यमते घटत्वेन वह्न्यभावस्यैव वह्नित्वेन घटाद्यभावतया हेतुसमानाधिकरणस्य तादृशस्यैव साध्याभावस्य प्रतियोगितावच्छेदकं वह्नित्वादिकमित्यव्याप्तिरतः

---

(१) अत्र व्याप्यवृत्तित्वं निरवच्छिन्नहेत्वधिकरणवृत्तित्वं हेत्वधिकरणयत्किञ्चिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावव्यक्तित्वं तत्त्वमिति जगदीशः । अत्र चरमकल्पस्यानुगमः । हेत्वधिकरणविशिष्टसाध्याभावत्वमिति वैशिष्ट्यं च स्ववृत्त्यभावप्रतियोगितावत्त्वसम्बन्धेन प्रतियोगित्ववत्ता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन अवच्छेदकता च स्वावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धावच्छिन्ना ग्राह्या ।

अथात्र प्रथमं कल्पं विहाय द्वितीयकल्पानुसरणे किं बीजम् । उच्यते । गुणान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादावव्याप्तिः विशिष्टसत्ताभावाभावस्य विशिष्टसत्तारूपतया सत्तारूपत्वेन हेतुसमानाधिकरणत्वात् अतो द्वितीयकल्पानुसरणम् । अथ द्वितीयकल्पे तादृशाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावत्वमित्यनेनैव सम्यक्त्वे व्यक्तिपदोपादानं व्यर्थमिति चेत् । न । गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादावतिव्याप्त्यापत्तेः विशिष्टसत्ताभावत्वावच्छिन्नाभावस्य विशिष्टसत्तास्वरूपत्वेन सत्तानतिरिक्ततया तस्य हेतुसमानाधिकरणत्वेन तदभावप्रतियोगितायाः सामाधिकरण्येनावच्छेदकत्वात् विशिष्टसत्ताभावत्वस्येति । तदुपादाने तु विशिष्टसत्ताभावत्वावच्छिन्नाभावस्यैव विशिष्टसत्तास्वरूपत्वेन तद्व्यक्तित्वावच्छिन्नाभावस्य तदस्वरूपतया तस्य तदनवच्छेदकत्वं सुघटमिति ध्येयम् । यत्किञ्चित्त्वनिवेशनस्य प्रयोजनं कपिसंयोगी सत्त्वादित्यादावतिव्याप्तिवारणं ग्रन्थकृता प्रदत्तम् । तत्र धूमवान् वह्नेरित्यादौ प्रसिद्धस्थल एवातिव्याप्तिवारणं तस्य प्रयोजनं सम्भवति तत् कथं परित्यक्तमिति । अत्राहुः । हेत्वंशे यत्किञ्चित्त्वनिवेशनेनापि प्रसिद्धस्थलातिव्याप्तिवारणसम्भवात् अधिकरणांशे यत्किञ्चित्त्वनिवेशार्थं तावत्पर्यन्तानुधावनात् इति केचित् । चक्रवर्तिलक्षणे बहवः पूर्वपक्षाः सन्तीति विस्तरभयादुपेक्षितमस्माभिः ।

समनियताभावैक्यमते निरुक्तिमाह हेतुसमानाधिकरणस्येति जगदीशः। न चात्र यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेन वाच्यं ज्ञेयत्वादित्यादावव्याप्तिविरहाद्व्याप्यवृत्तित्वनिवेशनमनुचितमिति वाच्यम्। वह्नित्वेन घटाद्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारकसाध्याभावपदवैयर्थ्यापत्तेरिति। न चाग्रिमलक्षणे विवक्षणीयस्य साध्यतावच्छेदकसम्बन्धेन स्वसमानाधिकरणस्वावच्छेदकीभूतधर्मावच्छिन्नाधिकरणयावद्धेत्वधिकरणिका यावत्यः प्रतियोगितास्तदन्यप्रतियोगितानवच्छेदकत्वस्यात्रापि विवक्षणान्न वाच्यं ज्ञेयत्वादित्यत्राव्याप्तिर्न वा साध्याभावपदवैयर्थ्यमिति वाच्यम्। तादृशविशेषणस्य गुरुतया निवेशयितुमशक्यत्वात्। अथ समनियताभावैक्यमते हेतुसमानाधिकरणाभावीयसाध्यनिष्ठप्रतियोगितानवच्छेदकत्वविवक्षणेनैव घटत्वेन वह्न्यभावस्य वह्नित्वेन घटाभावत्वे ऽपि तदीयसाध्यनिष्ठप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्त्यभावात्कृतं लक्षणान्तरानुसरणेनेति चेन्न। विवक्षितव्याप्यवृत्तित्वस्य तत्तदभाव एव पर्यवसिततया व्याप्यवृत्तितत्तदभावप्रतियोगितावच्छेदकत्वाभावकूटस्य व्याप्तिघटकत्वे व्याप्यवृत्तियावदभावान्तर्गतघटाद्यभावनिरूपितसाध्यनिष्ठप्रतियोगितावच्छेदकत्वस्याप्रसिद्ध्या तदभावाप्रसिद्धेः वह्निमान् धूमादित्यादावव्याप्तिरिति ॥ २९ ॥

व्याप्यवृत्तित्वघटितलक्षणद्वये संयोगी सत्त्वादित्यत्रातिव्याप्तिमाशङ्क्य वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेवेति दीधितिपर्यवसितभावार्थमाह तथा चेति। हेतुसमानाधिकरणाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं तदेव पारिभाषिकावच्छेदकमित्यादिना। अथैतदर्थस्य साध्याभावाघटिततया द्वितीयलक्षणाभिप्रायक एवायं ग्रन्थः। प्रथमलक्षणस्य तु हेतुसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं तदेव पारिभाषिकावच्छेदकमित्यर्थः। तथा चेन्धनत्वेन वह्न्यभावप्रतियोगितावच्छेदकीभूतेन्धनत्वस्य वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्ये-

नानवच्छेदकतया पारिभाषिकावच्छेदकत्वस्य वह्नित्वे सत्त्वात् वह्निमान् धूमादित्यत्राव्याप्तिरिति । मैवम् । यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमप्रवेश्य यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीययद्धर्मसमानाधिकरणप्रतियोगितानवच्छेदकत्वस्य तादृशसाध्याभावप्रतियोगितावच्छेदके विवक्षणीयत्वात् । तथा च वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयवह्नित्वसमानाधिकरणप्रतियोगितानवच्छेदकत्वस्येन्धनत्वे ऽसत्त्वात् वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वे घटत्वविशिष्टसम्बन्धिनिष्ठपटत्वेनघटाभावीयघटत्वसमानाधिकरणप्रतियोगितानवच्छेदकत्वसत्त्वाच्च तादृशावच्छेदकाप्रसिद्धिरिति । तादृशसाध्याभावप्रतियोगितावच्छेदके यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वे सति यद्धर्मसामानाधिकरण्यस्य विवक्षणान्न दोष इत्यपि वदन्ति ॥ ३० ॥

साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वमिति शिरोमणिः । अत्र साध्यसामानाधिकरण्यं येन सम्बन्धेन साध्यता तेन सम्बन्धेन साध्याधिकरणे दैशिकविशेषणतया वृत्तिमत्त्वरूपं ग्राह्यम् । तेन द्रव्यत्वादिसमानाधिकरणज्ञानाद्यभावस्य विषयतया ज्ञानाधिकरणे वृत्तावपि ज्ञानवान् द्रव्यत्वादित्यादौ नातिव्याप्तिः(१) । न वा कालः प्रमेयत्वादित्यादावतिव्याप्तिरिति जगदीशः । न चात्र यावदन्तर्गतस्य व्यभिचारनिरूपकाधिकरणान्यत्वाद्यभावस्य कालिकसम्बन्धेन धूमाद्यधिकरणायोगोलकादौ विशेषणतया वृत्त्या धूमवान् वह्नेरित्यत्रातिव्याप्तिसम्भवे स्थलान्तरानुधावनमनुचितमिति वाच्यम् । जन्यमात्रस्य कालोपाधितानभ्युपगमात् । न च तथापि साध्यतावच्छेदकसंयोगसम्बन्धेन धूमाद्यधिकरणे महाकालादौ कालिकसम्बन्धेन तादृशाभावमात्रस्यैव वृत्तेः प्रसिद्धस्थल एवातिव्याप्तिसम्भवे

(१) न चात्र धूमवान् वह्नेरित्यादौ समवायसम्बन्धेन धूमवति धूमावयवे धूमाभावसत्त्वात् धूमवान् वह्नेरित्यादौ अतिव्याप्तिसम्भवे ज्ञानवान् द्रव्यत्वादित्यादिस्थलान्तरानुधावनमनुचितमिति चेत् । मैवम् । व्यभिचारिस्थलव्यक्तिभेदाभावस्य ग्राह्यतया साध्यसामानाधिकरण्याभावात् । वस्तुतः साध्यतावच्छेदकसंसर्गतावच्छेदकताघटको यः सम्बन्धः तत्सम्बन्धावच्छिन्नावच्छेदकताकसंसर्गताकाधिकरणत्वनिवेशान्नातिव्याप्तिरिति ।

सामानाधिकरण्यघटकवृत्तिताघच्छेदकीभूतदैशिकविशेषणताविशेष-सम्बन्धनिवेशार्थं कालः प्रमेयत्वादित्याद्यनुधावनमनुचितमिति । वृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावानभ्युपगमे संयोगसम्बन्धेन धूमाद्यधिकरणत्वस्य महाकाले ऽभावात् धूमवान् वह्नेरित्यत्रातिव्याप्तेरसम्भवात् । अत एव हेत्वधिकरणवृत्तितायां विशेषणताविशेषसम्बन्धनिवेशव्यावृत्तिदाने कालः कालपरिमाणादित्यादौ कालत्वमभिहितमिति । अत्र हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वानिवेशे समवायेन हेत्वधिकरणे धूमावयवादौ वर्तमानस्य वह्न्याद्यभावस्य साध्यसामानाधिकरण्यविरहात् वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे ऽयमात्मा ज्ञानादित्यादिपर्यन्तानुधावनमनुचितमिति विभावनीयम्(१) ॥ ३१ ॥

यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्तीति प्रगल्भद्वितीयलक्षणे हेतुसामानाधिकरण्यं तु फलतः प्रमाविशेषणमिति जगदीशः(२) । तदर्थश्च यद्धर्मावच्छिन्नवद्विशे-

(१) अत्र केचित् वह्न्याद्यभावस्याव्याप्यवृत्तित्वेन वह्न्यभावमादायापि नाव्याप्तिसम्भावना इत्याहुः । तच्चिन्त्यम् । अन्ये तु साध्यसामानाधिकरण्यस्य स्वरूपेण निवेश एव वह्निमान् धूमादित्यत्राव्याप्तिः सम्भवति नान्यथा कालिकादिना साध्यसामानाधिकरण्यस्य वह्न्यभावे सत्त्वात् अयमात्मा ज्ञानादित्यत्र तु तन्निवेशानिवेशोभयथाप्यव्याप्तिरित्यभिप्रायेणायमात्मा ज्ञानादित्यत्राव्याप्तिपर्यन्तानुधावनम् । अत एव प्रथमलक्षणे वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे ऽपि अयमात्मा ज्ञानादित्यत्राव्याप्तिपर्यन्तानुधावनमनुचितमित्याशङ्क्य स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यस्य प्रवेश एव वह्निमान् धूमादित्यत्राव्याप्तिः सम्भवति अयमात्मा ज्ञानादित्यत्र तद्दलप्रवेशाप्रवेशोभयथापीत्यभिहितं जगदीशेनेत्याहुः ।

(२) व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभावस्य साध्यसामान्याभावत्वभ्रमदशायां पर्वतो वह्न्यभाववानित्याकारकबुद्धेः साध्यवत्ताज्ञानविरोधित्वादसम्भवः स्यादतः प्रमात्वोपादानमिति जगदीशः । नन्वत्र अनुचितं प्रथमोपस्थितस्य यत्समानाधिकरणदलस्य प्रयोजनमनुक्त्वा पश्चादुक्तस्य प्रमापदस्य प्रयोजनकथनमिति चेदत्र केचित् । असम्भवरूपगुरुतरदोषमाशङ्क्यादौ प्रमापदस्य प्रयोजनकथनमित्याहुः ।

यत्तु साध्यवत्ताज्ञानविरोधित्वं हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकं यत् साध्यवत्ताज्ञानं तद्विरोधित्वरूपं वाच्यमिति जगदीशः । न चात्र मात्रपदं व्यर्थमिति वाच्यम् । पर्वतो वह्निमान् धूमादित्यादौ प्रमेयत्वस्य हेतुमद्वृत्तितया तदवच्छिन्नविशेष्यकसाध्याभावप्रकारकप्रमां प्रति प्रमेयं वह्निमदिति ज्ञानस्य प्रतिबन्धकत्वात् अव्याप्त्यापत्तिभयेन तन्निवेशावश्यकत्वात् । न च केवलान्वयिनि हेतौ हेतुमदितराप्रसिद्ध्या अव्याप्तिरिति वाच्यम् । हेत्वभाववद्धर्मत्वेन हेतुमन्मात्रवृत्तिपदेन वाच्यत्वात् हेत्वभावस्य स्वनिरूपिताधिकरणतावत्त्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः केवलान्वयिनि तादृशसम्बन्धी हेतोर्व्यधिकरण इति ।

ध्यकसाध्याभावप्रमासामान्ये साध्यवत्ताज्ञानविरोधित्वं नास्ति तद्धर्मवत्त्वमिति । अथात्र यद्धर्मावच्छिन्नावच्छेदकताकविशेष्यताकसाध्याभावप्रमासामान्ये इत्यनुक्त्वा यद्धर्मावच्छिन्नवद्विशेष्यक इत्यनेन नानाधर्मावच्छिन्नविशेष्यताकप्रमासंग्रहकरणमनुचितमिति चेन्न । बाधमुद्रया प्रतिबन्धकतायामव्याप्यवृत्तित्वज्ञानस्योत्तेजकताभिप्रायेण संयोगवान् संयोगाभावादित्यादावतिव्याप्तेः संयोगाभावधर्मितावच्छेदकसंयोगवत्तानिश्चयस्यानाहार्यस्याप्रसिद्धत्वादिति । अत एव साध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकीभूतसम्बन्धेन हेत्वधिकरणवृत्तित्वमभावे निवेश्य प्रमायां स्वयमेव निवेशितम् । एतेन यद्विवत्यादिना हेत्ववच्छिन्नविशेष्यकसाध्यवत्ताज्ञानप्रतिबन्धकत्वाभावघटितलक्षणमनाशङ्क्य हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकसाध्यवत्ताग्रहप्रतिबन्धकत्वाभावघटितगुरुतरलक्षणकरणमनुचितमिति परास्तम् । हेत्वधिकरणवृत्तित्वस्य प्रमाविशेषणत्वे ऽपि वह्निमान् धूमादित्यादावव्याप्तिः हेतुमद्विशेष्यकधूमवान् वह्नित्वेन घटाभाववान् वह्न्यभाववांश्च ह्रद इत्याकारकसमूहालम्बनप्रमायाः साध्यवत्ताज्ञानप्रतिबन्धकत्वादिति चेन्न । हेतुमन्निष्ठविशेष्यताभिन्नसाध्याभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपकत्वस्य प्रमाविशेषणत्वेन विवक्षितत्वादिति। तथा च हेतुमन्निष्ठविशेष्यताभिन्नसाध्याभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपकत्वस्य तादृशप्रमायां सत्त्वेन नाव्याप्तिरिति । केचित्तु हेत्ववच्छिन्नविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रमीयप्रकारतासामान्ये साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वाभावघटितलक्षणविवक्षणान्नोक्तसमूहालम्बनबोधमादायाव्याप्तिरित्याहुः । तन्न । महानसीयवह्न्यभावप्रकारकज्ञानस्य समवायेन वह्न्यभावप्रकारकज्ञानस्य च तादृशसम्बन्धेन तादृशसाध्यवत्ताज्ञानप्रतिबन्धकतया वह्निमान् धूमादित्यादावव्याप्तिवारणाय साध्यवत्ताज्ञानपदेन साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारताशालिज्ञानं विवक्षणीयमित्यादिग्रन्थासङ्गतेः । अथ प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थानुत्थितिप्रसङ्गेन व्यापकत्वप्रतियोगित्वानां चैकसम्बन्धेन विवक्षणीयतया साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगित्वस्य च तत्पर्याप्तावच्छेदकताकत्वेन विवक्षणीयतया महानसीयवह्न्यभावस्य समवायेन वह्न्य

भावस्य च लक्षणाघटकतया समवायेन वह्न्यभावं महानसीयवह्न्यभावं चादायाव्याप्तिवारणार्थं साध्यवत्ताज्ञानपदेन साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारताशालिज्ञानविवक्षणमनुचितमिति चेन्न । धूमवान् वह्नित्वेन घटाभाववान् महानसीयवह्न्यभाववांश्चेत्याकारकसमूहालम्बनज्ञानस्यानुमितिप्रतिबन्धकतया तमादायाव्याप्तिवारणाय तन्निवेशस्यावश्यकत्वात् । न च विवक्षितविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारतासामान्ये साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वाभावविवक्षणेनैव सामञ्जस्ये कृते साध्यतावच्छेदकधर्मसम्बन्धनिवेशोनेति वाच्यम् । वह्नित्वेन घटाभावप्रमाया वह्नित्वेन वह्निघटोभयवत्ताबुद्धिप्रतिबन्धकतया वह्निमान् धूमादित्यादावव्याप्तिरतस्तद्वारणाय साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वस्यावश्यं निवेशनीयतया तादृशविशेषणस्यैव व्यधिकरणधर्मावच्छिन्नाभावसंग्राहकत्वेन प्रतियोगितायां व्यापकताघटकसम्बन्धावच्छिन्नत्वस्यानिवेशात् । समनियताभावानामैक्यमते वह्नित्वेन घटाभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभिन्नतया पर्वतः स्वरूपेण वह्निमान्नेतिप्रमीयप्रकारताया अपि निरुक्तसाध्याभावत्वावच्छिन्नप्रकारतासामान्यान्तर्गतत्वेन तत्र स्वरूपसम्बन्धेन वह्निमत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वसत्त्वाच्च तथात्रैवाव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य च निवेशावश्यकत्वादिति ध्येयम् । अथात्र साध्यतावच्छेदकसम्बन्धेन रूपेण च साध्यवत्त्वानिवेशे समवायसम्बन्धावच्छिन्नवह्न्यभावप्रमां महानसीयवह्न्यभावप्रमां चादायाव्याप्तिर्दत्ता जगदीशेन सा न युज्यते । सर्वत्रैव सम्बन्धान्तरावच्छिन्नधर्मान्तरावच्छिन्नसाध्याभावप्रकारकप्रमामादायासम्भवस्यैव वक्तुमुचितत्वादिति चेत् । न । विशेषरूपेण संसर्गत्वस्य वृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावस्य चानभ्युपगमेन प्रमेयवान् घटत्वादित्यादावेव लक्षणगमनात् तत्र हेतुमद्विशेष्यकसम्बन्धान्तरावच्छिन्नसाध्यसामान्याभावप्रकारकप्रमाया धर्तुमशक्यत्वात् । न च तथापि साध्यतावच्छेदकधर्मस्यानिवेशे ऽव्याप्तिकथनमनुचितम् तदप्रवेशे ऽसम्भवस्य सम्भवादिति वाच्यम् । तदप्रवेशे ऽसम्भवसम्भवे ऽप्युभयव्यावृत्तिदानार्थमव्याप्तिकथनस्यैवौचित्यादिति चिन्त्यम् ॥ ३२ ॥

साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वमिति प्रगल्भतृतीयलक्षणे(१) यन्निष्ठसाध्याभाववद्वृत्तित्वसामान्यं विषयतया प्रकृतानुमितिप्रतिबन्धकतानवच्छेदकं तत्त्व(२)मर्थः । न च घटाभाववद्वृत्तित्वादौ साध्याभाववद्वृत्तितात्वभ्रमदशायामपि धूमसाध्यकानुमित्यनुत्पत्त्या वह्निनिष्ठस्य निर्धूमवृत्तित्वस्य धूमसाध्यकानुमितिप्रतिबन्धकतानवच्छेदकत्वाद्व्यभिचारिण्यतिव्याप्तितादवस्थ्यमिति वाच्यम् । यन्निष्ठसाध्याभाववद्वृत्तित्वविषयित्वसामान्यं न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यस्योक्तत्वादिति जगदीशः । न चात्र यन्निष्ठवृत्तित्वविषयित्वसामान्यं न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यस्यैव सम्यक्त्वे साध्याभाववतीत्यस्य वैयर्थ्यमिति वाच्यम् । वह्नित्वावच्छिन्नप्रतियोगिताकघटाभावे वह्निसामान्याभावत्वमवगाह्य वह्न्याभाववद्वृत्तिर्धूम इत्याकारकज्ञानीयधूमादिनिष्ठवृत्तित्वविषयित्वस्य

(१) धूमनिष्ठस्येन्धनत्वेन वह्न्यभाववद्वृत्तित्वस्य इन्धनत्वेन वह्न्यनुमितिविरोधित्वादाह प्रकृतेति । साध्यतावच्छेदकसम्बन्धेन प्रकृतसाध्यकानुमितीत्यर्थ इति जगदीशः । अथात्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशो विफलः, प्रतियोग्यवृत्तीत्यादिग्रन्थानुत्थितिभयेन साध्याभावपदेन साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्यैव विवक्षणीयतया तादृशप्रतियोगितायां व्यापकताघटकसम्बन्धावच्छिन्नत्वानिवेशे व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय तदनुत्थितेर्दुर्वारतापत्तेः । तथा च धूमनिष्ठसमवायावच्छिन्नवह्न्यभाववद्वृत्तित्वादेस्तादृशत्वाभावात्तदादायाव्याप्त्यभावादिति चेत । अत्र केचित् । यत्र संयोगेन प्रमेयत्वेन वह्निः साध्यता तत्र समवायेन प्रमेयत्वेन वह्न्यभाववद्वृत्तित्वस्य धूमनिष्ठस्य समवायेन निरुक्तधर्मावच्छिन्नविधेयताकानुमितिविरोधित्वादव्याप्त्यापत्तेः प्रमेयत्वस्य समवायेनापि साध्यव्यापकतावच्छेदकत्वात् अतस्तदुपादानस्यावश्यकत्वादित्याहुः । अन्ये तु समनियताभावैक्यमते स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य वह्नित्वेन संयोगावच्छिन्नप्रतियोगिताकघटाभावरूपतया धूमनिष्ठतद्वृत्तित्वस्य स्वरूपेण वह्न्यनुमितिविरोधित्वे नाव्याप्त्यापत्तिरतस्तन्निवेशनमित्याहुः ।

(२) यन्निष्ठवृत्तित्वसामान्ये प्रकृतानुमितिविरोधित्वं नास्तीत्युक्तौ वह्निनिष्ठवृत्तित्वस्य धूमसाध्यकानुमित्यविरोधितया व्यभिचारिण्यतिव्याप्त्यापत्तेरतः साध्याभाववतीति जगदीशः । ननु वह्निनिष्ठधूमसामान्याभाववद्वृत्तित्वस्यापि निरुक्तवृत्तित्वसामान्यान्तर्गततया तत्र निरुक्तप्रतिबन्धकतावच्छेदकत्वाभावविरहेण कथमतिव्याप्तिरुक्ता जगदीशेन इति चेदत्र केचित् । प्रतिबन्धकतावच्छेदकत्वमव्याप्यवृत्ति साध्यसामान्याभाववद्वृत्तितात्वावच्छेदेन प्रतिबन्धकतावच्छेदकत्वं केवलवृत्तितात्वावच्छेदेन तदभावः । तथा च साध्याभाववद्वृत्तितात्वावच्छेदेनाभावनिवेशार्थं साध्याभाववत्पदमित्याहुः ।

निरुक्तविषयित्वसामान्यान्तर्गतस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिभिन्नत्वाभावाद्वह्निमान् धूमादित्यत्राव्याप्तिरतस्तद्वारणाय यन्निष्ठवृत्तितात्वपर्याप्तावच्छेदकताकविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यर्थो बोध्यः । तथा च वह्निनिष्ठवृत्तितात्वपर्याप्तावच्छेदकताकविषयितासामान्यस्यैव धूमसाध्यकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिभिन्नत्वेन धूमवान् वह्नेरित्यत्रातिव्याप्तिरतस्तद्वारणाय साध्याभाववतीत्यस्य सार्थकत्वात् । अथात्र यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्ति तत्त्वमित्युक्तावेव सामञ्जस्ये निषेधद्वयोपादानमनतिप्रयोजनकमिति । न च वह्नित्वेन घटाभाववद्वृत्तिधूमकालीनधूमो वह्निसामान्याभाववद्वृत्तिरित्याकारकज्ञानीयधूमनिष्ठवह्नित्वेन घटाभाववद्वृत्तित्वविषयित्वस्यापि निरुक्तविषयितासामान्यान्तर्गतत्वेन तस्य च प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वविरहाद्वह्निमान् धूमादित्यादावव्याप्तिरतस्तद्वारणायानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताया व्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नविषयिताभिन्नं यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं तत्त्वमित्यर्थकत्वेनैव तत्सार्थक्यमिति वाच्यम् । सद्धेतुस्थले निरुक्तयद्रूपस्याप्रसिद्ध्या तादृशविवक्षायामव्याप्तितादवस्थ्यादिति । मैवम् । उक्ताव्याप्तिवारणाय नञ्द्वयपदेन प्रकृतलक्षणस्य यद्रूपावच्छिन्नविषयितासामान्यं प्रकृतानुमितिप्रतिबन्धकताशून्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयावृत्ति तद्रूपावच्छिन्नविषयिताभिन्नं यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं तत्त्वमित्यर्थकत्वेनाभावद्वयघटितत्वादेव तत्सार्थक्यादिति । सद्धेतुस्थले तु संयोगी संयोगाभाववान् इत्याकारकज्ञानस्य नियताहार्यतया सर्वत्रैव यद्रूपपदेन संयोगाभावविशिष्टसंयोगवत्त्वस्य धर्तव्यतया तद्रूपावच्छिन्नविषयिताभिन्नत्वस्य च साध्याभाववद्वृत्तित्वविषयितासामान्य एव सत्त्वात्तमादाय लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ निर्धूमवृत्तित्वाभाववान् वह्निर्निर्धूमवृत्तिरित्याकारकाहार्यज्ञाने वह्निर्निर्धूमवृत्तिरितिज्ञानोत्तरमिदं ज्ञानमप्रमेत्यप्रामाण्यज्ञानविशिष्टज्ञाने एवं वह्निर्निर्धूमवृत्तिर्न वेति संशये च निर्धूमवृत्तित्वविशिष्टवह्नित्वावच्छिन्नविषयित्वस्य वृत्तित्वेन यद्रूपपदेन निर्धूमवृत्तित्वविशिष्टवह्नित्वस्य ध-

तुमशक्यत्वादतिव्याप्तिरतस्तद्वारणायानाहार्यत्वस्याप्रामाण्यज्ञानानास्कन्दितत्वस्य निश्चयत्वस्य च निवेशः । न चात्र कल्पे साध्याभाववदित्यस्य वैयर्थ्यमिति वाच्यम् । यद्रूपपदेन संयुक्तत्वाभावविशिष्टवह्नित्वेन घटाभाववत्संयुक्तत्वस्य धर्तव्यतया संयुक्तत्वाभाववद्धूमो वह्नित्वेन घटाभाववद्वृत्तिरित्याकारकाहार्यज्ञानीयतद्रूपावच्छिन्नविषयिताभिन्नत्वस्य धूमनिष्ठवृत्तित्वविषयितासामान्ये ऽसत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरतस्तद्वारणायोक्तरीत्या पर्याप्तिनिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिवारकतयैव सार्थक्यादिति ध्येयम्(१) ॥ ३३ ॥

यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावास्तद्वत्त्वं तत्त्वमिति मिश्रस्य प्रथमलक्षणे(२) ननु

---

(१) ननु तथापि यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकतावदिति यावतीनैव सम्यक्त्वे अनतिरिक्तवृत्तित्वनिवेशनं विफलमिति चेत् । न । यादृशव्यभिचारिस्थलविशेषे व्यभिचारज्ञानस्य कदापि न भ्रमत्वं तद्गतरूपेण अन्यावगाहित्वादिकं च न तादृशस्थलविशेषे व्यभिचारज्ञानस्य विषयविशिष्टत्वेनैव प्रतिबन्धकत्वं लाघवात् तथा च तादृशविषयतायां प्रतिबन्धकतावच्छेदकत्वाभावादतिव्याप्त्यापत्तेरिति ध्येयम् ।

(२) नन्वत्र लक्षणे प्रथमोपात्तयावत्पदस्य प्रयोजनमनुक्त्वा अन्त्योपात्ततत्तत्पदप्रत्येकपदयो अग्रे प्रयोजनकथनमनुचितमिति चेत् । न । यावत्पदस्यातिव्याप्तिवारकत्व शिष्यै पूर्वलक्षणे ऽवधारितं तत्तत्पद प्रत्येकपदं च किमर्थमिति जिज्ञासाप्राथम्यात् अग्रे तयो प्रयोजनमुक्तम् ततः तत्तत्पदप्रत्येकपदयो प्रयोजने ज्ञाते अधुना यावत्पदं किमर्थमिति शङ्काया पुनर्यावत्पदप्रयोजनमुक्तमिति केचित् ।

यावन्त समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावा तावदन्यतमत्वतत्त्वाभावान्यतररूपेण साजात्य वाच्यं समनियताभावैक्यात् गगनाभाव एव निखिलव्यधिकरणधर्मावच्छिन्नाभाव इति मते तु गगनाभावत्वतदन्यत्वान्यतररूपेणैव वाच्यं साजात्यम् अन्यथा धूमवान् वह्नेरित्यादावतिव्याप्तिरित्युक्त जगदीशेन । अत्रेयमाशङ्का । अथ निरुक्ततत्त्वाभावस्य कुत्राप्यसत्त्वात् असम्भव एव सम्भवति कथमतिव्याप्तिरुक्ता इति चेत् । अत्र केचित् । अभावाभावस्यातिरिक्तत्वे घटे तत्प्रसिद्धिरित्याहुस्तच्चिन्त्यम् । निरुक्तायास्तदन्यप्रतियोगिताया एव साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वमित्यादिग्रन्थे अभावाभावस्य प्रतियोगिस्वरूपत्वस्वीकारेण तद्विरोधापातात् । अन्ये पुन गगनाभावस्याभावानङ्गीकारमते गगने तत्प्रसिद्धिरित्याहुस्तदपि मन्दम् । विषयितया गगनवद्भेदाभावस्य गगनस्वरूपत्वात् । अपरे तु यावन्त समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावा भावभिन्ना तावदन्यतमत्वतत्त्वाभावान्यतररूपेण साजात्यं ग्राह्यमिति घटे तदन्यत्वप्रसिद्ध्या नासम्भव इति प्राहु ।

ननु कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्ति कपिसंयोगसामान्याभावस्यापि प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वात् तत्सजातीयतदधिकरणवृत्तित्वाभावस्य हेतावभावादत आह व्याप्यवृत्तिश्चेति । ननु रूपवान् पृथिवीत्वादित्यादावव्याप्ति रूपत्वेन

द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिः विशिष्टसत्त्वस्य सत्तानतिरेकेण द्रव्यत्वाभाववति वृत्त्या द्रव्यत्वाभावसजातीयस्य तद्वद्वृत्तित्वाभावस्य हेतावभावात् । न चैवं विशिष्टहेत्वधिकरणे वर्तमान एव साध्याभावो गृह्यतां तावतैवोक्तदोषव्युदासादिति वाच्यम् । तथापि धूमवान् वह्नेरित्यत्रातिव्याप्तिः निर्धूमवृत्तित्वसामान्याभावस्यापि महानसीयवह्नौ सत्त्वात् । न च हेतुतावच्छेदकधर्मावच्छेदेन तादृशवृत्तित्वाभाववत्त्वं विवक्षितं गौरवापत्तेरिति जगदीशेनोक्तम् । तन्न सङ्गच्छते । हेतुतावच्छेदकविशिष्टहेत्वधिकरणवृत्तित्वस्य साध्याभावविशेषणत्वे सद्धेतौ व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव लक्षणघटकतया तादृशयावद्भावसजातीयव्यधिकरणधर्मावच्छिन्नतत्तदधिकरणवृत्तित्वाभावस्यैव हेतौ सत्त्वेनाव्याप्तिविरहेण प्रत्येकपदस्य तत्तदित्यस्य च वैयर्थ्यात् । न च हेत्वधिकरणवृत्तित्वस्य साध्याभावविशेषणत्वे प्रत्येकपदं तत्तत्पदं चानुपादेयमिति वाच्यम् । तथा सति व्यभिचारिमात्र एव साध्यसामान्याभावघटितनिरुक्तयावत्साध्याभावसजातीयतत्तदधिकरणवृत्तित्वाभावस्याप्रसिद्धेरतिव्याप्त्यसम्भवेन तथापि धूमवान् वह्नेरित्यत्रातिव्याप्तिः निर्धूमवृत्तित्वसामान्याभावस्यापि महानसीयवह्नौ सत्त्वादित्यादिग्र-

---

नित्यसमवेताभावस्यापि निरुक्तयावत्साध्याभावान्तर्गतत्वात् सामान्यधर्मेण विशेषाभावस्वीकारे तु रूपत्वेन तत्तद्रूपाभावमादायाव्याप्तिरत आह प्रतियोगितावच्छेदकेत्यादि इति जगदीश । नन्वत्र यत्किञ्चिज्जन्यज्ञानविषयत्वाभावाभावमादायासम्भवसम्भवे कपिसंयोग्येतद्वृक्षत्वादित्यादावव्याप्त्यभिधानमनुचितमिति चेत् । न । साध्यनिष्ठत्वस्य प्रतियोगिताविशेषणीयत्वात् । ननु वह्निमान् धूमादितिप्रसिद्धस्थल एव व्याप्यवृत्तिपदप्रयोजन सम्भवतीति चेत् । न । संयोगावच्छिन्नवृत्तित्वाभावस्याव्याप्यवृत्तितया हेतौ सत्त्वेनाव्याप्त्यभावात् ।

ननु रूपत्वेन नित्याभाव नित्यवृत्त्यभावं वा आदाय रूपवान् [illegible] समवेतपर्यन्तानुधावनं व्यर्थमिति चेत् । न । साध्यतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रवृत्तित्वस्य प्रतियोगिताविशेषणत्वे तदभाववारणात् ।

ननु तथापि सामान्यधर्मेण विशेषाभावस्वीकारे प्रमेयत्वेन घटाभावमादायासम्भवसम्भवे अव्याप्तिदानमसङ्गतमिति । न च साध्यनिष्ठप्रतियोगिताकाभावनिवेशे तद्रूपवान् तद्रसादित्यादौ लक्षणागमनान्नासम्भव इति वाच्यम् । प्रमेयत्वेन घटघटान्योभयाभावमादाय तत्रापि लक्षणागमनात् इति चेत् । न । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वेनाभावविशेषणत्वे तद्वह्न्यनुयोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेदकतास्थले लक्षणागमनान्नासम्भव इति । अथवा संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवृत्तित्वाभावस्याव्याप्यवृत्तितया वह्निमान् धूमादित्यादौ लक्षणागमनान्नासम्भव इति । केचित्तु गगनहेतौ लक्षणागमनान्नासम्भव इत्याहुः ।

न्थेनातिव्याप्त्यभिधानासङ्गतेरिति विभावनीयम्(१) ॥ ३४ ॥

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वमिति द्वितीयलक्षणे साजात्यं तु प्रागुक्तचरमदिशा ग्राह्यम् । तेन संयोगसम्बन्धावच्छिन्नद्रव्यत्वाभावप्रतियोगितावच्छेदकेन द्रव्यत्वत्वादिना वह्न्यादिव्यापकत्वे ऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिस्तादृशाभावस्य धूमादिसामान्याभावसाजात्यविरहादिति जगदीशः । न चात्र लक्षणे समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण साजात्यविवक्षणे ऽपि प्रथमलक्षणोक्तदिशाऽसम्भवस्यासत्त्वात् व्यभिचारिण्यतिव्याप्तिवारणसम्भवाच्च तादृशसाजात्यविवक्षणस्यैवोचितत्वेन प्रागुक्तचरमदिशेत्यनेन गगनाभावत्वतदन्यत्वान्यतररूपेण साजात्यविवक्षणमनुचितमिति वाच्यम् । तथा सति व्यापकीभूतेत्यस्य व्याप्यवृत्तेरित्यस्य च वैयर्थ्यापत्तेः धूमवान् वह्नेरित्यादौ धूमाद्यभावनिष्ठं यद्धूमत्वाद्यवच्छिन्नप्रतियोगिताकत्वं तस्य च वह्न्यभावादावसत्त्वेन धूमाद्यभावसजातीयवह्न्यभावमादायातिव्याप्त्यसम्भवादिति । न च तथापि द्रव्यत्वत्वस्य संयोगसम्बन्धेन प्रतियोगिव्यधिकरणवह्निमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वे ऽपि तत्सम्बन्धावच्छिन्नाधेयतावच्छेदकत्वविरहेण वह्न्यादिव्यापकतावच्छेदकत्वविरहादेव नातिव्याप्तिरिति वाच्यम् । गौरवेणात्र व्यापकतायां तत्सम्बन्धावच्छिन्नाधेयतावच्छेदकत्वस्यानिवेशादिति ध्येयम् । अथात्र संयोगेन द्रव्यत्वाभावस्य धूमाद्यभावसजातीयत्वे ऽपि वक्ष्यमाणोभयाभावघटितव्याप्यवृत्तित्वविरहादेव तादृशाभावस्य धर्तुमशक्यत्वेन तमादायातिव्याप्त्यभिधानमनुचितमिति चेन्न । पूर्वलक्षणोक्तदिशा यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगिताकत्वमेव व्याप्यवृत्तित्वमित्यभिप्रेत्यैवातिव्याप्त्यभिधानात् । यत्प्रतियोगिताकाभावे स्वावच्छेदका-

(१) अत्र केचित् हेतुतावच्छेदकावच्छिन्नाधिकरणतानिवेशे सामान्यधर्मावच्छिन्नाधिकरणत्वास्वीकारे वह्निमान् धूमादित्यादावव्याप्तिरतः हेतुतावच्छेदकीभूतधर्मे यन्निष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वोभयाभावः तदेव हेत्वधिकरणं वाच्यम् तेन वह्निमान् धूमादित्यादौ तथाविधहेत्वधिकरणं ह्रदोऽपि एवं च प्रत्येकपदाद्यनिवेशे तद्दोषतादवस्थ्यमित्याहुः ।

वच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वो-भयवत्त्वं तदन्यप्रतियोगित्वमेव व्याप्यवृत्तितानिरूपकमिति प्रतियोगिनि स्वत्वमन्तर्भाव्यैव वा तस्योक्तत्वादिति । एतेन गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वानभ्युपगमे केवलान्वयिनि स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावाप्रसिद्ध्याऽव्याप्तिः सामानाधिकरण्यमात्रघटितोभयत्वस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वादित्यपि प्रत्युक्तम् । केचित्तु समनियताभावानामैक्यमते संयोगसम्बन्धावच्छिन्नद्रव्यत्वाभावस्यैव द्रव्यत्ववत्त्वेन घटाद्यभावतया तस्य च धूमादिसामान्याभावसजातीयस्य वक्ष्यमाणव्याप्यवृत्तितानिरूपकीभूतघटनिष्ठप्रतियोगितावच्छेदकेन द्रव्यत्ववत्त्वादिना वह्न्यादिकं प्रति व्यापकत्वादतिव्याप्तिः स्यात् अतस्तद्वारणाय प्रागुक्तदिशैव साजात्यं ग्राह्यमित्याहुः ॥ ३५ ॥

अन्ये तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयनिष्ठं यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावव्यापकतावच्छेदकं तद्रूपेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वमित्यर्थः । अत्र च साध्याभावव्यापकतावच्छेदकत्वमपहाय साध्याभावसमानाधिकरणवृत्तित्वोक्तौ गुणान्यत्वविशिष्टसत्ताभाववान् द्रव्यान्यत्वविशिष्टसत्ताभावादित्यत्रातिव्याप्तिः गुणान्यत्वविशिष्टसत्ताभावाभावरूपस्य द्रव्यान्यत्वाभावरूपस्य वा निरुक्तसाध्याभावस्य सजातीये समानाधिकरणे च सत्तारूपे ऽभावे वर्तते यद्द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपयद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वं तेन द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपधर्मेण हेतुतावच्छेदकावच्छिन्नं प्रति व्यापकतावच्छेदात् । साध्याभावव्यापकतावच्छेदकत्वोक्तौ तु द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वं न साध्याभावव्यापकतावच्छेदकं द्रव्य एव व्यभिचारादतो नोक्तदोष इति जगदीश.(१) । अथात्र व्यापकतावच्छेदकत्वमपहाय समा-

(१) अथात्र गुणान्यत्वविशिष्टसत्ताभावं विहाय सत्ताभावसाध्यके विशिष्टसत्ताभावहेतुकस्थले एव व्यावृत्तिसम्भवे विशिष्टसत्ताभावसाध्यकस्थले व्यावृत्तिदानं सन्दर्भविरुद्धमिति चेदत्र केचित् साध्यांशे ऽधिकप्रवेशे ऽपि वैयर्थ्यशङ्कानवकाशादित्याहु । तच्चिन्त्यम् । मङ्गलवादे मथुरानाथेन साध्यांशविशेषणव्यावृत्तिकथनात् तद्विरोधापत्ते । अन्ये तु उक्तस्थले साध्यहेत्वोर्वैपरीत्येनाप्यतिव्याप्तिरिति ज्ञापनाय विशिष्टसाध्यकस्थलानुधावनमित्याहु ।

नाधिकरणवृत्तित्वोक्तौ धूमाभावरूपस्यायोगोलकान्यत्वाद्यभावरूपस्य वा साध्याभावस्य सजातीये समानाधिकरणे च सत्तास्वरूपेऽभावे वर्तते यद्द्रव्यान्यत्वविशिष्टसत्ताभावत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वादिकं तत्प्रतियोगितावच्छेदकीभूतद्रव्यान्यत्वविशिष्टसत्ताभावत्वादिना वह्निव्यापकताया अवच्छेदादुक्तरीत्या धूमवान् वह्नेरित्यत्रातिव्याप्तिसम्भवे स्थलान्तरानुधावनमनुचितमिति चेत् । अत्र केचित् । गुणान्यत्वविशिष्टसत्ताभाववान् द्रव्यान्यत्वविशिष्टसत्ताभावादित्यस्योपलक्षणत्वाद्धूमवान् वह्नेरित्यत्रातिव्याप्तिर्भवत्येवेत्याहुः । परे तु साध्याभावसजातीयाभावस्य साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वेन विशेषणीयत्वात् धूमवान् वह्नेरित्यादौ द्रव्यान्यत्वविशिष्टसत्ताद्यभावत्वावच्छिन्नाभावस्यातथात्वेन तमादायातिव्याप्त्यसम्भवात् स्थलान्तरानुधावनमित्याहुः । अत्र यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयनिष्ठं यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावाधिकरणवृत्तितावच्छेदकमित्युक्तावप्यतिव्याप्तिवारणसम्भवाद्व्यापकतावच्छेदकत्वानिवेशनमनुचितमिति विभावनीयम्(१) । अथात्र

---

(१) अत्रेदमालोचयामः । न चायोगोलकभेदाभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वस्य अभावत्वे सत्त्वात् अभावत्वस्य वह्न्यभावत्वानतिरिक्ततया तदादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरिति वाच्यम् । यद्रूपावच्छिन्नप्रतियोगिताकत्वाभावत्वोभयावच्छिन्ननिरूपकताया एव प्रवेश्यत्वात् तथा च वह्नित्वावच्छिन्नप्रतियोगिताकत्वाभावत्वैतद्धर्मद्वयावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य अयोगोलकेऽसत्त्वात् तमादाय नातिव्याप्तिः । न च तथापि प्रमेयावच्छिन्ननिरूपकतामादाय निरुक्तस्थले तथाप्यतिव्याप्तिरिति वाच्यम् । किञ्चिद्धर्मनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरुपिता या प्रतियोगित्वनिष्ठावच्छेदकता तन्निरूपिता सती अभावत्वनिष्ठावच्छेदकतानिरूपिता या निरूपकता तस्या एव निवेश्यत्वात् । तथा च प्रमेयवत्त्वानितिप्रतीतिविषयनिरूपकतायास्तथात्वाभावात् । न च घटवृत्तित्वविशिष्टवाच्यत्वाभाववानितिप्रतीतिविषयनिरूपकताया निरुक्तरूपाक्रान्ततया तद्रूपपदेन शुद्धवाच्यत्वत्वमादाय व्यभिचारिमात्रेऽतिव्याप्तिरिति वाच्यम् । किञ्चिद्रूपनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती स्वरूपसम्बन्धावच्छिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितेत्यादिरीत्या निवेशेनैवातिव्याप्तिवारणसम्भवात् । न चैव धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः साध्यसामान्याभावस्यापि यावदन्तर्गततया तत्सजातीयनिष्ठं वह्न्यभावाभावत्व तदवच्छिन्ननिरूपकताया निरुक्तरूपानाक्रान्तत्वात् वह्न्यभावत्वनिष्ठावच्छेदकताया वह्नित्वावच्छिन्नप्रतियोगिताकत्वाभावत्वोभयावच्छिन्नत्वादिति वाच्यम् । यद्रूपवृत्तिप्रतियोगिताकाभाववानितिप्रतीतिविषयनिरूपकतां निवेश्य तद्रूपे हेतुव्यापकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य निवेश्यत्वात् । प्रतियोगितायां रूपवृत्तित्वं

द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य साध्याभावसमानाधिकरणवृत्तित्वे ऽपि द्रव्यान्यत्वविशिष्टसत्तास्वरूपस्य तादृशाभावस्य सत्तानतिरिक्ततया यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगिताकत्वरूपव्याप्यवृत्तित्वस्य लक्षणघटकतया तमादायातिव्याप्त्यसम्भवेन साध्याभावसमानाधिकरणवृत्तित्वमात्रोक्तावपि सामञ्जस्ये व्यापकतावच्छेदकत्वप्रवेशो व्यर्थ इति । न चाभावे उभयाभावमपहाय यत्प्रतियोगितानिरूपितानुयोगितायां स्वावच्छेदकावच्छिन्नाधिकरणवृत्तितावच्छेदकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगित्वानिरूपितत्वोभयाभावस्तादृशप्रतियोगिताकत्वमेव व्याप्यवृत्तित्वं वक्तव्यम् । तच्च द्रव्यान्यत्वविशिष्टसत्ताभावाभावे ऽप्यक्षतमेवेति वाच्यम् । अतिव्याप्तिदानार्थे तादृशव्याप्यवृत्तित्वनिवेशस्यानौचित्यादिति विभावनीयम्(१) ॥ ३६ ॥

परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वमिति शिरोमणिः । न चैवमपि व्यधिकरणधर्मावच्छिन्नद्रव्यत्वाभाववद्वृत्तितात्वेन घटवृत्तित्वजातित्वान्यतरस्य घटावृत्तेर्वा अभावमादाय द्रव्यं पृथिवीत्वादित्यादावव्याप्तिरिति वाच्यम् । हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तिताभिन्नावृत्तित्वेनापि प्रतियोगिताया विशेषणीयत्वादिति जगदीशः । अथात्रान्यतराभावपर्यन्तानुसरणमेतल्लक्षणे सामान्यधर्मेण विशेषाभावमनभ्युपेत्यैव तदभ्युपगमे तु सर्वत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन हेतुनिष्ठवृत्तित्वाभावमादाय एतल्लक्षणस्यासम्भवापत्तेः स्वावच्छिन्नत्वस्वन्यूनवृत्तित्वस्वव्याप्यत्वैतत्त्रितयसम्बन्धेन धर्म-

---

च स्वावच्छेदकतान्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । एवरीत्या भवनापि निवेशस्य कार्यत्वादिति । अत्र केचित् । सामान्यधर्मावच्छिन्नाधिकरणत्व नञ्कारे यादृशरूपावच्छिन्नप्रतियोगिताकाभावत्वे स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानवच्छेदकत्वेत्यादिनिवेशे लाघवानवकाशादित्याहु । तच्चिन्तनीयम् ।

(१) अत्र केचित् । अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वे घटाभावभिन्नमभावत्वादित्यादावतिव्याप्ति घटाभावभेदाभावस्य घटाभावस्वरूपत्वात् अतस्तद्वारणाय निरुक्तव्याप्यवृत्तित्वस्य प्रथमाभावे निवेश्यतया घटाभावभिन्न पटाभावत्वादित्यादावव्याप्तिवारणाय द्वितीयाभावे ऽपि निरुक्तव्याप्यवृत्तित्वस्य निवेश्यतया च ग्रन्थसङ्गतेरित्याहु ।

विशिष्टान्यप्रतियोगित्वविवक्षणे वा नायं दोष इति ध्येयम् । न च तथापि व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन स्वनिष्ठवृत्तित्वगगनान्यतराभावमादायैव एतल्लक्षणस्यासम्भवसम्भवे कथमव्याप्तिर्दत्ता जगदीशेनेति वाच्यम् । पृथिवीत्वादिप्रतियोगिकसमवायादिसम्बन्धेन हेतुतायां द्रव्यं पृथिवीत्वादित्यादावेव लक्षणगमनात् तत्र तेन सम्बन्धेन हेतोरेव वृत्तिमत्तया तद्वृत्तियावदभावस्यैव तत्र सत्त्वात् यत्तु स्वनिष्ठवृत्तितात्वेन वृत्तित्वसामान्याभावमादायासम्भव उक्तस्तदपि विशेषरूपेण संसर्गतामनभ्युपेत्यैव व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्तादात्म्यसम्बन्धावच्छिन्नवृत्तिताया जगत्स्वरूपत्वेन तादात्म्येन प्रमेयहेतौ लक्षणगमनान्नासम्भव इत्यपि वदन्ति । अथ तथापि व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन पर्वतवृत्तित्वजातित्वैतदन्यतराभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे द्रव्यं पृथिवीत्वादित्यादिपर्यन्तानुसरणं सन्दर्भविरुद्धमिति चेत् । न । हेतुतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नवृत्तित्वस्य संयोगरूपत्वेनाव्याप्यवृत्तितया तादृशाभावस्य धूमादौ सत्त्वेन तत्राव्याप्तिविरहात् । न चैवं धूमवान् वह्नेरित्यत्रातिव्याप्तिरिति वाच्यम् । तस्य महाकालान्यो घटादित्यादेस्तुल्यत्वेन यथाश्रुताभिप्रायेण वा तत्रातिव्याप्तिविरहादिति ध्येयम् । केचित्तु वह्निमान् धूमादित्यादिवत्समवायेन द्रव्यत्वादिसाध्यकपृथिवीत्वादिहेतुकोऽपि प्रसिद्धस्थल एव । अत एव कूटघटितलक्षणे वह्निमान् धूमादित्यत्र साध्यतावच्छेदकीभूतसंयोगसम्बन्धेन विपक्षीभूततत्तज्जलावृत्तित्वावच्छिन्नाभावकूटस्य गुणादौ द्रव्यं पृथिवीत्वादित्यत्र विपक्षीभूतरूपरसादिप्रत्येकासमवेतत्वाद्यवच्छिन्नाभावकूटस्य जात्यादौ अधिकरणतासत्त्वात् तदप्रसिद्धिनिबन्धनाव्याप्तेरुक्तस्थले विरहात् तदुभयं नोदाहृतमिति ग्रन्थकृतैवोक्तमित्याहुः । अथ प्रतियोगितायां हेतुताघटकसम्बन्धावच्छिन्नवृत्तिताभिन्नावृत्तित्वेन विशेषणत्वेऽपि साध्याभाववद्वृत्तितात्वेन घटवृत्तित्वतदन्यवृत्तित्वोभयाभावमादायाव्याप्तिर्दुर्वारैवेति चेन्न । सार्वभौममते उभयत्वस्यैकविशिष्टापरत्वरूपत्वेन विशिष्टस्य चातिरिक्ततया उक्ताभावस्य धर्तुमशक्यत्वात् । अथ वा तादृशवृत्तिताभिन्नावृत्तित्वेनैव व्यासज्यवृत्तिधर्मानात्मकत्वेनापि प्रतियोगिताया विशेषणीयत्वान्न दोषः । उक्ताभावीयप्रतियोगित्वस्य प्रतियोग्यंशे प्रकारी-

भूतद्भिन्नत्वस्वरूपत्वादिति । एतेन तादात्म्येन प्रमेयहेतुकस्थले सा-ध्याभाववद्वृत्तितात्वेन यावान्नास्तीत्यभावमादायैव लक्षणसमन्व-येन तत्राव्याप्तिवारणाय केचित्त्वित्यादिना वक्ष्यमाणनिषेधद्वयप्र-वेशाव्यावृत्तिदानमसङ्गतमित्यपि निरस्तम् उक्ताभाववारकविशे-षणस्यावश्यकत्वादिति ध्येयम् ॥ ३७ ॥

अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावकूटाधिकरणवृत्ति-त्वाभावास्तद्वत्त्वं तत्त्वमिति शिरोमणिः । अत्र प्रतियोगिनां प्रति व्यापकत्वं साध्यतावच्छेदकनाघटकसम्बन्धेनैव ग्राह्यम् । तेन नि-त्यज्ञानवत्तादात्म्येन साध्यतायाम् ईश्वरत्वादिहेतौ घटान्यभेदस्य पटान्यभेदस्य च द्वयोः विषयतासम्बन्धेन प्रतियोगिनाव्यापकी-भूतनित्यज्ञानकयोः साध्यतावच्छेदकव्यापकप्रतियोगिताकयोरेका-धिकरणाप्रसिद्धावपि नाव्याप्तिर्न वा तादृश एव साध्ये द्रव्यत्व-प्रकारकप्रमाविशेष्यत्वादित्यत्र पृथिव्यादौ साधनसमानाधिकर-णस्य पृथिव्यादिनवद्रव्याणां प्रत्येकभिन्नद्रव्यभेदकूटाधिकरणे गु-णादौ हेतोरसत्त्वे ऽपि अतिव्याप्तिरिति जगदीशः । अथात्र प्रागुक्त-रीत्याऽत्रापि घटान्यभेदपटान्यभेदादीनामपि कूटान्तर्गतत्वात्तद्घ-टितकूटाधिकरणाप्रसिद्ध्यैव नातिव्याप्तिरिति । न च साध्यतावच्छे-दकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरो-धितावटकसम्बन्धेन वृत्तिमदभावस्य प्रागुक्ततया घटान्यभेदादेस्ता-दृशसम्बन्धेनावर्तमानत्वेन लक्षणाघटकत्वम् । अत एव प्रागुक्ता-व्याप्तिमपहायातिव्याप्त्यभिधानमपि सङ्गच्छते इति वाच्यम् । पृथि-वीभिन्नद्रव्यगुणान्यतरभेदजलभिन्नद्रव्यकर्मान्यतरभेदतेजोभिन्न-द्रव्यसामान्यान्यतरभेदादीनामपि तादृशत्वेन तद्घटितकूटाधिकर-णाप्रसिद्ध्यैवातिव्याप्त्यभिधानासङ्गतेरिति चेन्न । तादात्म्येन नित्य-ज्ञानविशिष्टस्य समवायेन साध्यतायां द्रव्यत्वप्रकारकप्रमाविशे-ष्यत्वादिहेतौ साधनसमानाधिकरणघटासमवेताभावपटासमवे-ताभावघटितकूटाधिकरणजात्यादौ हेतोरसत्त्वेनातिव्याप्तेरेव तद्ग्र-न्थस्य तात्पर्यादिति ध्येयम् ॥ ३८ ॥

ननु यावतां मिथःसामानाधिकरण्यं तावतां समुदायो वि-वक्षितः किं यावतां साध्याभावान्तरेण सामानाधिकरण्यं तावत्स-मुदायो विवक्षितः प्रथमे इदमित्यादि जगदीशः । अत्र प्रथमकल्पे

स्ववृत्तिसाध्याभावत्वव्यापकं यद्यदधिकरणवृत्तित्वं तत्तदधिकरणवृत्तिसाध्याभावत्वव्यापकाधेयताकं यद्यत्तावदन्यतमवृत्तित्वाभावः यत्किञ्चिद्व्यक्तिवृत्तिसाध्याभावत्वव्यापकसमुदायत्वावच्छिन्नसमानाधिकरणसाध्याभावसमुदायत्वावच्छिन्नाधिकरणतावद्वृत्तित्वाभावो वा समुदायलक्षणवाक्यस्य तात्पर्यार्थः । अन्यतमत्वं च तत्तदधिकरणावृत्तिधर्मशून्यत्वमतो न केवलान्वयिन्यप्रसिद्धिः ॥३९॥

अत्रेदमिति पृथिव्या विशेषणं न तु पक्षनिर्देशः तथा सति घटतद्वायुद्वित्वपटतद्वायुद्वित्वादीनां तद्वायौ मिथःसामानाधिकरण्यापन्नसाध्याभावतया तदधिकरणे तद्वायौ वृत्तिमत्त्वादेव वायुत्वादिहेतावतिव्याप्त्यनुपपत्तेरिति जगदीशः । न च कपिसंयोगी सत्त्वादित्यादावतिव्याप्तिवारणाय साध्याभावाधिकरणतायां निरवच्छिन्नत्वस्य निवेशनीयतया कपिसंयोगाभाववान् मेयत्वादित्यादावव्याप्तिवारणायावश्यं साध्याभावोऽपि व्याप्यवृत्तित्वेन विशेषणीयः तथा चोक्तव्यक्तीनां व्याप्यवृत्तित्वाभावेन न लक्षणघटकत्वमिति वाच्यम् । प्राचीनमते द्वित्वादिमति तत्प्रागभावकालावच्छेदेनात्यन्ताभावासत्त्वात् स्वाधिकरणयत्किञ्चिद्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपव्याप्यवृत्तित्वस्य द्वित्वादेरपि सत्त्वात् । न च नव्यमतानुसारेण तत्स्थलं परित्यज्य सत्तान्यपृथिवीसमवेतशून्यमित्यादिस्थलान्तरानुधावनं कृतं तत्र च पृथिवीपदस्य पृथिवीसामान्यपरत्वे प्रागुक्तरीत्या द्वित्वादिकमादायातिव्याप्त्यभिधानासङ्गतिरिति यदुक्तं तन्न सङ्गच्छते नव्यमते द्वित्वादीनां निरुक्तव्याप्यवृत्तित्वाभावादिति वाच्यम् । उभयमतसाधारण्याय तस्योक्तत्वात् ॥४०॥

न च सत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावोऽप्यप्रसिद्धो द्रव्यत्वत्वस्यैव तदवच्छेदकत्वादिति वाच्यम् । सकलद्रव्यवृत्तित्वादिघटितस्य द्रव्यत्वत्वस्य तादृशसमवेतत्वापेक्षया गुरुतयाऽनवच्छेदकत्वादिति जगदीशः । अत्रेयमापत्तिः । अथात्र द्रव्यत्वत्वस्य तादृशसमवेतत्वापेक्षया गुरुत्वे ऽपि द्रव्यान्यासमवेतत्वस्य लघुत्वेन सत्तान्यैतत्पृथिवीसमवेताभावीयप्रतियोगितावच्छेदकत्वसम्भवात् सत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावस्याप्रसिद्धत्वेन तादृशाभावसाध्यकव्यभिचारिण्यतिप्रसङ्गोपादानमनुचितमिति ध्येयम् ॥ ४१ ॥

न च पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावमादायाव्याप्तिवारणार्थं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताव-

इयं विशेषणीयेति तत एव वृत्तित्वालोकान्यत्वोभयाभावस्य व्युदासात् तादृशवृत्तितात्वे प्रतियोगिताव्यापकत्वस्योपादानं विफलमिति वाच्यम् । पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभाववारणाय वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगिताया वक्तव्यत्वात् तादृशप्रतियोगिताकत्वस्य च वृत्तित्वालोकान्यत्वोभयाभावे ऽपि सत्त्वादिति जागदीशी । न चात्र व्यासज्यवृत्तिधर्मस्य वृत्तित्वपर्याप्तत्वविशेषणवैयर्थ्यमिति वाच्यम् । तस्याखण्डाभावघटकतया सार्थकत्वात् । न च वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताया विशेषणीयत्वे ऽपि साध्याभाववद्वृत्तितात्वेन पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभावमादायाव्याप्तितादवस्थ्यमिति वाच्यम् । यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावः वृत्तित्वमात्रपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नतादृशप्रतियोगिताया वक्तव्यत्वात् । अथवा तादृशव्यासज्यवृत्तिधर्मानवच्छिन्नत्वपदेन तादात्म्यसम्बन्धेन तादृशव्यासज्यवृत्तिधर्मविशिष्टान्यत्वस्यैव विवक्षणान्न दोषः उक्ताभावप्रतियोगित्वस्य प्रतियोग्यंशे प्रकारीभूततादृशधर्मस्वरूपत्वादिति ध्येयम् । अथात्र सर्वत्र हेतुतावच्छेदकावच्छिन्नवृत्तित्वतदन्यवृत्तित्वोभयाभावमादायासम्भवसम्भवे ऽव्याप्तिवारणार्थं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिता विशेषणीयेति कथमुक्तं जगदीशेन असम्भववारणार्थमित्यस्यैव वक्तुमुचितत्वादिति । मैवम् । तद्धूमीयसंयोगेन धूमहेतुकस्थले तादृशसम्बन्धेन यो वृत्तिमान् तद्वृत्तियावदभावस्यैव हेतौ सत्त्वेन लक्षणगमनादिति ध्येयम् । परे तु तादात्म्येन प्रमेयहेतुकस्थले तद्वृत्तित्वतदन्यवृत्तित्वोभयाभावप्रतियोगितावच्छेदकत्वस्य लाघवात्तद्वृत्तितात्वे कल्पनीयतया तादृशाभावस्य लक्षणाघटकत्वात् गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वात् तत्र लक्षणगमनान्नासम्भवाभिधानमिति प्राहुः ॥ ४२ ॥

अत्र केचित् सार्वभौममते सामानाधिकरण्यस्याव्याप्यवृत्तितया खण्डकालाद्यवच्छेदेन घटादावेव वृत्तिमति वर्तमानस्य महाकालवृत्तित्वसामान्याभावस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वान्महाकालान्यो घटादित्यादौ नातिव्याप्तिः । वृत्तिमद्भृत्तयो यावन्तः तादृशवृत्तित्वाभावा यावद्धेत्वधिकरणावच्छेदेन त-

द्वत्त्वस्य विवक्षितत्वादित्याहुरिति जगदीशः । अथात्र कल्पे वह्निमान् धूमादित्यादावव्याप्तिः धूमावयवावच्छेदेन साध्याभावकूटवत्संयुक्तत्वसामान्याभावस्य वृत्तिमति धूमादौ प्रसिद्धस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वात् । न च हेतुतावच्छेदकसम्बन्धेन यत्किञ्चिद्धेत्वधिकरणावच्छेद्यत्वेन साध्याभावकूटवद्वृत्तित्वाभावस्य विशेषणीयतया तादृशवृत्तित्वाभावो न लक्षणघटक इति वाच्यम् । धूमान्तरसंयुक्तस्वावयवावच्छेदेन वृत्तिमति यत्किञ्चिद्धूमे प्रसिद्धस्य तादृशवृत्तित्वसामान्याभावस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वात् तथाप्यव्याप्तेरिति चेत् अत्र नवीनाः हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छेदेन स्वस्मिन् वर्तमाना हेतुसमानाधिकरणसाध्याभावसमुदायाधिकरणवृत्तितात्वसमनियतप्रतियोगिताका यावन्तोऽभावा यावद्धेत्वधिकरणावच्छेदेन हेतौ तद्वत्त्वस्य विवक्षितत्वात् न कोऽपि दोषः स्वपदं वृत्तिमत्त्वेनाभिमतपरमिति प्राहुः । केचित्तु स्वानुयोग्यनधिकरणावच्छिन्ना याऽधिकरणता तदन्यहेत्वधिकरणावच्छिन्नाधिकरणताकत्वेन तादृशसाध्याभावसमुदायाधिकरणवृत्तित्वाभावस्य विशेषणीयत्वात्तादृशाभावस्य लक्षणाघटकतया तमादाय न दोषः स्वानुयोग्यनधिकरणत्वं च हेतुतावच्छेदकसम्बन्धेन बोध्यम् । स्वपदं तादृशसाध्याभावसमुदायाधिकरणवृत्तित्वाभावाधिकरणतापरमित्याहुः ॥ ४३ ॥

अथात्र लक्षणे घटवृत्तित्वविशिष्टवाच्यत्वघटान्यवृत्तित्वविशिष्टवाच्यत्वाद्यभावमादाय वाच्यं ज्ञेयत्वादित्यत्राव्याप्तिः तादृशसाध्याभावघटितकूटाधिकरणाप्रसिद्धेः । न च विशिष्टस्यातिरिक्तत्वमते विशिष्टाभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावादेव व्युदास इति वाच्यम् । तथा सति घटभेदतदन्यप्रमेयैतदुभयाभावघटितकूटाधिकरणाप्रसिद्ध्या प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तेर्दुर्वारत्वात् । न चोभयत्वमप्येकविशिष्टापरत्वमेवेति वाच्यम् । तथा सति वृत्तित्वालोकान्यत्वोभयाभावमादाय तादृशवृत्तिनात्वे प्रतियोगिताव्यापकत्वदलव्यावृत्तिदानासङ्गतिरिति चेन्न । साध्यतावच्छेदकसमनियतप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य स्वयमेव निवेशिततया स्वन्यूनवृत्तिपदेन स्वावच्छिन्नान-

धिकरणसाध्याधिकरणनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वे सति स्वसमानाधिकरणधर्मस्य विवक्षितत्वादेवोक्ताभावव्युदासात् साध्याधिकरणत्वनिवेशाच्च वह्निधूमोभयवान् वह्नेरित्यादावुभयाभावादेः संग्राह्यतया नातिव्याप्तिरिति। वस्तुतस्तु एतदस्वरसेनैव तल्लक्षणमपहाय एतेनेत्यादिना लक्षणान्तरानुधावनं कृतम्। अत एव परलक्षणे साध्याभावे साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वनिवेशे वह्निमान् धूमादित्यत्रैवाव्याप्तिसम्भवे तामपहाय वाच्यं ज्ञेयत्वादिति सत्तावान् द्रव्यत्वादित्येकव्यक्तिसाध्यके जगदीशस्याव्याप्तिदानमपि सङ्गच्छत इति ध्येयम् ॥ ४४ ॥

अत्र च हेत्वधिकरणयत्किञ्चिद्व्यक्तौ दैशिकविशेषणतया कूटस्य वर्तमानत्वमेव हेतुसामानाधिकरण्यं बोध्यं तेन पृथिवी द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यादौ जले तेजसि च साधनसमानाधिकरणस्य जलावृत्त्यभावस्य तेजोऽवृत्त्यभावस्य च उक्तरूपावच्छिन्नप्रतियोगिताकत्वात् तदुभयकूटाधिकरणजात्यादौ हेतोरवृत्तित्वे ऽपि नातिव्याप्तिः हेत्वधिकरणजलादिप्रत्येकनिष्ठं यत्तादृशकूटं तदधिकरणे जलादौ हेतोः सत्त्वादिति जगदीशः। अत्रेयमनुपपत्तिः। अथात्र साधनसमानाधिकरणस्य विपक्षीभूततत्तद्व्यक्तिभेदाभावस्यापि साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वात् तद्घटितकूटाधिकरणाप्रसिद्धयैवातिव्याप्त्यसम्भवे तद्वारकं हेत्वधिकरणयत्किञ्चिद्व्यक्तौ दैशिकविशेषणतया वर्तमानत्वमित्यादिविशेषणवैयर्थ्यमिति चेदत्र केचित्। साध्यतावच्छेदकसम्बन्धेन व्यापकत्वं तत्सम्बन्धावच्छिन्नप्रतियोगिताकत्वमभावविशेषणमित्यभिप्रायेण एतद्ग्रन्थसङ्गतिरित्याहुः। तन्मन्दम्। साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकत्वमित्यादिमतस्य ग्रन्थकृतैव प्राग्दूषितत्वादिति। नैवम्। यद्यत्सम्बन्धेन व्यापकत्वं तत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावकूटनिवेशापेक्षया लाघवेन साध्यव्यापकताघटकीभूतयत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावकूटवत्त्वं विवक्षितम्। तथा च पृथिवी द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यादौ साध्यव्यापकताघटकीभूतसमवायसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावकूटाधिकरणवृत्तित्वाभावस्य हेतौ सत्त्वेनातिव्याप्तिरतो हेत्वधिकरणयत्किञ्चिद्व्यक्तौ दैशिकविशेषण-

तया वर्तमानत्वं साध्याभावविशेषणं दत्तमिति ग्रन्थकृतामभिप्राय इति वयं समाधिमहे(१) ॥ ४५ ॥

इति कालीशङ्करभट्टाचार्यकृतं व्यधिकरणधर्मावच्छिन्नाभावजागदीशीक्रोडपत्रं समाप्तम् ॥

(१) इति समादधिरे—पा० २ पु० ।

# अथ सिद्धान्तलक्षणजागदीश्याः

## कालीशङ्करविरचितं क्रोडपत्रम् ।

ननु(१) तत्तद्व्यक्तित्वावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणायानवच्छेदकत्वानुसरणं कृतं दीधितिकृता तन्न सङ्गच्छते रूपवान् पृथिवीत्वादित्यादावव्याप्तिवारणायावश्यमवच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेश्यत्वादिति । न चैतत्कल्पे प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वनिवेशादेवाव्याप्तिवारणसम्भवे प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं न निवेशनीयमिति वाच्यम् । विषयितासमवायान्यतरसम्बन्धेन रूपत्वविशिष्टस्य साध्यतायामात्मघटान्यतरत्वादिहेतौ समवायेन रूपत्वविशिष्टाभावं विषयितया रूपत्वविशिष्टाभावं चादायाव्याप्तिवारणार्थं साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणं यद्रूपं तद्रूपपर्याप्तावच्छेदकताकसंसर्गतावच्छेदकत्वस्यावश्यं निवेशनीयत्वादितिचेन्न । यत्र वह्नित्वनिरूपितसमवायेन वह्नित्वविशिष्टस्य साध्यता तत्र साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वाप्रसिद्ध्या धूमादिहेतावव्याप्तिवारणार्थं स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपकत्वस्य प्रतियोगितायां निवेशनीयत्वेन तादृशावच्छेदकत्वा-

---

(१) अथ प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवतीतिमूलोक्तलक्षणे तादृशप्रतियोगिभिन्नत्वनिवेशेनैव सामञ्जस्ये प्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वनिवेशो व्यर्थ इति चेन्न । तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगित्वं तत्सम्बन्धेन वृत्तिमत्पदार्थ एव स्वीक्रियते इति मते समवायेन प्रमेयसाध्यकभावत्वहेतावतिव्याप्तेः समवायेन प्रमेयाभावीयप्रतियोगिभिन्नत्वस्यासमवायिप्रमेये सत्त्वादिति ।

निरूपकप्रतियोगिताकतत्तद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्तिसङ्गतिः(१) ॥ १ ॥

ननु यद्धर्मावच्छिन्नवाचकपदोत्तरमन्यादिपदश्रुतिरित्यादिव्युत्पत्त्या प्रतियोगितावच्छेदकावच्छिन्नं यद्भिन्नं भवति तेन समं सामानाधिकरण्यमित्येव वक्तुमुचितं न तु व्युत्पत्तिवैचित्र्यं स्वीककरणीयमनुरोधाभावादिति चेन्न । प्रतियोगितावच्छेदकावच्छिन्नत्वावच्छेदेन यद्भिन्नत्व तत्सामानाधिकरण्यं व्याप्तिरित्यवश्यं वाच्यमन्यथा प्रतियोगितावच्छेदकघटत्वावच्छिन्ने धूमभेदसत्त्वात् धूमवान् वह्नेरित्यादावतिव्याप्तिः न च तथाप्युभयभेदमादायातिव्याप्तिरिति वाच्यम् । यद्भिन्नत्वपदेन यद्धर्मावच्छिन्नप्रतियोगिताकभेदस्य विवक्षितत्वात् तथा च प्रमेयवान् वाच्यत्वादित्यत्र प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्याव्याप्तिरिति ॥ २ ॥

प्रतियोग्यसमानाधिकरणेतिमूलोक्तलक्षणे तत्तद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्तिवारणायानवच्छेदकत्वानुसरणं कृतं तन्न सङ्गच्छते । स्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन साध्यविशिष्टान्यत्वस्याभावविशेषणात् धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणाय स्वसामानाधिकरण्यदलं वह्निमान् धूमादित्यादावभावाप्रसिद्धिवारणाय स्वप्रतियोगिकत्वदलम् । न च यस्या महानसीयवह्निव्यक्तेः प्रतियोगिकत्वं तस्याः सामानाधिकरण्यविरहात् तत्तद्व्यक्तित्वावच्छिन्नाभावस्य लक्षणघटकत्वेन तमादायाव्याप्तितादवस्थ्यमिति वाच्यम् । स्वप्रतियोगिकत्वपदेन स्वाश्रयप्रतियोगिकत्वस्य स्वसामानाधिकरण्यपदेन च स्वाश्रयसामानाधिकरण्यस्योक्तत्वात् । न च कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाभावस्य लक्षणाघटकत्वात् संयोगी सत्त्वादित्यादौ गुणावृत्तित्वावच्छिन्नाभावमादायातिव्याप्तिवारणाच्च प्रतियोग्यसमानाधिकरणपदस्य वैयर्थ्यमिति वाच्यम् । प्रमेयवान् वाच्यत्वादित्यादावभावमात्रस्य प्रमेयत्वाश्रयप्रतियोगिकत्वप्रमेयत्वाश्रयसामा-

(१) अत्र च प्रमेयप्रतियोगिकस्वरूपसम्बन्धेन प्रमेयविशिष्टस्य साध्यतास्थले ऽभावाप्रसिद्धिवारणाय स्वव्यापकत्वस्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकरूपवृत्तित्वोभयसम्बन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपकत्वं बोध्यम् । वृत्तित्वञ्च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ।

नाधिकरण्ययोः सत्त्वेन लक्षणाघटकत्वाद्व्याप्तिवारणाय स्वसामानाधिकरण्यघटकीभूतवृत्तित्वस्य विशेषणतया विवक्षितत्वात् कपिसंयोगाभाववान् मेयत्वादित्यत्राव्याप्तिवारणाय तत्सार्थक्यात् । न च प्रतियोगिवैयधिकरण्यस्य प्रतियोगितावच्छेदकसम्बन्धेन निवेश्यतया वह्निमान् धूमादित्यादौ द्रव्यत्वाभावाभावमादायाव्याप्त्यभावात् स्वप्रतियोगिकत्वस्य वैयर्थ्यमिति वाच्यम् । वह्निमान् धूमादित्यादौ पर्वतावृत्तित्वावच्छिन्नाभावस्य पर्वतत्वात्मकतया तस्य विशेषणताविशेषसम्बन्धावच्छिन्नवृत्तित्वविरहात् लक्षणघटकत्वेन तमादायाव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रतियोगितायां निवेशनीयत्वात् । तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावमात्रस्य भावानात्मकतया स्वाश्रयसामानाधिकरण्यसम्बन्धेन साध्यतावच्छेदकविशिष्टतया तदन्याभावाप्रसिद्ध्याऽव्याप्तिरिति । न च समवायेन प्रमेयसाध्यकसत्त्वादिहेतौ साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकताद्दशाभावाप्रसिद्ध्याऽव्याप्तिवारणार्थं साध्यतावच्छेदकसम्बन्धसामान्ये याद्दशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वेत्यादिसम्बन्धधर्मिकोभयाभावघटितलक्षणानुसारेण प्रतियोगितायां सम्बन्धविशेषस्यानिवेशनीयतया भावात्मकाभावमादायाव्याप्तिवारणसम्भवे तद्वैयर्थ्यं दुर्वारमिति वाच्यम् । अभावो भेदत्वादित्यादौ ताद्दशाभावाप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात् । मैवम् । घटत्वाभावपटत्वाभावान्यतरवान् द्रव्यत्वादित्यादौ घटत्वपटत्वस्वरूपाभावप्रतियोगितायाः सकलसाध्ये सत्त्वेनाव्याप्तेरिति । न च तद्दोषवारणार्थमनवच्छेदकत्वानुसरणं क्रियत इति वाच्यम् । अभाववान् मेयत्वादित्यादौ घटत्वाभावाभावमादायाव्याप्तिरिति ॥ ३ ॥

ननु साध्याधिकरणवृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभावविशिष्टहेत्वधिकरणवृत्त्यभावप्रतियोगिताशून्यसाध्यसामानाधिकरण्यस्यैव सम्यक्त्वे ऽनवच्छेदकत्वानुसरणं व्यर्थमिति । असम्भववारणाय जगद्वृत्तिभिन्नत्वविशेषणस्य व्यभिचारिण्यतिव्याप्तिवारणाय साध्यवद्वृत्तित्वस्य उभयाभावस्य प्रतियोगिकोटौ निवेशः । न च व्यधिकरणसम्बन्धेन साध्याभावस्य जगद्वृत्तितया ताद्दशाभावमादायैव व्यभिचारिण्यतिव्याप्तिवारणसम्भवे साध्यवद्वृत्तित्वस्य वैयर्थ्यमिति वाच्यम् । समवायेन प्रमेयसाध्यकव्यभिचारिणि साध्य-

त्वादिहेतावतिव्याप्तिवारणाय तदावश्यकत्वात् साध्यवद्वृत्तित्वं तु स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन बोध्यं तेन धूमवान् वह्नेरित्यादौ नातिव्याप्तिः संयोगाभावस्य जगद्वृत्तितया उभयाभावसत्त्वेन तमादायाव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यदलस्य सार्थक्यात् । तदर्थश्च साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणो बोध्यः प्रतियोगिना तु न सम्बन्धविशेषेण निवेशनीया तथा च वह्निमान् धूमादित्यादौ स्वरूपेण घटाभावमादाय लक्षणसमन्वयः । एवं साध्यतावच्छेदकसम्बन्धसामान्यधर्मिकोभयाभावघटितप्रतियोगिवैयधिकरण्यकल्पे च गगनाभावमादायैव लक्षणसमन्वयः । मैवम् । संयोगी वृक्षत्वादित्यादावव्याप्तिः सकलसंयोगस्यैव निरुक्तप्रतियोगिव्यधिकरणस्य केवलान्वयिनस्तत्तत्संयोगाभावस्य प्रतियोगित्वादिति कृतं पल्लवितेन । अथ निरवच्छिन्नविशेषणताविशेषसम्बन्धेन जगद्वृत्तिभिन्नत्वस्य तादृशसम्बन्धेन साध्याधिकरणवृत्तित्वस्य च उभयाभाववान् यो हेत्वधिकरणवृत्त्यभावः तत्प्रतियोगिताशून्यसाध्यसामानाधिकरण्यस्योक्तौ नोक्तस्थले ऽव्याप्तिः तत्तत्संयोगाभावस्य तादृशोभयाभाववत्त्वाभावादिति । अनुगमस्तु स्वसमानकालीननिरवच्छिन्नविशेषणताविशेषसम्बन्धावच्छिन्नजगद्वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वतादृशसम्बन्धावच्छिन्नसाध्याधिकरणवृत्तित्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन यत्किञ्चिदभावविशिष्टहेत्वधिकरणवृत्तिर्योऽभावस्तत्प्रतियोगिताशून्यसाध्यसामानाधिकरण्यमिति समुदितार्थः । मैवम् । घटत्वाभावपटत्वाभावान्यतरवान् घटत्वपटत्वान्यतरस्मादित्यादौ कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावः आत्मानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकगगनाभावाभाव एतदन्यतरस्य साध्यतायां मेयत्वादिहेतावव्याप्तिः सर्वस्यैव साध्यस्य प्रत्येकाभावस्य निरुक्तलक्षणघटकतया तत्प्रतियोगित्वादिति ॥ ४ ॥

अथ प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावभिन्नाभावप्रतियोगिसाध्यसामानाधिकरण्यमेव व्याप्तिरित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकेत्यादिविशेषणं विफलम् । न च हेतुसमानाधिकरणाभावभिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरिति वाच्यम् साध्यतावच्छेदकसम्ब-

न्धेन प्रतियोगिवैयधिकरण्यस्य विवक्षणेनैव तद्दोषवारणात् । न च प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिरिति वाच्यम् । तादृशाभावभिन्नसंयोगसम्बन्धावच्छिन्नप्रमेयाभावमादायैवाव्याप्तिविरहादिति चेत् । उच्यते महानसीयवह्निमान् धूमादित्यादावतिव्याप्तिस्तादृशोऽभावभिन्नो यः संयोगसम्बन्धावच्छिन्नवह्न्यभावस्तत्प्रतियोगित्वस्य साध्ये सत्त्वादिति । न च तादृशाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्य साध्यतावच्छेदके विवक्षणे नैतद्दोषवारणमिति वाच्यम् । तस्य लक्षणान्तरत्वादिति ध्येयम् । यद्यपि कालिकादिसम्बन्धेन साध्याभावमादाय व्यभिचारिमात्रे दोषवारणाय प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकसम्बन्धेनैव वाच्यम् । तथा च विषयितासम्बन्धेन धूमत्वविशिष्टाभावप्रतियोगितावच्छेदकावच्छिन्नस्य ज्ञानस्य साध्यतावच्छेदकीभूतसंयोगसम्बन्धेनाधिकरणाप्रसिद्ध्या तादृशाभावे प्रतियोगिवैयधिकरण्याभावेन प्रतियोगिव्यधिकरणाभावभिन्नत्वस्याक्षततया तादृशाभावप्रतियोगितावच्छेदकत्वस्य धूमत्वादौ सत्त्वेन धूमवान् वह्निरित्यादावतिव्याप्तिः । तथापि साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकत्वस्य विवक्षणीयत्वान्न कोऽपि दोषः । न च तथापि जातिमदभावस्य हेतुसमानाधिकरणाभावभिन्नतया तत्प्रतियोगितावच्छेदकत्वस्य धूमत्वे सत्त्वेनातिव्याप्तिरिति वाच्यम् । तादृशप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वस्यापि निवेशनीयत्वादिति चेन्न । तदात्मत्वप्रतियोगिकसमवायेनात्मत्वसाध्यकज्ञानहेतुकव्यभिचारिण्यतिव्याप्तिस्तथाहि तादृशसमवायसम्बन्धेनात्मत्वाभावे प्रतियोगिवैयधिकरण्यस्य सत्त्वेऽपि व्यभिचारितया व्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्याप्यलक्ष्यत्वेन तत्र प्रतियोगिवैयधिकरण्याप्रवेशेन तदभावस्य हेतुसामानाधिकरण्याभावात् । हेतुसमानाधिकरणाभावभिन्नाभावतया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाद्व्यभिचारिण उभयलक्षणस्यैवालक्ष्यत्वाल्लाघवात्रासम्भवाच्चेति । यदि च व्याप्यवृत्त्यव्याप्यवृत्तिसाध्यकस्थलमात्र एव साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन यदभावप्रतियोग्यधिकरणत्वाभाववत्त्वं हेतुमतस्तदभावभिन्नाभावप्रतियोगितावच्छेद-

कत्वं साध्यतावच्छेदके विवक्षणीयं तथा च न कोऽपि दोष इति सूक्ष्ममीक्ष्यते तदा सुधीभिरेवात्र दोषोऽनुसन्धेय इति ध्येयम् ॥ ५ ॥

न च तथापि यद्रूपावच्छिन्नाधिकरणत्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वं न भवति तत्तद्रूपावच्छिन्नसामानाधिकरण्यस्य विवक्षणेनैव सामञ्जस्ये कृतं साध्यतावच्छेदकतदितरेत्यादिविशेषणेनेति वाच्यम् । सामान्यधर्मावच्छिन्नाधिकरणत्वानभ्युपगन्तृमते वह्निमान् धूमादित्यादावव्याप्तिरिति दिक् ॥ ६ ॥

अथ यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगिताभिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताश्रयसामानाधिकरण्यं व्याप्तिरित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकेत्यादि विफलमिति चेत् । न धूमवदनुयोगिकसंयोगेन वह्नेः साध्यत्वे वह्न्यधिकरणत्वादिहेतावतिव्याप्तिः तादृशप्रतियोगिताभिन्ना या संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिता तदाश्रयसामानाधिकरण्यसत्त्वादिति ध्येयम् ॥ ७ ॥

अथ साध्यतावच्छेदके प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत् तदवच्छिन्नभेदकूटसामानाधिकरण्यविवक्षणेनैव सामञ्जस्ये कृतं साध्यतावच्छेदकेत्यादिविवक्षणेनेति । न च गगनवृत्तित्वविशिष्टवह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगिनिरूपिताधिकरणत्वाभावस्य प्रतियोगिव्यधिकरणपदेन विवक्षितत्वात् । न च विषयितासम्बन्धेन प्रमेयस्य साध्यतायां तज्ज्ञानत्वादिहेतावव्याप्तिस्तादृशाभावाप्रसिद्धेरिति वाच्यम् । प्रतियोगिताव्याप्यनिरूपकत्वस्य विवक्षितत्वादितिचेत् । न तस्य लक्षणान्तरत्वादिति । एतेन प्रतियोगित्वसम्बन्धेन महानसीयवह्निसाध्यकस्थले प्रत्येकेन महानसीयाद्यभावमादायाव्याप्तिरित्यपि प्रत्युक्तम् एतादृशप्रतियोगिव्यधिकरणत्वस्य लक्षणघटकत्वात् प्रत्येकाभावे प्रतियोगिवैयधिकरण्याभावादिति ध्येयम् ॥ ८ ॥

अथ विशिष्टाभावोभयाभावमादायासम्भवसम्भवे तत्तद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्तिदानं सन्दर्भविरुद्धं कृतं जगदीशेनेति चेत् । न तादात्म्येन गगनस्य साध्यतायां तद्व्यक्तित्वादिहेतौ

साध्यघटितविशिष्टाभावोभयाभावस्य प्रतियोगिवैयधिकरण्यविरहेण तत्र लक्षणगमनान्नासम्भव इति ध्येयम् ॥ ९ ॥

न च महानसीयवह्निर्नास्तीतिप्रतीतिसिद्धस्य हेतुमन्निष्ठाभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तितादवस्थ्यमिति वाच्यम् । साध्यतावच्छेदकतदितरोभयावच्छेद्यभिन्नाया एव प्रतियोगिताया अनवच्छेदकत्वस्य विवक्षितत्वादिति जगदीशः । साध्यतावच्छेदकेतरपदेन साध्यतावच्छेदकतावच्छेदकरूपेण स्वानवच्छिन्नप्रकारतावच्छेदकत्वं विवक्षणीयमतो न प्रमेयवान् वाच्यत्वादित्यत्र स्वानवच्छिन्नप्रकारत्वाप्रसिद्ध्या तदितराप्रसिद्धिः । एवञ्चेज्जातिमत्त्वान् भावत्वादित्यत्रातिव्याप्तिः तथाहि जातिमदभावीयप्रतियोगिताया जातित्वरूपेण जात्यनवच्छिन्नघटत्वानितिज्ञानीयघटनिष्ठप्रकारतावच्छेदकं यद्घटत्वादिकं साध्यतावच्छेदकं यज्जातिमत्त्वमेतदुभयनिष्ठावच्छेदकतानिरूपकत्वात् जातिमदभावो न लक्षणघटकः किन्तु तत्तद्व्यक्तित्वावच्छिन्नाभाव एव तथा च तत्प्रतियोगितानवच्छेदकं जातिमत्त्वम् अत्रापि प्रत्येकाभावमादायातिव्याप्तिवारणे ऽपि महानसीयवह्निभिन्नवह्नित्ववत्त्वान् धूमादित्यादावति व्याप्तिर्बोध्या । मैवम् । साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मविशिष्टधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकत्वानिरूपिका या प्रतियोगिता तदनवच्छेदकत्वस्य विवक्षितत्वात् । वैशिष्ट्यं च स्वाभाववद्वृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन तथा च वह्निमान् धूमादित्यादौ महानसीयवह्न्यभावमादाय नाव्याप्तिः तथाहि तदभावीयप्रतियोगिताया साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यद्वह्नित्वनिष्ठैकत्वं तद्विशिष्टं महानसीयत्ववह्नित्वनिष्ठद्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकत्वात् जातिमत्त्वान् भावत्वादित्यादौ च नातिव्याप्तिरिति ध्येयम् । वस्तुतस्तु स्वनिरूपितत्वस्वभिन्नप्रकृतानुमितिविधेयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपकत्वोभयसम्बन्धेनावच्छेदकताविशिष्टान्याया एव प्रतियोगिताया अनवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वान्न कोऽपि दोषः ॥ १० ॥

वह्निमान् धूमादित्यादौ महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावमादायाव्याप्तिवारणायावच्छेदकतायां निरवच्छिन्नत्वं निवेशितं

जगदीशेन । न चात्र महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वह्निर्नास्तीतिप्रतीतिसिद्धाभावीयप्रतियोगितायाः निरवच्छिन्नावच्छेदकत्वस्य वह्नित्वे सत्त्वादव्याप्तितादवस्थ्यमिति वाच्यम् । अव्यावर्तकत्वेन तादृशप्रतीत्या वह्नित्वे निरवच्छिन्नावच्छेदकत्वानवगाहनात् । अथवा स्वावच्छिन्नावच्छेदकताविशिष्टान्यत्वरूपं निरवच्छिन्नत्वमत्र विवक्षितम् । वैशिष्ट्यं च स्वनिरूपकप्रतियोगित्वनिरूपितत्वस्वसामानाधिकरण्यैतदुभयसम्बन्धेन ग्राह्यम् । तथा च वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकत्वस्यापि तादृशसम्बन्धेन स्वावच्छिन्नावच्छेदकत्वविशिष्टतया नाव्याप्तिरिति भावः । वस्तुनस्तु स्वावच्छिन्नावच्छेदकत्वानिरूपकत्वमेव निरवच्छिन्नत्वं प्रतियोगितायां निरवच्छिन्नत्वम् अतो न तादृशाभावप्रतियोगिता लक्षणघटिका इति नाव्याप्तिरिति भावः । न च साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं व्यर्थं महानसीयवह्न्यभावप्रतियोगितायाः स्वावच्छिन्नावच्छेदकतानिरूपकत्वेन लक्षणाघटकत्वादिति वाच्यम् । तार्णवह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गात् । यद्यपि तादृशाभावप्रतियोगिताया अवच्छेदकत्वं तार्णत्व एव स्वीक्रियते लाघवान्न तु वह्नित्वे अव्यावर्तकत्वात् तथापि कालो रजतमित्यादिप्रतीत्या कालिकसम्बन्धेन जात्यादेः स्वरूपतो भानात् कालिकसम्बन्धेन गुणत्वविशिष्टस्य साध्यतायां द्रव्यत्वादिहेतौ कालिकेन गुणत्वविशिष्टस्य समवायेन रूपत्वविशिष्टस्य गुणत्ववद्रूपस्याभावमादायाव्याप्तिवारणाय तत्सार्थक्यादिति ध्येयम् ॥ ११ ॥

अत्रेयमापत्तिः । ननु व्यभिचारिमात्रस्य सर्वस्या निरुक्तेरलक्ष्यतया शुद्धसाध्यतावच्छेदकस्थलीयनिरुक्तौ दण्डिमान् द्रव्यत्वादित्यादावतिव्याप्तिरिति चेत् । न । हेतुमन्निष्ठाभावप्रतियोगिताया निरवच्छिन्नावच्छेदकत्वाभाववत्त्वे सति निरवच्छिन्नावच्छेदकताश्रयसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति सर्वं सुस्थितम् ॥ १२ ॥

ननु विशिष्टसाध्यतावच्छेदककस्थले हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशेऽपि दण्डिमान् दण्डिसंयोगादित्यादौ तत्तद्व्यक्तित्वावच्छिन्नदण्डनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाव्याप्तिसम्भवे रूपत्वन्यूनवृत्तिजातिमत्त्वात् रूपादित्यादिस्थलान्तरानुधावनमनुचितम् । न च साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वनि-

वेशे एव तात्पर्यमन्यथा जातिमत्त्वान् घटत्वादित्यादौ पटसमवेतत्वविशिष्टवान् नास्तीतिप्रतीतिसाक्षिकपटसमवेतत्ववैशिष्ट्यमात्रावच्छिन्नजातिनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तितादवस्थ्यापातात्। तथा च तत्तद्व्यक्तित्वावच्छिन्नदण्डनिष्ठावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरतद्व्यक्तित्वावच्छिन्नत्वेन तदभावस्य लक्षणाघटकत्वान्नाव्याप्तिरिति वाच्यम्। तथा सति संयोगेन तद्व्यक्तिमतः कथञ्चित्सम्बन्धेन साध्यतायामव्याप्त्यापत्तेः। साध्यतावच्छेदकताघटकसंयोगसम्बन्धावच्छिन्नहेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकेतरधर्मावच्छिन्नत्वेन तादृशावच्छेदकत्वाप्रसिद्धेः। जात्यखण्डोपाध्यतिरिक्तस्य स्वरूपतो भाने मानाभावाद्रूपत्ववत्त्वान् रूपवान् वा पृथिवीत्वादित्यादौ विषयितासम्बन्धेन रूपत्वविशिष्टाभावमादायाव्याप्तिवारणायावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकत्वादिति चेत्। न तत्राव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकेतरधर्मानवच्छिन्नावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावविशिष्टत्वस्य निवेशनीयत्वात्। तथा च रूपत्ववत्त्वान् रूपवान् वा पृथिवीत्वादित्यादौ विषयितावच्छिन्नरूपत्वनिष्ठावच्छेदकतायां तादृशोभयाभावासत्त्वेन विषयितया रूपत्वविशिष्टाभावस्य लक्षणाघटकत्वान्नाव्याप्तिः। संयोगेन तद्व्यक्तिमतः कथञ्चित्सम्बन्धेन साध्यतास्थले तु घटाभावो लक्षणघटक. घटत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकनिष्ठत्वविरहेणोभयाभावसत्त्वात्॥ १३॥

रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्ववदभावमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमेव प्रतियोगितावच्छेदकतायां निवेशनीयमिति जगदीशेनोक्तम्। अन्वयमापत्तिः। यत्र कालिकसम्बन्धेन महानसानुयोगिकसंयोगविशिष्टस्य समवायेन वह्नित्वविशिष्टस्य वह्नेः संयोगेन साध्यता धूमादिर्हेतुस्तत्र समवायसम्बन्धेन महानसानुयोगिकसंयोगविशिष्टस्य कालिकेन वह्नित्वविशिष्टस्याभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिः एवं विशेषरूपेण संसर्गतासत्त्वे वह्नित्वप्रतियोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेदकस्थले साध्यतावच्छेदकताघटकसंसर्गावच्छिन्नावच्छेदकताकहे-

नुसमानाधिकरणाभावाप्रसिद्ध्याऽव्याप्तिश्च । न च पूर्वोक्तस्थले कालिकेन महानसानुयोगिकसंयोगविशिष्टस्य समवायेन वह्नित्व-विशिष्टस्य पर्वते सत्त्वात् पूर्वोक्तताद्दशाभावस्य प्रतियोगिव्यधि-करणत्वाभावादेव नातिव्याप्तिरिति वाच्यम् । समवायेन महा-नसानुयोगिकसंयोगविशिष्टस्य कालिकेन वह्नित्वविशिष्टस्य सा-ध्यतायां धूमादिहेतावतिव्याप्तिभिया स्वानवच्छेदकसम्बन्धाव-च्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन स्वप्रतियोगिताव-च्छेदकताविशिष्टान्यत्वस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरण-ताघटकनिरूपकतावच्छेदकतायां निवेश्यत्वात् । न च तथापि कालिकेन वह्नित्वनिष्ठावच्छेदकतानिरूपिका सती तेनैव सम्बन्धेन महानसानुयोगिकसंयोगनिष्ठावच्छेदकतानिरूपिका या निरूपकता तस्या अपि निरुक्तस्वप्रतियोगितावच्छेदकताविशिष्टान्यवह्नित्वनि-ष्ठकालिकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वेन पर्वतादौ स-त्त्वात् प्रतियोगिव्यधिकरणत्वाभाव इति वाच्यम् । स्वानवच्छे-दकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन स्वप्र-तियोगितावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वस्य प्रतियो-गितावच्छेदकावच्छिन्नाधिकरणताघटकनिरूपकतायां निवेशनीय-त्वात् । मैवम् । स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसामाना-धिकरण्योभयसम्बन्धेन साध्यतावच्छेदकताविशिष्टा या अवच्छे-दकता तदनिरूपकत्वस्य प्रतियोगिताया विशेषणत्वे ऽपि कालिकेन जातिविशिष्टस्य समवायेन धूमत्वविशिष्टस्य साध्यत्वे वह्न्यादिहे-तावतिव्याप्तिः । धूमत्वनिष्ठकालिकसम्बन्धावच्छिन्ना या साध्यताव-च्छेदकता तदनवच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यै-तदुभयसम्बन्धेन तद्विशिष्टप्रतियोगितावच्छेदकतानिरूपितत्वेन सा-ध्याभावस्य लक्षणाघटकत्वात् स्वनिष्ठसाध्यतावच्छेदकतानवच्छे-दकसम्बन्धावच्छिन्नत्वस्वनिष्ठत्वैतदुभयसम्बन्धेन साध्यतावच्छे-दकविशिष्टावच्छेदकत्वानिरूपकत्वस्य निवेशे ऽपि समवायेन ज्ञा-तृत्वावच्छिन्नस्य विषयितया स्वरूपतो ज्ञानत्वस्य यत्र साध्य-तावच्छेदकत्वं ज्ञानमित्याकारकज्ञानत्वं च हेतुस्तत्र साधनसमाना-धिकरणस्य साध्यतावच्छेदकीभूततादात्म्यसम्बन्धावच्छिन्नप्रति-योगिताकस्य विषयितया ज्ञानत्वत्वविशिष्टवज्ज्ञानभेदस्य निरुक्तोभ-यसम्बन्धेन साध्यतावच्छेदकाविशिष्टावच्छेदकत्वानिरूपकत्वस्य प्र-

तियोगितायां सत्त्वात् तत्र हेतावव्याप्तिः । न च स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसमनियतत्वोभयसम्बन्धेन साध्यतावच्छेदकतावैशिष्ट्यं निवेश्यमतो न कोऽपि दोष इति वाच्यम् । कालिकेन धूमत्वविशिष्टस्य समवायेन धूमत्वविशिष्टस्य कालिकेन रूपत्वविशिष्टस्य समवायेन रूपत्वविशिष्टस्य वा यत्र साध्यता तत्र धूमत्वविशिष्टधूमवान् वह्नेः रूपत्ववद्रूपवान् ज्ञानत्वादित्यत्रातिव्याप्तिरिति । अत्र केचित् स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यस्वसाजात्यैतत्त्रितयसम्बन्धेन साध्यतावच्छेदकताविशिष्टप्रतियोगितावच्छेदकत्वानिरूपकत्वविशेषणेन न दोषः । स्वसाजात्यं च निरवच्छिन्नत्वकिञ्चिद्धर्मावच्छिन्नत्वान्यतररूपेण अविलक्षणतया भासमानस्य धूमत्वादेश्च न द्विधा साध्यतावच्छेदकत्वं मानाभावादतः कालिकेन स्वरूपत एव यत्र धूमत्वस्य साध्यतावच्छेदकत्वं समवायेन तथात्वं तत्र नातिव्याप्तिः यत्र कालिकसमवायोभयसम्बन्धेन धूमत्वस्य साध्यतावच्छेदकत्वं तत्र दोषप्रसक्तिरेव नास्तीति ध्येयम् । सम्बन्धभेदेऽपि निरवच्छिन्नावच्छेदकता एकैवेति हृदयम् । न च तथापि रूपत्ववत्त्वान् पृथिवीत्वादित्यत्र विषयितया स्वरूपतो रूपत्वविशिष्टाभावमादायाव्याप्तिरिति वाच्यम् । एतत्त्रितयसम्बन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपकप्रतियोगिताकहेतुसमानाधिकरणाभावीयप्रतियोगितानिरूपितसाध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववदवच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षितत्वात् । परे तु स्वावच्छिन्नत्वस्वावच्छिन्नसाध्यतावच्छेदकताव्यापकत्वैतदुभयसम्बन्धेन साध्यतावच्छेदकताघटकसम्बन्धविशिष्टान्यसाध्यतावच्छेदकनिष्ठसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वं प्रतियोगितायां निवेशनीयम् । उक्ताभावप्रतियोगितावच्छेदकतायां स्वविशिष्टान्यत्वसम्पादनाय सम्बन्धघटकतया स्वावच्छिन्नत्वनिवेशः समवायसम्बन्धेन जातेः साध्यतावच्छेदकतायां कालिकेन वह्नित्वस्य साध्यतावच्छेदकतायां जातिमद्वह्निमान् ह्रदत्वादित्यत्र सद्धेतौ समवायेन वह्नित्वविशिष्टत्वे सति कालिकेन जातिविशिष्टं यत् तदभावमादायाव्याप्तिवारणार्थं सम्बन्धघटकतया व्यापकत्वानिवेशः तथा च समवायसम्बन्धाव-

च्छिन्नवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतायास्तादृशविशिष्टान्यत्वात् निरुक्ताभावस्य लक्षणाघटकत्वमिति । वह्निमान् धूमादित्यादौ घटाभावस्य लक्षणघटकत्वसम्पादनाय साध्यतावच्छेदकनिष्ठेत्यवच्छेदकताविशेषणम् । समवायेन प्रमेयसाध्यतावच्छेदककस्थले प्रमेयवत्त्वान् धूमादित्यादौ घटाभावस्य लक्षणाघटकत्वेऽपि तत्तद्यत्त्वाभावमादाय लक्षणगमनाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं साध्यतावच्छेदकनिष्ठावच्छेदकतायां विशेषणं देयमिति । यदि च वह्निमान् धूमादित्यादौ निरुक्तसम्बन्धविशिष्टान्यसाध्यतावच्छेदकनिष्ठसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिरिति विभाव्यते तदा स्वावच्छिन्नत्वस्वावच्छिन्नसाध्यतावच्छेदकताव्यापकत्वैतदुभयसम्बन्धेन साध्यतावच्छेदकताघटकसम्बन्धविशिष्टान्यावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकत्वनिरूपितत्वोभयाभाववत्त्वस्य प्रतियोगितायां निवेश्यत्वान्न काचिदनुपपत्तिरिति ध्येयम् । अथवा निरुक्तसम्बन्धेन तादृशसम्बन्धविशिष्टान्या या साध्यतावच्छेदकताघटकसम्बन्धविशिष्टावच्छेदकता तदनिरूपकत्वं हेतुमन्निष्ठाभावप्रतियोगितायां विवक्षितम् । साध्यतावच्छेदकताघटकसम्बन्धवैशिष्ट्यं च स्वावच्छिन्नसाध्यतावच्छेदकताव्यापकत्वसम्बन्धेन उभयव्यापकत्वं स्वनिरूपकप्रतियोगितानिरूपितावच्छेदकत्वत्वरूपेण बोध्यमिति ध्येयम् । यद्वा स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसमानाधिकरणावच्छेदकतानिरूपकत्वस्वनिरूपितसाध्यताश्रयवन्निष्ठप्रतियोगिव्यधिकरणाभावीयत्वोभयसम्बन्धेन साध्यतावच्छेदकताविशिष्टान्यत्वं हेतुमन्निष्ठाभावीयप्रतियोगितायां निवेश्यमतो न कोऽपि दोषः । न च विषयितया ज्ञानत्वत्वेन ज्ञानत्वविशिष्टस्य साध्यत्वे तज्ज्ञानत्वादिहेतौ विषयितया स्वरूपतो ज्ञानत्वविशिष्टभेदमादायाव्याप्तिरिति वाच्यम् । विशिष्टसाध्यतावच्छेदककस्थले स्वावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धेन यद्रूपेण साध्यतावच्छेदकत्वं तदितरानवच्छिन्नावच्छेदकताकहेतुमन्निष्ठाभावीयनिरुक्तसम्बन्धेन साध्यतावच्छेदकताविशिष्टान्यप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षितत्वादिति ध्येयम् ॥ १४ ॥

अथ -साध्यवद्वृत्त्यभावीयत्वसाध्यतावच्छेदकनिष्ठावच्छेदकता-

निरूपितत्वोभयाभावविशिष्टहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात् साध्यतावच्छेदकतदितरेत्याद्यवच्छेदकतायां निरवच्छिन्नत्वं यद्रूपेण साध्यतावच्छेदकत्वं तत्तदितरोभयानवच्छिन्नत्वं साध्यतावच्छेदताघटकसम्बन्धावच्छिन्नत्वमित्यादिविशेषणं व्यर्थमिति । न च कपिसंयोग्येतत्वादित्यादावव्याप्तिवारणार्थं प्रतियोगिवैयधिकरण्यनिवेशवैयर्थ्यमिति वाच्यम् । कपिसंयोगी सत्त्वादित्यादौ कपिसंयोगाभावस्य तादृशोभयाभावविशिष्टप्रतियोगिताकत्वविरहाल्लक्षणाघटकतयाऽतिव्याप्तिवारणाय निरवच्छिन्नवृत्तिकाभावीयत्वसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वोभयाभावस्य वक्तव्यतया साध्याभावमादायोक्तस्थले ऽव्याप्तिवारणाय तद्दलसार्थक्यात् । न च विशिष्टसत्ताभाववान् जातेरित्यादावतिव्याप्तिः विशिष्टसत्ताभावाभावस्य विशिष्टसत्तानतिरेकितया तदीयप्रतियोगितायां तादृशोभयाभावान्तरत्वेन लक्षणाघटकत्वादिति वाच्यम् । साध्यवद्वृत्तितावच्छेदकीभूतानुयोगितानिरूपितत्वघटितोभयाभावस्य प्रतियोगितायां निवेशनीयत्वात् । न च प्रमेयवत्त्वान् धूमादित्यत्र प्रमेयसाध्यतावच्छेदककस्थले तादृशोभयाभाववत्प्रतियोगिताकाभावाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । तत्र परम्परासम्बन्धेन प्रमेयत्वस्यैव साध्यतावच्छेदकत्वात् तथा च घटाभावमादाय तत्र लक्षणसङ्गतिः । न च तत्राव्याप्तिवारणायं स्वावच्छिन्नवृत्तिकान्यसाध्यवद्वृत्त्यभावीयत्वघटितोभयाभाववत्त्वं तादृशप्रतियोगितायां विवक्षणीयम् । घटाद्यभावस्य स्वावच्छिन्नवृत्तिकान्यत्वाभावेन तदीयप्रतियोगितायां तादृशोभयाभाववत्त्वेन तमादाय लक्षणसमन्वयसम्भवे एतावान् प्रयासोऽनुचित इति वाच्यम् । तथा सति संयोगी द्रव्यत्वादित्यादौ कपिसयोगाभावस्यापि तथात्वेन तमादायाव्याप्तिरिति । मैवम् । समवायसम्बन्धावच्छिन्नवह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिमाशङ्क्य ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्ट इति प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणस्य वैयर्थ्यप्रसङ्गात् । न च भवतु वैयर्थ्यमिति वाच्यम् । वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वानङ्गीकारे सम्बन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभावस्य तादृशोभयाभाववत्प्रतियोगिताकत्वविरहेण लक्षणाघटकतया स्वामित्वादिसम्बन्धेन धनादिसा-

ध्यकद्रव्यत्वादिहेतावतिव्याप्तेः अस्मन्मते तु साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तिसम्बन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभावमादाय नातिव्याप्तिः । अत्र च साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणसाध्यवद्वृत्त्यभावीयत्वघटितोभयाभाववत्त्वविवक्षणे न कोऽपि दोष इति ध्येयम् ॥ १५ ॥

अथैतत्कल्पे साध्यताघटकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकाश्रयाधिकरणत्वाभाववद्धेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यस्य व्याप्तित्वसम्भवे व्यर्थं साध्यतावच्छेदकतादितरेत्यादिविशेषणमिति । न च घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिः सर्वस्यैव हेतुमतः प्रतियोगितावच्छेदकीभूताभावत्वाश्रयाधिकरणत्वादिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकाश्रयाधिकरणत्वाभावस्य विवक्षितत्वादिति चेत् । न । व्याप्यवृत्त्यव्याप्यवृत्तिसाध्यकस्थलसाधारणसाध्यतावच्छेदकतादितरेत्यादिविशेषणखण्डनस्य सन्दर्भविरोधापत्तेरिति ध्येयम् ॥ १६ ॥

अथ प्रतियोगितासम्बन्धेन महानसीयवह्न्यादेः साध्यत्वे तदभावत्वादिहेतावव्याप्तिः प्रत्येकेन महानसीयो नास्ति वह्निर्नास्तीत्याद्यभावीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वादिति चेत् । न । साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वपदेनानुमितिविधेयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकीभूतो योऽभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदको धर्मस्तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकसाध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वस्य प्रतियोगितायां विवक्षितत्वादिति । साध्यतावच्छेदकतावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यैतदुभयसम्बन्धेन एवं च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्य तत्रैव तात्पर्यमिति ॥ १७ ॥

ननु साध्यतावच्छेदकतावृत्तिधर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य साधनवन्निष्ठाभावप्रतियोगितायां निवेशनेनैवाव्याप्तिवारणात् किं शुद्धसाध्यतावच्छेदककस्थले विशिष्टसाध्यतावच्छेदकक-

स्थले च द्विधा निवेशेन । वृत्तित्वं च स्वावच्छेद्यसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेनेति चेत् । न । महानसीयवह्निमान् धूमादित्यादावतिव्याप्तिः निरुक्तसम्बन्धेन वह्निनिष्ठावच्छेदकतावृत्ति यन्महानसीयत्वं तद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्वस्य साध्याभावप्रतियोगितायां सत्त्वेन साध्याभावस्य लक्षणाघटकत्वात् । न च साध्यतावृत्तिधर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य हेतुमन्निष्ठाभावप्रतियोगितायां निवेशान्न दोषः साध्यतावृत्तित्वं च स्वावच्छिन्नावच्छेदकत्वनिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेनेति वाच्यम् । वृत्तिमद्वह्निमत्त्वान् धूमादित्यादौ महानसीयवह्निवृत्तित्वविशिष्टवद्भानमादायाव्याप्तिरिति ॥ १८ ॥

अथ साध्यवद्वृत्त्यभावीयसाध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितत्वस्य प्रतियोगितायां निवेशादेव सामञ्जस्ये प्रतियोगितायां तादृशोभयानवच्छिन्नत्वस्य शुद्धसाध्यतावच्छेदकस्थले ऽवच्छेदकतायां निरवच्छिन्नत्वस्य विशिष्टसाध्यतावच्छेदकस्थले तादृशोभयानवच्छिन्नत्वस्य च नैष्फल्यमिति । न च प्रमेयसाध्यतावच्छेदककस्थले तादृशप्रतियोगित्वाप्रसिद्धिरिति वाच्यम् । विशिष्टसाध्यतावच्छेदककस्थले तादृशोभयानवच्छिन्नत्वमवच्छेदकतायामनिवेश्य प्रागुक्तरीत्या स्वावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धेन साध्यवद्वृत्त्यभावीयसाध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपकप्रतियोगिताकाभावीयप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके विलक्षणात् । तत्र घटाभावीयघटनिष्ठप्रतियोगित्वस्यैव तादृशस्य सम्भवात् घटत्वस्य निरवच्छिन्नावच्छेदकत्वसम्भवात् । न च तद्रूपवान् तद्रसादित्यादौ साध्यवद्वृत्त्यभावीयसाध्यतावच्छेदकनिष्ठावच्छेदकत्वाप्रसिद्ध्या ऽव्याप्तिरिति वाच्यम् । पूर्वक्षणवृत्तित्वविशिष्टतद्रूपाभावप्रतियोगितावच्छेदकत्वस्य तथाविधस्य सौलभ्यात् । वस्तुतस्तु विषयितासम्बन्धेन तद्रूपत्ववज्ज्ञानाभावीयावच्छेदकताप्रसिद्धिसम्भवात् । एतेन अन्त्यशब्दस्य क्षणिकपदार्थस्य वा साध्यतायां सङ्केतेऽपि नाव्याप्तिः तत्र विशिष्टाभावासम्भवे ऽपि उक्तरीत्यैव प्रसिद्धिसम्भवात् । इत्थं चावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य व्याप्यवृत्तिसाध्यकस्थले प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य च निवेशोऽपि

विफल इत्यतीवलाघवमिति । न चैवं संयोगी सत्त्वादित्यादावतिव्याप्तिः संयोगाभावस्याव्याप्यवृत्तित्वेन साध्यवद्वृत्तित्वादिति वाच्यम् । साध्यवन्निरवच्छिन्नवृत्तिकत्वस्याभावे निवेशितत्वेन तत्र साध्याभावप्रतियोगितायाः लक्षणघटकत्वसम्भवात् एतदेव प्रतियोगिवैयधिकरण्यस्य सार्थक्यम् अन्यथा संयोगी द्रव्यत्वादित्यादावव्याप्तिः । न च संयोगाभावस्य संयोगाभावत्वेन साध्यवन्निरूपितसावच्छिन्नवृत्तिकत्वे ऽपि अभावत्वादिना प्रमेयत्वादिना वा निरवच्छिन्नवृत्तिमत्त्वादुक्तातिव्याप्तितादवस्थ्यमिति वाच्यम् । साध्यवन्निरूपितावच्छिन्नवृत्तिकान्याभावस्य निवेशितत्वात् । न च वह्निमान् धूमादित्यादौ महानसीयवह्न्यभावादेरपि कालिकेनाव्याप्यवृत्तित्वेन तादृशप्रतियोगित्वाप्रसिद्धिरिति वाच्यम् । अभावीयविशेषणताविशेषावच्छिन्नसाध्यवन्निरूपितावच्छिन्नवृत्तिकान्यत्वस्य विवक्षितत्वादिति चेदत्र वदन्ति । संयोगी द्रव्यत्वादित्यादावव्याप्तिः तत्र कपिसंयोगाभावस्याव्याप्यवृत्तित्वेन साध्यवन्निरूपितावच्छिन्नवृत्तिकान्यत्वविरहात् कपिशून्यहेत्वधिकरणे वक्ष्यमाणप्रतियोगिव्यधिकरणत्वाच्च । इत्थं च तादृशदोषवारणाय प्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य सामानाधिकरण्यसम्बन्धेन कपिप्रतियोगिकत्वविशिष्टसंयोगत्वावच्छिन्नाभावमादायाव्याप्तिवारणाय निरवच्छिन्नावच्छेदकत्वस्य च निवेशे लाघवानवकाशात् । प्रत्युत यथोक्तगुरुतरविशेषणदानेन गौरवमिति । केचित्तु द्रव्यवृत्तित्वविशिष्टगगनाभावाभाववान् जातेरित्यादावतिव्याप्तिस्तत्र साध्याभावस्य विशिष्टगगनाभावानतिरिक्तस्य गगनाभावस्य गुणवृत्तित्वेन प्रतियोगितायाः लक्षणाघटकत्वादित्याहुः । यदि पुनः साध्यवन्निरूपितं यद्विशेषणताविशेषसम्बन्धावच्छिन्नाधेयत्वं तदवच्छेदकीभूतं यदनुयोगित्वं तन्निरूपितप्रतियोगितानिरूपितं यत् साध्यतावच्छेदकनिष्ठावच्छेदकत्वं तदनिरूपकत्वस्य प्रतियोगितायां निवेशेन नोक्तदोषाणामवकाश इति विभाव्यते तदा द्रव्यत्वाद्यात्मकाभावमादाय प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिर्दुष्ट्या । न च विशेषणताविशेषसम्बन्धावच्छिन्नेत्यत्र स्वप्रतियोगिसत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नेति वक्तव्यमतो नोक्तदोष इति वाच्यम् । तथापि कपिसंयोगस्वरूपाभावमादाय तत्रैवाव्याप्तिसम्भवादिति ॥१९॥

रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्ववज्ज्ञानाभावमा-

दायाऽव्याप्तिवारणार्थं प्रतियोगितायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वं जगदीशेन निवेशितम। अत्रेयमाशङ्का। कालिकेन धूमत्वादिविशिष्टस्य संयोगेन साध्यतायां वह्न्यादिहेतौ समवायेन धूमत्वविशिष्टस्य कालिकेन तद्विशिष्टस्याभावमादायाऽव्याप्तिः तादृशप्रतियोगितायाः साध्यतावच्छेदकताघटककालिकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वात्। न च साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतापर्याप्त्यनुयोगितानवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकावच्छेदकतानिरूपितसंसर्गताकावच्छेदकत्वानिरूपितत्वनिवेशेन नाव्याप्तिरिति वाच्यम। कालिकेन महानसानुयोगिकसंयोगविशिष्टस्य समवायेन वह्नित्वविशिष्टस्य साध्यतायां धूमादिहेतौ समवायेन वह्नित्वविशिष्टस्य समवायेन महानसानुयोगिकसंयोगविशिष्टस्याभावमादायाऽव्याप्तिः तादृशप्रतियोगितायां तादृशावच्छेदकत्वानिरूपितत्वात्। अत्रोच्यते। हेतुसमानाधिकरणाऽभावप्रतियोगितायां साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतापर्याप्त्यवच्छेदकत्वव्यापकत्वनिवेशेन न दोषः। व्यापकता च स्वावच्छेदकताघटकसंसर्गतावच्छेदकतापर्याप्त्यवच्छेदकत्वसम्बन्धेन स्वं प्रतियोगित्वं व्याप्यत्वं तु स्वरूपसम्बन्धेन। अत्रेयमाशङ्का। ननु कालिकेन महानसानुयोगिकसंयोगविशिष्टस्य समवायेन वह्नित्वविशिष्टस्य साध्यतायां धूमादिहेतौ समवायेन महानसानुयोगिकसंयोगविशिष्टस्य कालिकेन वह्नित्वविशिष्टस्याभावमादायाऽव्याप्तिस्तादृशप्रतियोगितायाः तादृशावच्छेदकत्वव्यापकत्वात्। न च हेत्वधिकरणस्यैव स्वप्रतियोगितावच्छेदकताघटककालिकेन महानसानुयोगिकसंयोगविशिष्टं यत् तादृशासमवायसम्बन्धेन वह्नित्वविशिष्टं तदधिकरणत्वात् तादृशाभावस्य प्रतियोगिव्यधिकरणत्वाभावान्नाव्याप्तिरिति वाच्यम्। समवायेन महानसानुयोगिकसंयोगविशिष्टं कालिकेन वह्नित्वविशिष्टं यत् तस्य साध्यतायां धूमादिहेतावतिव्याप्तिवारणार्थं प्रतियोगिवैयधिकरण्यस्य विशिष्य निवेशनीयत्वात्। विशेषस्तु प्रतियोगितावच्छेदकतात्वव्यापकं यद्धिकरणत्वं, तदधिकरणत्वाभाववद्धेत्वधिकरणवृत्तित्वमभावे निवेशनीयम्। व्यापकत्वं तु स्वनिरूपकतावच्छेदकतावच्छेदकसम्बन्धेन स्वमधिकरणत्वम् स्वनिरूपकतावच्छेदकतावत्त्वं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यस्वानवच्छेदकानव-

च्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन स्वमधिकरणतानिरूपकताव-च्छेदकत्वेनाभिमतं स्ववृत्तित्वं च स्वानवच्छेदकानवच्छेद्यत्वसम्बन्धेन अत्र स्वं प्रतियोगितावच्छेदकत्वेनाभिमतम् । अत्र ब्रूमः साध्यतावच्छे-दकत्वविशिष्टप्रतियोगित्वान्यप्रतियोगिताकाभाव एव लक्षणे निवेश-नीयः साध्यतावच्छेदकतावैशिष्ट्यं स्वसामानाधिकरण्यस्वनिष्ठभे-दप्रतियोगितावच्छेदकत्वैतदुभयसम्बन्धेन । स्वपदं साध्यतावच्छे-दकत्वपरम् साध्यतावच्छेदकत्वसामानाधिकरण्य तु स्वावच्छेदक-त्वसम्बन्धेन स्व प्रतियोगित्व भेदप्रतियोगितावच्छेदकत्वं च स्वाव-च्छेदकतावत्त्वसम्बन्धेन स्वं प्रतियोगित्वं स्वावच्छेदक-तावत्त्वं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन स्वं प्र-तियोगितावच्छेदकत्वं स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्व-सम्बन्धेन स्वं साध्यतावच्छेदकत्वम् इत्येतादृशविवक्षायां न प्रागु-क्तदोष इति ॥ २० ॥

साध्यतावच्छेदकतादितरोभयानवच्छेद्यत्वानिवेशेऽपि महान-सीयवह्निः प्रतियोगितासम्बन्धेन साध्यतायां तदभाववत्त्वादिहेतौ प्र-त्येकेन महानसीयाभावं वह्न्यभावं चादायाव्याप्तिरतस्तद्वारणाय हेतु-समानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकतात्वावच्छि-न्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकीभूतधर्मावच्छिन्नानुयो-गिताकपर्याप्तिप्रतियोगितावच्छेदकीभूतावच्छेदकतात्ववत्साध्यता-वच्छेदकनिष्ठावच्छेदकत्वानिरूपितत्वस्य साध्यतावच्छेदकतादि-तरेत्यनेन विवक्षितत्वादिति ध्येयम् ॥ २१ ॥

महानसीयवह्न्यभावमादायाव्याप्तिवारणाय प्रकृतानुमितिविधे-यतावच्छेदकतापर्याप्त्यवच्छेदकीभूतधर्मावच्छेदेन प्रतियोगिताव-च्छेदकतापर्याप्त्यनधिकरणत्वं विवक्षितमिति पक्षो न द्वाविति प्र-तीतिवत् वह्नित्वं धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदक-मिति प्रतीतिबलात् प्रतियोगिन्यपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रति-योगिताकभेदस्वीकारादिति प्राञ्चः । तच्च पर्याप्तेर्व्याप्यवृत्तित्वमते न सम्भवतीत्यतः साध्यतावच्छेदकेत्यादि निवेशितं जगदीशेन । अ-त्रेदं चिन्त्यते । पर्याप्तेर्व्याप्यवृत्तित्वनयेऽपि प्रकृतानुमितिविधेयता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यवच्छेदको हेतुसमाना-धिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-

ध्यतावच्छेदको यो धर्मस्तद्विशिष्टावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति कुतो न कृतम् । यदि च प्रतियोगितानवच्छेदकत्वगर्भलक्षणमादृत्य प्रयास इति विभाव्यते तदापि प्रकृतानुमितिविधेयतावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नत्वसम्बन्धेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावविवक्षणादेव सामञ्जस्ये कृते साध्यतावच्छेदकतदितरेत्यादिनिवेशोनानि । यदि चाव्यासज्यवृत्तिसाध्यतावच्छेदकत्वादेः पर्याप्तिसम्बन्धो न प्रामाणिकः अत एवावच्छेदकत्वनिरुक्तौ एकत्वद्वित्वादेः पर्याप्तसम्बन्धे मानाभाव इत्युक्तं जगदीशेन तदा नैतादृशी रीतिः सम्भवतीति साध्यतावच्छेदकत्वादिविशेषणमावश्यकम् । अथैतत्कल्पे सामान्याभावानुत्थितिप्रसङ्ग इति चेत् । न । अतिरिक्तसामान्याभावाभ्युपगमेऽपि वह्निर्नास्तीति प्रतीतिसिद्धविलक्षणावच्छेदकत्ववत् प्रतियोगितापि न स्वीकरणीया । मैवम् । तादृशोभयानवच्छिन्नाभावमादायैव तत्सङ्गतेरिति ध्येयम् ॥ २२ ॥

अथैवमपि धूमत्वादौ धूमत्वविशिष्टाभावप्रतियोगितावच्छेदकत्वाभावो वह्नित्वादावुपनयमर्यादया भासत इति दीधितिग्रन्थविरोधः वह्नित्वतदितरोभयानवच्छिन्नधूमविशिष्टमहानसीयधूमाभावीयप्रतियोगितावच्छेदकत्वस्य धूमत्वे सत्त्वात् भ्रमानुसरणे च घटादौ इत्युपक्षस्य बीजाभावादिति चेत् । न । साध्यतावच्छेदकेतरनिष्ठा सती उभयनिष्ठा या अवच्छेदकता तद्भिन्नत्वं निवेश्यमिति महानसीयवह्न्यभावमहानसीयधूमाभावयोर्लक्षणाघटकत्वेन तादृशसङ्गति । वस्तुतस्तु साध्यतावच्छेदकतदितरेत्यत्र साध्यतावच्छेदकेतरघटितोभयानवच्छिन्नत्वस्य विवक्षितत्वात् धूमत्वादावपि वह्नित्वेतरघटितोभयानवच्छिन्नधूमविशिष्टघटाद्यभावीयप्रतियोगितावच्छेदकत्वाभावसत्त्वेनाविशेषितत्वात् ॥ २३ ॥

प्रमेयसाध्यतावच्छेदककस्थले साध्यतावच्छेदकेतराप्रसिद्ध्याऽव्याप्तिवारणमाशङ्क्यैव पारिभाषिकावच्छेदकत्वानुसरणं कृतं जगदीशेन । अत्र घटत्वादेः साध्यतावच्छेदकत्वात् यथोक्ततदितरत्वाच्च घटनिष्ठप्रतियोगित्वं कथमुभयानवच्छिन्नमिति केचिदत्र वदन्ति । साध्यतावच्छेदकनिष्ठावच्छेदकता तदितरनिष्ठावच्छेदकता एतदुभयानिरूपकत्वस्य प्रतियोगितायां निविष्टत्वात् । तदुभयानिरूपकत्वस्य द्वयत्वपर्याप्त्यधिकरणानिरूपकत्वमर्थः । न च प-

र्याप्तेः प्रत्येकमपि स्वीकारेण एकस्या अप्यवच्छेदकताया द्वयत्वपर्याप्त्यधिकरणत्वात् यथोक्तोऽर्थो ऽकिञ्चित्कर इति वाच्यम् । साध्यतावच्छेदकनिष्ठावच्छेदकत्वनिरूपकत्वं यच्च तदितरनिष्ठावच्छेदकतानिरूपकत्वमेतदुभयत्वपर्याप्तावच्छेदकताकाभावस्य तदर्थत्वात् । न च तथापि महानसीयवह्निमान् धूमादित्यादावतिव्याप्तिः । तत्र वह्नित्वस्य पारिभाषिकावच्छेदकेतरत्वसम्भवेन महानसीयवह्निनिष्ठप्रतियोगितायां तन्निरूपकत्वद्वयाभावासत्त्वादिति वाच्यम् । साध्यसाधनभेदेन व्याप्तेर्भेदात् । प्रमेयसाध्यतावच्छेदककस्थल एव पारिभाषिकस्य कर्तव्यत्वादन्यत्र यथोक्तस्यैव निविष्टत्वात् । न चैवंरीत्या लाघवानुसन्धाने वह्निमान् धूमादित्यादौ उभयानवच्छिन्नत्वविशेषणमेव दीयतां किं साध्यतावच्छेदकेत्यादिगुरुतरविशेषणेनेति वाच्यम् । इष्टत्वात् । केचित्तु प्रमेयसाध्यतावच्छेदककस्थलेऽप्रसिद्ध्याशङ्कनं तद्वारणप्रयासश्च द्वयमेव ग्रन्थकृतो मनस्यभिप्रेतम् न चेत्यादिपाठस्तु काल्पनिकः । न च तदनुपपत्तेः का गतिरिति वाच्यम् । दीधितिकृन्मते सखण्डस्य साध्यतावच्छेदकत्वमेव नास्ति दण्डत्वादौ साध्ये इत्यादिग्रन्थेन तथोक्तत्वात् । इत्थं च यथोक्तस्थले परम्परासम्बन्धेन प्रमेयत्वस्य साध्यतावच्छेदकत्वेनानुपपत्तेरभावादित्याहुः ॥२४॥

साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मानवच्छिन्नत्वनिवेशकल्पे अनवच्छेदकत्वपर्यन्तानुधावनस्य वैयर्थ्यापत्त्या प्रमेयसाध्यकस्थले ऽव्याप्तिश्चेति दूषितमिति । अत्र केचित् । पूर्वदोष इष्टापत्तिरपरो दोषो वक्तव्यस्तथा च विषयितासम्बन्धेन प्रमेयत्वविशिष्टाभावमादाय गगनाभावादिप्रमेय एवाप्रतियोगित्वसम्भवेन लक्षणसमन्वयसम्भव । एतत्कल्पे साध्यतावच्छेदकताघटकसम्बन्धनावच्छेदकताया निष्प्रयोजकत्वेनाप्रवेशादिति पूर्वपक्षयन्ति । तन्न । प्रमेयसाध्यकस्थले तत्प्रमेयानुयोगिकस्वरूपसम्बन्धेन प्रमेयत्वविशिष्टस्य चालनीन्यायेनाभावमादायैतदनुयोगिकेन कालिकादिना समवायेन वा वह्नित्वविशिष्टाभावमादाय वह्निमान् धूमादित्यादौ चाव्याप्तिवारणाय एतत्कल्पे साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताया निविष्टत्वात् । विशेषरूपेण संसर्गतानभ्युपगमे तादात्म्येन कालिकादिघटितान्यतरसम्बन्धेन गुणत्वविशिष्टस्य गुणस्य साध्यतायां संयोगनित्यज्ञानान्यतरत्वादावव्याप्तिस्तत्र नित्यज्ञाननिरूपहेत्वधिकरणे कालिकेन गुणत्ववतोऽभावस्य संयोगरू-

पहेत्वधिकरणे च विषयितया गुणत्ववतोऽभावस्य धर्तव्यत्वेनाव्याप्त्यापत्तेः ॥ २५ ॥

न च गगनत्वानवच्छिन्नत्वं यत् साध्यतावच्छेदकातिरिक्तसाध्यवृत्तिधर्मावच्छिन्नत्वमेन दुभयाभावस्य प्रतियोगितायां निवेशनीयत्वात् गगनाभावमादायैव लक्षणसमन्वय इति वाच्यम्। प्रमेयस्य तादात्म्येन साध्यतायां गगनत्वादिहेतावव्याप्त्यापत्तेः अत्र गगनाभावस्य लक्षणाघटकत्वात्। न च गगनत्वानवच्छिन्नेत्यत्रावृत्तिमावृत्तिधर्मानवच्छिन्नेनेति वक्तव्यमिति तत्र महाकालाद्यभावमादाय लक्षणसमन्वयसम्भव इति वाच्यम्। गगनाद्यन्यतमस्य तादात्म्येन साध्यतायां तादृशान्यतमत्वहेतावव्याप्त्यापत्तेः तत्र चालनीन्यायेन गगनादीनामभावस्य साध्यमात्रे सत्त्वात्। न च यथोक्तदोषेणैवावच्छेदकत्वानुधावनं कर्तव्यमिति तादृशकल्पस्य निर्दोषत्वमिति वाच्यम्। गगनरूपतादृशान्यतमाभावमादायानवच्छेदकत्वानुसरणे ऽपि दोषतादवस्थ्यादिति ध्येयम् ॥ २६ ॥

पर्वते महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावमादायाव्याप्तिवारणाय शुद्धसाध्यतावच्छेदककस्थले अवच्छेदकतायां निरवच्छिन्नत्वं घटे पटसमवेतत्वविशिष्टजातिमदभावमादायाव्याप्तिवारणाय यद्रूपेण साध्यतावच्छेदकतेत्यादिकमुक्तं जगदीशेन। अथ स्वानवच्छिन्नानुमितिविधेयतावच्छेदकताकधर्मानवच्छिन्नत्वस्यावच्छेदकतायां निवेशेनैव सामञ्जस्ये द्विविधविशेषणमनुचितमिति वाच्यम्। न च प्रमेयविशिष्टवत्त्वात् धूमादित्यादौ तादृशधर्माप्रसिद्धिरिति वाच्यम। तत्र तावतापि साध्यतावच्छेदकतावच्छेदकतदितराप्रसिद्ध्या दोषवारणाय पारिभाषिकेनरत्वं वक्तव्यमिति मयापि तत्र पारिभाषिककर्तव्यत्वेन क्षत्यभावादिति वदन्ति। वह्निमान् धूमादित्यादौ अवच्छेदकत्वानिरूपकत्वरूपनिरवच्छिन्नत्वापेक्षया यथोक्तातिगुरुतरनिवेशेऽनुमितिव्याप्तिज्ञानकार्यकारणभावस्य महागौरवमिति शङ्कैकयस्याकिञ्चित्करत्वमिति ॥ २७ ॥

यद्रूपानवच्छिन्नं साध्यतावच्छेदकत्वं तदवच्छिन्नावच्छेदकत्वानिरूपकत्वस्य तादृशप्रतियोगितायां निवेशेनैव सामञ्जस्ये कृतं द्विधा निवेशनेन। न च वह्नित्वधूमत्ववदुभयवान् वह्नेरित्यादावतिव्याप्तिर्वह्नित्वत्वावच्छिन्नं यत् साध्यतावच्छेदकत्वं तस्य धूमत्वत्वानवच्छिन्नत्वेन तदवच्छिन्नावच्छेदकताकप्रतियोगित्वस्य लक्षणाघटकत्वेन

तादृशोभयवदभावस्य धर्तुमशक्यत्वादिति वाच्यम् साध्यतावच्छेदकतासामान्यं यद्रूपानवच्छिन्नमित्यस्य विवक्षितत्वात् । अत्र केचित् शुद्धसाध्यतावच्छेदककस्थले कार्यकारणभावगौरवभयेन द्विविधाकारानुमित्यापत्तिभयेन च द्विधा निवेशनम् । न चावच्छेदकतासम्बन्धेन साध्यतावच्छेदकत्वाभाववद्धर्मानवच्छिन्नावच्छेदकत्वविवक्षणेनैव लाघवमिति वाच्यम् तादृशसंसर्गस्य वृत्त्यनियामकत्वात् तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेः । यद्यपि साध्यतावच्छेदकतावृत्तिभेदप्रतियोगितावच्छेदकं यत् तदनवच्छिन्नावच्छेदकत्वनिवेशने न कोऽपि दोषः भेदप्रतियोगितावच्छेदकत्वमवच्छिन्नत्वसम्बन्धेन बोध्यम् । तथापि जातिमत्त्वान् वाच्यत्वादित्यादावतिव्याप्तिः साध्यतावच्छेदकतावृत्तिप्रमेयवद्भेदप्रतियोगितावच्छेदकत्वस्य जातित्वे ऽनपायात् साध्याभावस्य लक्षणाघटकत्वादिति । न च साध्यतावच्छेदकतावृत्तिभेदप्रतियोगितावच्छेदकत्वं यद्रूपेण तदवच्छिन्नावच्छेदकत्वं विवक्षितमित्यादिरीत्या न कोऽपि दोष इति वाच्यम् जातिमत्त्वान् वाच्यत्वादित्यादावतिव्याप्तिरवच्छिन्नत्वसम्बन्धेन तज्जातिमद्भेदस्यापि साध्यतावच्छेदकतायां सत्त्वादिति ध्येयम् ॥ २८ ॥

न च महानसीयवह्निवृत्तिजातित्वस्य द्रव्यत्वादावपि सत्त्वेन प्रतियोगितायां कथं साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वमिति वाच्यम् महानसीयवह्निवृत्तित्वविशिष्टवह्नित्ववान्नास्तीतिप्रतीतिसिद्धाभावमादायाव्याप्तेर्दातव्यत्वात् महानसीयवह्निवृत्तित्वस्य वह्नित्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नस्य निवेशे ग्रन्थकृदुक्तप्रतीतिसिद्धाभावमादायाव्याप्तिदाने क्षत्यभावाच्च । न च महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वह्निर्नास्तीतिप्रतीतिसिद्धाभावमादाय तथाव्याप्तेर्दुरुद्धरत्वापत्तिः तत्र वह्नित्वस्य निरवच्छिन्नावच्छेदकतासत्त्वादिति वाच्यम् । अवच्छिन्नावच्छेदकत्वानिरूपकत्वस्य प्रतियोगितायां निवेशितत्वात् । वस्तुतस्तु तादृशप्रतीतिसिद्धाभावीयाया अवच्छेदकताया अवच्छिन्नत्वनिरवच्छिन्नत्वेन द्विविधायाः स्वीकारे प्रमाणाभावेन अवच्छिन्नावच्छेदकताया वह्नित्वे सत्त्वेनाव्याप्तिवारणसम्भवात् । अथ विशिष्टसाध्यतावच्छेदककस्थले घटे पटसमवेतत्वविशिष्टजातिमान्नास्तीतिप्रतीतिसिद्धाभावमादाय समवेतत्वविशिष्टजातिमत्त्वान् घटत्वादित्यादौ समवेतत्वेन समवेतसामान्यस्य साध्यतावच्छेदकत्वेन पटसमवेतत्वस्यापि साध्यताव

च्छेदकत्वाद्व्याप्तेरनुद्धारापत्तिरिति चेदत्र केचित् । ग्रन्थकृता रीतेः प्रदर्शितत्वेन विशिष्टसाध्यतावच्छेदकतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य प्रतियोगितावच्छेदकतावच्छेदकतायां निवेशितत्वेन पटनिरूपितत्वतदितरेण समवेतत्वनिष्ठप्रतियोगितावच्छेदकतावच्छेदकताया अवच्छेदात् तादृशाव्याप्तिवारणं सम्भवतीति । अत एव दाण्डमान् दण्डिसंयोगादित्यादौ तद्व्यक्तिवृत्तिदण्डत्ववद्दण्डो नास्तीतिप्रतीतिसिद्धाभावमादायाव्याप्तिरिति पूर्वपक्षो निरस्तः तत्राऽपि शुद्धसाध्यतावच्छेदकतावच्छेदककस्थले प्रतियोगितावच्छेदकतावच्छेदकतायां निरवच्छिन्नत्वनिवेशादित्याहुः ॥ २९ ॥

अपरे तु अवच्छेदकतावच्छेदकसाधारणावच्छेदकतायाः स्वीकारेण यथोक्तस्थलद्वये पटनिरूपितत्वस्य तद्व्यक्तिवृत्तित्वस्य च साध्यतावच्छेदकतावच्छेदकेतरस्य प्रतियोगितावच्छेदकतावच्छेदकत्वात् तादृशाभावस्याव्याप्तिसम्पादकत्वाभावान्न काप्यनुपपत्तिरिति । न चावच्छेदकतावच्छेदकसाधारणावच्छेदकतास्वीकारे साध्यतावच्छेदकतदितरोभयानवच्छेद्यत्वनिवेशेनैव सर्वोपपत्तौ अवच्छेदकतायां शुद्धसाध्यतावच्छेदककस्थले निरवच्छिन्नत्वस्य विशिष्टसाध्यतावच्छेदककस्थले तादृशोभयानवच्छिन्नत्वस्य च वैयर्थ्यापत्तिरिति वाच्यम् प्रतियोगितानिरूपितावच्छेदकता नावच्छेदकसाधारणी किन्तु प्रतियोगितावच्छेदकतावच्छेदकता अवच्छेदकतावच्छेदकसाधारणीतिमते तादृशग्रन्थप्रतिपादनमित्याहुः ॥ २९ ॥

अथ तद्वान्नास्तीतिप्रतीतिसिद्धाभावमादाय दण्डिमान् दण्डिसंयोगादित्यादावव्याप्तिवारणमशक्यमेव तत्र दण्डनिष्ठावच्छेदकताया दण्डत्वानवच्छिन्नत्वेन तादृशोभयानवच्छिन्नत्वादिति चेदत्र वदन्ति । तादृशोभयानवच्छिन्नत्वपदेन साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वस्य विवक्षितत्वात् विशिष्टसाध्यतावच्छेदककस्थलेऽपि निरवच्छिन्नघटत्वनिष्ठावच्छेदकताकाभावमादायैव लक्षणस्य सङ्गमनीयत्वेन क्षत्यभावात् । न च दण्डिमान् दण्डिसंयोगादित्यादौ अग्रे विवक्षणीयसाध्यतावच्छेदकताघटकसंयोगावच्छिन्नावच्छेदकताकाभावाप्रसिद्धेरिति वाच्यम् वह्नित्वप्रतियोगिकसमवायेन साध्यतावच्छेदककस्थले साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वाप्रसिद्धिभिया विवक्षणीयस्य साध्यतावच्छेदकताघटकसम्ब-

न्धावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वाभावस्य निविष्टत्वेन क्षत्यभावात् । वस्तुतस्तु साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वं यथा निर्वाच्यं तथाऽवच्छेदकत्वस्य घटत्वादावपि सम्भव इति ॥ ३० ॥

तत्ताया उपलक्षणत्वमङ्गीकृत्य जात्यखण्डोपाध्यतिरिक्तदण्डादिनिष्ठावच्छेदकतायामपि निरवच्छिन्नत्वमङ्गीकृतम् दण्डत्वस्याव्यावर्तकत्वेन सुतरामुपलक्षणत्वमिति रीत्या दण्ड्यादौ साध्ये इत्युत्थानं कृतम् अथ तत्ताया उपलक्षणत्वमत एव परम्परया दण्डत्वे साध्यतावच्छेदकत्वस्वीकार इति प्रणयने परम्परया दण्डत्वविशिष्टं तन्नास्तीतिप्रतीतिसिद्धाभावमादाय तत्राव्याप्तिर्दुर्वारेव। तत्ताया उपलक्षणत्वेन तादृशप्रतियोगितायाः साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वादिति चेदत्र कश्चित् प्रतियोग्यंशे साक्षाद् ज्ञातस्य उपलक्षणत्वं नाङ्गीक्रियते किन्तु अवच्छेदकांशे ज्ञातस्यैवेति नोक्तापत्तिरित्याह । तन्न। अस्य रूपत्वन्यूनवृत्तिजातिमत्त्वात् रूपादित्यादावव्याप्तिदाने साध्यतावच्छेदके रूपत्वन्यूनवृत्तित्वविशेषणस्य वैयर्थ्यापत्तेः । तथाहि सत्तागुणत्वादिजातेरप्यनवच्छेदकत्वसम्भवेनाव्याप्त्यभावेनाव्याप्तिसम्पादकतया तादृशविशेषणं वक्तव्यं सङ्गच्छते। तादृशविशेषणदाने ऽपि रूपवति नीलो नास्ति पीतो नास्तीतिवत् नीलसन्नास्ति नीलगुणो नास्तीतिप्रतीतिसिद्धाभावमादाय सत्तागुणत्वादेरपि अवच्छेदकत्वसम्भवेन तादृशविशेषणदानस्यानौचित्यापत्तेः।प्रतियोग्यंशे साक्षादभातस्याऽपि उपलक्षणत्वमङ्गीकार्यमिति सत्तादेरनवच्छेदकत्वे तादृशविशेषणं सार्थकमिति पूर्वकल्पे व्यावर्तकसाधारणस्य उपलक्षणस्याङ्गीकार । यदि चेत्यादिकल्पे अव्यावर्तकस्योपलक्षणत्वं न तु व्यावर्तकस्येति ग्रन्थस्य तात्पर्यार्थ इति दण्डत्ववत्तन्नास्तीतिप्रतीतिसिद्धाभावमादायाव्याप्तेरनुद्धारादिति । परे तु यस्योपलक्षणत्वस्वीकारे अतिप्रसक्तधर्मे नावच्छेदकत्वं तस्य तत्त्वस्य उपलक्षणत्वे अतिप्रसक्तस्य दण्डत्वस्यावच्छेदकत्वस्वीकारापत्तेरित्युपलक्षणत्वं तत्तायास्तत्र न सम्भवतीति प्राहुः ॥ ३१ ॥

विषयितया रूपत्ववज्ज्ञानाभावमादाय रूपवान् पृथिवीत्वादित्यादावव्याप्तिवारणार्थं साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वं निवेशितम् । न च तादृशरीत्या वह्निमान् धूमादित्यादावव्याप्तिसम्भवे तत्स्थलस्यागानौचित्यमितिवाच्यम् अग्रे विवक्षणीय-

साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य संयोगेन ज्ञानाधिकरणाप्रसिद्ध्या न सम्भवति। न च घटपटाद्यनुयोगिककालिकसम्बन्धेन वह्नित्वविशिष्टस्याभावमादाय तत्राव्याप्तिर्भविष्यतीति वाच्यम् विशेषरूपेण संसर्गतानभ्युपगमात् अत्र ज्ञानत्वस्य नावच्छेदकत्वकोटौ निवेशो नातः प्रतियोगितायाः साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वहानिः विषयितासम्बन्धेनापि रूपत्वादेः स्वरूपतो भानाङ्गीकारेण च न वा तन्निष्ठावच्छेदकताया निरवच्छिन्नत्वहानिः ॥३२॥

यद्यप्यवश्यं क्लृप्ताभिः पर्वतत्वचत्वरत्वादितत्तद्धर्मविशिष्टधूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेव धूमवानिति प्रतीत्युपपत्तौ सामान्यधर्मावच्छिन्नाधिकरणतायां मानाभाव इति जगदीशः। अथात्र पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधिकरणतावगाहिप्रतीतौ पर्वतत्ववैशिष्ट्यं यदि धूमे भासते तदा तस्यैवावच्छेदकत्वेनैवोपपत्तौ धूमत्वस्योपलक्षणताया एवोचितत्वेन धूमादिनिष्ठनिरूपकतानिरूपिताधिकरणताव्यक्तिभिरेव धूमवानितिप्रतीतेः प्रमात्वोपपत्तौ विशिष्टधूमत्वस्यावच्छेदकत्वकथनविरोध इति चेत् न एकधर्मावच्छिन्नाधिकरणतानामैक्यमते घटान्यत्वविशिष्टद्रव्यत्ववानितिज्ञानीयघटभेदावच्छिन्नधूमनिष्ठनिरूपकतानिरूपिताधिकरणताया ह्रदे ऽपि सत्त्वात्तमादाय ह्रदो धूमवानितिप्रतीतेः प्रमात्वापत्तेरिति ध्येयम्। यदि च समानाधिकरणवृत्तित्वसम्बन्धेन पर्वतत्ववैशिष्ट्यं धूमत्वे भासते तदा धूमत्वस्यावच्छेदकत्वमेव तद्गतधर्मस्य विशेषणत्वे तस्योपलक्षणत्वाभावात् वैशिष्ट्यस्यावच्छेदकत्वम्। अत एव तस्य विशेषणत्वादुपलक्षितपुच्छलग्नविशेषणानङ्गीकारात् ॥ ३३ ॥

अन्यत्र तादृशाधिकरणत्वाप्रसिद्ध्या तदभावस्याप्रसिद्धेः सिद्ध्यसिद्धिभ्यां तन्निषेधानुपपत्तेः। न च धूमत्वे ऽधिकरणतानिरूपकतावच्छेदकत्वाभावः साध्य इति वाच्यम् सामान्यतोऽधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य यावत्त्ववृत्तितया तदभावस्य सामान्यधर्मावच्छिन्नाधिकरणतावादिनापि स्वीकारात् सिद्धसाधनापत्तेः। न च पर्वतनिष्ठाधिकरणतायाः निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभाव एव धूमत्वगतैकत्वे साध्यत इति वाच्यम् पर्वतेऽपि तादृशानन्ताधिकरणतायाः सत्त्वेन निरुक्तावच्छेदकत्वाभावसाधने सिद्धसाधनापत्तेः। न च तन्निष्ठयत्किञ्चिदधिकरण-

तानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभाव एव साध्यते अतो न सिद्धसाधनमिति वाच्यम् यत्किञ्चित्त्वस्यानुगमात् तन्निष्ठावयवादेर्यत्किञ्चिदधिकरणातामादायैव पुनः सिद्धसाधनतादवस्थ्यादिति चेत् । न । अधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितानिरूप्यतावान्निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावो धूमत्वनिष्ठैकत्वे साध्यते । वस्तुतस्तु अधिकरणताविशिष्टान्यत्वं धूमत्वनिष्ठैकत्वे साध्यते वैशिष्ट्यं च स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ग्राह्यमिति न कोपि दोष इति । नव्यास्तु सर्ववादिसिद्धायाः तत्तदधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तेरेव प्रसिद्धतया तत एवोपपत्तौ पर्याप्तेः सामान्यतो ऽधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकत्वस्यानङ्गीकारात् तथा च धूमत्वनिष्ठैकत्वे अधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसामान्याभाव एव साध्यत इत्यर्थ एव ग्रन्थतात्पर्यमित्यवधेयम् ॥ ३४ ॥

अथात्र सामान्यधर्मावच्छिन्नाधिकरणत्वाप्रसिद्धयापि हेतुतावच्छेदकनिष्ठावच्छेदकताकनिरूपकतानिरूपिताधिकरणतामादायैव वह्निमान् धूमादित्यादौ लक्षणसमन्वयसम्भवे किं तादृशपारिभाषिकत्वानुशरणेन। न च द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ हेतुतावच्छेदकीभूतसत्तात्वनिष्ठावच्छेदकताकनिरूपकतानिरूपिताधिकरणत्वस्य गुणे सत्त्वात् तत्राव्याप्तिरिति वाच्यम् हेतुतावच्छेदकताव्यापकनिरूपकतानिरूपिताधिकरणत्वस्य विवक्षितत्वात् व्यापकत्वं च स्वावच्छेदकत्वसम्बन्धेन ग्राह्यमिति चेत् । न । समानाधिकरणवृत्तित्वसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टस्य हेतुतायां द्रव्यत्वादिसाध्यके ऽव्याप्तिवारणाय हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य विवक्षितत्वात् । अत्रावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वं बोध्यम् । अन्यथा तन्निवेशो तद्दोषतादवस्थ्यात् । न चैतन्मते पूर्वकल्पे ऽपि उक्तस्थले नाव्याप्तिः हेतुतावच्छेदकताया गुणकर्मान्यत्वादावपि स-

त्वेन तादृशनिरूपकताया हेतुतावच्छेदकत्वाव्यापकत्वादिति वाच्यम् तद्गुणकर्मान्यत्वस्य साध्यतायां समानाधिकरणवृत्तित्वसम्बन्धेन तद्गुणतत्कर्मान्यत्वविशिष्टसत्तात्वस्य हेतुतायामव्याप्तिः तद्गुणतत्कर्मान्यत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टसत्तात्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। एवं धूमसमानकालीनद्रव्यत्वावच्छिन्नाधिकरणतामादाय वह्निमान् धूमादित्यादावव्याप्तिश्च तथा च तादृशाधिकरणत्वाप्रसिद्धैव तत्राव्याप्तिसङ्गति.। न च पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधिकरणतानिरूपकतावच्छेदकतायास्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं 'धूमत्वनिष्ठैकत्वं तदेव हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधिकरणतामादायैव तत्र नाव्याप्तिरिति वाच्यम् प्रतियोगितासम्बन्धेन हेतुतायां महानसीयवह्न्यभावभिन्नं वह्नेरित्यादावव्याप्तेः निरुक्ताधिकरणताया महानसीयवह्न्यभावे ऽपि सत्त्वात् अतस्तद्वारणाय हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावन्निरूपकतानिरूपिताधिकरणत्वस्य लक्षणघटकत्वात् तथा च तादृशाधिकरणत्वाप्रसिद्धैव तत्राव्याप्तिसङ्गतिरिति ध्येयम् ॥ ३५ ॥

अथैवं हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानवच्छेदकत्वाभावविशिष्टाधिकरणतावच्छेदकत्वस्याभावस्तथाविधहेतुतावच्छेदकाश्रयाधिकरणत्वमेव हेतुतावच्छेदकावच्छिन्नाधिकरणत्वमित्यनेन कुतो न कृतमिति चेत्। न। यन्निष्ठाधिकरणतानवच्छेदकत्वमित्यत्राधिकरणत्वमवश्यं हेतुतावच्छेदकसम्बन्धेन ग्राह्यमन्यथा द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिर्विशिष्टसत्त्वे कालिकसम्बन्धावच्छिन्नगुणनिष्ठाधिकरणतानवच्छेदकत्वस्यासत्त्वेन तादृशविशिष्टाभावस्य हेतुतावच्छेदके सत्त्वात्। एवं सामान्यनतोऽधिकरणतावच्छेदकत्वमित्यत्रापि अधिकरणत्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यम् अन्यथा वह्निमान्धूमादित्यादावव्याप्तिः पर्वतनिष्ठाधिकरणतानवच्छेदकत्वविशिष्टविषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य धूमत्वे सत्त्वेन तादृशविशिष्टाभावासत्त्वात्। एवं सति धूमप्रतियोगिकसंयोगेन हेतुतायां पर्वतादिनिष्ठहेतुतावच्छेद-

कसम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वविशिष्टाधिकरणतावच्छेदकत्वस्याप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिरिति ध्येयम् । पर्याप्तिनिवेशव्यावृत्तिश्चिन्तनीया ॥ ३६ ॥

अथात्र कल्पे सम्बन्धान्तरावच्छिन्नसामान्यधर्मावच्छिन्नाधिकरणत्वास्वीकारे ऽपि विषयित्वसम्बन्धावच्छिन्नाधिकरणत्वमवश्यं स्वीकरणीयम् अन्यथा विषयितया घटवानिति प्रतीतिर्यदि घटत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वान्येवागाहत इति विभाव्यते तदा घट इत्याकारकप्रतीतावपि घटवानिति प्रतीत्यनुपपत्तेः । तथा च नित्यज्ञानभेदे साध्ये विषयित्वसम्बन्धेन घटादिहेतावतिव्याप्तिः स्वाश्रयाधिकरणीभूतनित्यज्ञाननिष्ठाधिकरणतानवच्छेदकतायाः कुत्राप्यसत्त्वात् यत्पदेन नित्यज्ञानव्यक्तेर्धर्तुमशक्यत्वेन ज्ञानान्तरस्यैव धर्तव्यतया तन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेत् । न नित्यज्ञानान्यत्वविशिष्टघटत्वादावेव तत्प्रसिद्धेरिति ॥ ३७ ॥

अथ द्रव्यं घटत्वपटत्वोभयस्मादित्यादावतिव्याप्तिस्तादृशहेतुतावच्छेदकावच्छिन्नाधिकरणं पटो घटश्च तन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेत् । न हेतुतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकीभूतयत्किञ्चिद्धर्मविशिष्टस्य यत्पदेन विवक्षितत्वादिति वैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन । अवच्छेदकत्वं च स्वनिष्ठाधिकरणतानिरूपिताधेयत्वसम्बन्धेन । तथा च घटत्वपटत्वपर्याप्त्यवच्छेदकीभूतं यदुभयत्वं तादृशभेदवत्त्वसम्बन्धेन तद्विशिष्टसम्बन्धस्याप्रसिद्ध्या नातिव्याप्तिरिति ॥ ३८ ॥

पूर्वकल्पे ऽनुगमप्रकारस्तु स्वनिष्ठभेदप्रतियोगितावच्छेदकत्व—स्वाश्रयाधिकरणत्वोभयसम्बन्धेन प्रकृतहेतुतावच्छेदकविशिष्टत्वम् अवच्छेदकत्वं च स्वनिष्ठावच्छेदकताकभेदवत्त्व—स्वसमानकालीनाधिकरणतानिरूपकतावच्छेदकत्वैतदुभयसम्बन्धेन स्वनिष्ठावच्छेदकत्वं च स्वनिष्ठाधिकरणतानिरूपकतावच्छेदकत्वसम्बन्धेन बोध्यम् । यद्वा स्वनिष्ठात्यन्ताभावप्रतियोगित्व—स्वाश्रयाधिकरणत्वोभयसम्बन्धेन हेतुतावच्छेदकविशिष्टत्वमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितम् । प्रतियोगित्वं च निरुक्तोभयसम्ब-

न्धेन बोध्यम् । तेन धूमीयसंयोगेन धूमहेतुकस्थले निरुक्तो न्धेनावच्छेदकत्वाप्रसिद्धावपि न क्षतिरिति ध्येयम् ॥ ते वाच्यम्

हेतुतावच्छेदकं च नित्यज्ञानावृत्तिविषयिताशून्यज्ञानबन्धेन स-हेतुतावच्छेदकावच्छिन्नप्रकारतावच्छेदकत्वेन विवक्षणीयमिणतत्क-द्रव्यं घटत्वपटत्वोभयस्मादित्यादिहेतौ नातिव्याप्तिरिति कश्चिकरण-हेतुतावच्छेदकावृत्तिधर्म एव हेतुतावच्छेदकावच्छिन्नाधिकरणेरात् । नेन विवक्षितः वृत्तित्वं च स्ववृत्त्यभावप्रतियोगितावच्छेदकत्व-सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेनेत्यपि क-श्चित् ॥ ३९ ॥

परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इति नाध्यक्षमिति दीधितिः । परितः सर्वावयवावच्छेदेन प्रतियोगिग्रहात्मकदोषाद्वे-त्यर्थः। न चैवमपि प्रतियोगिग्रहोत्पत्तिदशायां तत्प्रत्यक्षं दुर्वारम् प्रति-योग्युपलम्भकसामग्र्या अपि दोषत्वोपगमादिति जगदीश । तस्याय-माशयः तत्पुरुषीयसंयोगाभावत्वावच्छिन्नलौकिकप्रकारताशालिप्र-त्यक्षं प्रति तत्पुरुषीयसंयोगत्वावच्छिन्नलौकिकप्रकारताशालिज्ञानत्वेन प्रतिबन्धकत्वमनुभवसिद्धम् प्रतिबध्यस्य विशेषणत्वं प्रतिबन्धकस्य विपर्यीभूतसंयोगवत्त्वं सम्बन्धः। न च द्रव्ये संयोगाभावप्रत्यक्षस्य क-स्याप्यनुत्पत्त्या ईश्वरज्ञानसाधारणज्ञानत्वेनैव प्रतिबन्धकत्वं युक्तम् तथा च प्रतियोगिग्रहदशायां नापत्तिरितिवाच्यम् तथासति परितः प्रतियोग्युपलब्धेर्दोषाद्वेत्यनेन दोषोत्कीर्तनस्य वैफल्यापत्त्या तादृशा-रीतिमनुरुध्य भट्टाचार्यव्याख्यानस्यानुपादेयत्वादिति दिक् ॥ ४० ॥

यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धाव-च्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नतत्सम्बन्धाव-च्छिन्नप्रतियोगिताकाभाववानिति जगदीशेनोक्तम् । न चात्र यज्जा-तिसमानाधिकरणोभयावृत्तिप्रतियोगिताकयावद्विशेषाभाववत्त्वस्य सम्यक्त्वे उभयावृत्तिधर्मावच्छिन्नत्वनिवेशनवैयर्थ्यमितिवाच्यम् स्व-रूपसम्बन्धात्मिकाया प्रतियोगितायाः प्रतिव्यक्तिभेदेन भिन्नतया स-त्तागुणत्वावच्छिन्नाभावमादाय स्वरूपासिद्धिप्रसङ्गात् । न च तथापि प्रतियोगितासम्बन्धेन यज्जातिसमानाधिकरणोभयावृत्त्यभाववत्त्वस्य हेतुत्वसम्भवे तन्निवेशस्य वैयर्थ्यमिति वाच्यम् समनियताभावयोरे-क्यमते व्यभिचारापत्तेः तद्घटीयरूपरसादेः समानकालोत्पन्नविनष्ट-स्य योऽभावस्तस्य रूपत्वसमानाधिकरणोभयावृत्त्यभावानन्तर्गततया

तदन्ययावद्विशेषाभावस्य तद्घट एव सत्त्वेन तत्र रूपत्वावच्छिन्नाभावासत्त्वादिति ॥ ४१ ॥

जात्युपादानात् गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे ऽपि न व्यभिचार इति जगदीश । अत्र यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववृत्तियावत्त्वस्यानुगतानतिप्रसक्तधर्मान्तरेण निवेशयितुमशक्यत्वेन तादृशाभावत्वव्यापकत्वेन निवेश एव कार्यः तादृशव्यापकत्वं च तादृशाभावत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावरूपं वाच्यम् तथा च कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतात्वमपेक्ष्य घटत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतात्वस्य लघुतया तादृशाभावाप्रसिद्ध्यैव यत्पदेन कम्बुग्रीवादिमत्त्वस्य धर्तुमशक्यत्वात् जात्युपादानवैयर्थ्यमिति चेत् । न व्याप्यतासम्बन्धेन यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्ववृत्तित्वेन यावत्त्वस्य निवेशात् । व्याप्यत्वं च स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वरूपं ग्राह्यं तथा च तादृशाभावाप्रसिद्धावपि तादृशनिखिलाभाववृत्तिसमुदायत्वस्य तादृशाभावत्ववृत्तित्वेन ग्रहीतुं शक्यतया यद्धर्मपदेन कम्बुग्रीवादिमत्त्वमादाय व्यभिचारवारणाय तत्सार्थक्यात्(१) ॥४२॥

यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववानिति व्याख्यायां जातिपदोपादानात् कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तितत्तद्घटत्वावच्छिन्नप्रतियोगिताकाभाववति भूतलादौ तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या न व्यभिचार इति जगदीशेनोक्तम् । अत्र यद्यपि साध्याप्रसिद्धिरेव न व्यभिचारः तथापि साध्याप्रसिद्धिरित्येव क्वचित्पाठः । साध्यप्र-

---

(१) केचित्तु यो [illegible]नुयोगिताकपर्याप्तिकयावत्त्वावच्छिन्नवान् स तद्धर्मावच्छिन्नाभाववानित्यर्थ न्यूनवृत्तिधर्मस्य पर्याप्त्यनुयोगितावच्छेदकत्वानभ्युपगमान्न कोऽपि दोष इत्याहु । परे तु य स्वनिष्ठाधिकरणतानिरूपिततनिरूपकतावदन्यावृत्तियज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वक स तद्धर्मावच्छिन्नाभाववानित्यर्थे तात्पर्यान्न कोऽपि दोष इत्याहु ।

सिद्धिरेतल्लक्षणाभिप्रायेण। तथाहि यद्यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभावाधिकरणकं तत्तदधिकरणनिष्ठतादृशाभावप्रतियोगितावच्छेदकमित्यत्र तादृशसाध्यप्रसिद्ध्या कम्बुग्रीवादिमत्त्वादौ व्यभिचारो दर्शितः। अथवा यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स स्वावच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन तद्वानित्यर्थ एव तात्पर्यम् तथा च साध्याभाववद्वृत्तित्वरूपव्यभिचारस्यैव सम्यत्काान्न कोपि दोषः॥ ४३॥

अत्रेदं बोध्यम् संयोगी द्रव्यत्वादित्यादौ लक्षणघटकप्रतियोगिवैयधिकरण्यदलव्यावृत्त्यर्थं संयोगाभावस्य प्रत्यक्षासम्भवेन एतादृशव्याप्त्या एतदनुमीयते। तत्र यद्यपि तादृशव्याप्त्या संयोगाभावस्यानुमितिरपि व्याप्तिलक्षणे प्रतियोगिवैयधिकरण्यं विना न सम्भवति संयोगाभावाभावस्य यावद्विशेषाभावाधिकरणे वृक्षादौ सत्त्वेन संयोगाभावत्वरूपसाध्यतावच्छेदकस्य व्यापकतावच्छेदकत्वविरहात् अतस्तदर्थं प्रतियोगिवैयधिकरण्यनिवेश आवश्यकः। तथा च येन प्रकारेण तस्य सङ्गतिस्तत्रैव तस्य प्रयोजनसत्त्वेन सन्दर्भविरोधः स्यात् तथापि सामान्यव्याप्तौ प्रसिद्धस्थले व्यापकसामानाधिकरण्यरूपव्याप्तेरनुमानाङ्गत्वमप्रसिद्धस्थले वृक्षादौ संयोगाभावादिसाधने साध्यसाधनसहचारमात्रमिति मिश्रादिभिरप्युक्तमित्यतो न सन्दर्भविरोधः स्यादित्यास्तां विस्तरः॥ ४४॥

शब्दो नित्यः सामान्यवत्त्वे सति विशेषगुणान्तरासमानाधिकरणबहिरिन्द्रियग्राह्यत्वादित्यादिहेतौ नित्यत्वे साध्ये सामान्यवत्त्वविशेषणस्य शब्दध्वंसे व्यभिचारवारणाय सार्थक्यम् विशेषगुणान्तरासमानाधिकरणत्वविशेषणस्य रूपादौ व्यभिचारवारणाय सार्थक्यं लौकिकप्रत्यक्षविषयतार्थकस्य बहिरिन्द्रियग्राह्यत्वदलस्य मन क्रियादौ व्यभिचारवारणाय सार्थक्यम् एतन्मते ध्वन्यात्मकशब्दे व्यभिचारवारणाय पुनर्हेतौ ध्वनिभिन्नत्वं विशेषणं देयम् अनित्यत्वे साध्ये सामान्यवत्त्वविशेषणस्य शब्दत्वे व्यभिचारवारणाय सार्थक्यम् गगनादौ व्यभिचारवारणाय बहिरिन्द्रियग्राह्यत्वदलसार्थक्यं न च ग्राह्यान्यशब्दे अंशतः स्वरूपासिद्धिरिति वाच्यं सामान्यवत्त्वे सति बहिरिन्द्रियग्राह्यत्वादिति दलद्वयस्य बहिरिन्द्रियग्राह्यतावच्छेदकजातिमत्त्वरूपार्थकत्वेन वारणात्। पुनर्गगनादौ

द्रव्यत्वजातिमादाय व्यभिचारवारणाय तादृशजातौ द्वीन्द्रियग्राह्यतानवच्छेदकत्वविशेषणं देयम् । एवं च जलीयपरमाणुरूपे व्यभिचारवारणाय विशेषगुणान्तरासामानाधिकरण्यदलसार्थक्यम् आत्मन्यात्मत्वजातिमादाय व्यभिचारवारणाय बहिःपदम् । अनित्यत्वपक्षे बहिरिन्द्रियग्राह्यत्वस्य लौकिकप्रत्यक्षविषयत्वरूपं नार्थः । अथान्तरपदस्य स्वरूपासिद्धिवारकतया सार्थकत्वमुक्तं तन्न सङ्गच्छते हेत्वप्रसिद्धिवारकतयैव सार्थक्यादिति चिन्तनीयम् ॥४५॥

यद्वा यो यदीयानां यद्धर्मावच्छिन्नप्रतियोगित्वानां यावतां विशेषाभाववान् प्रत्येकावच्छिन्नाभाववानित्यर्थः तथा च संयोगत्वावच्छिन्नप्रतियोगिताव्यक्तीनां प्रत्येकावच्छिन्नाभावकूटवत्त्वस्य पक्षे सत्त्वान्नासिद्धिर्न वा व्यर्थविशेषणत्वमिति जगदीशः । न चात्रापि प्रत्येकपदस्य स्वरूपासिद्धिवारकतया तद्दोपतादवस्थ्यमिति वाच्यम् यद्धर्मावच्छिन्नप्रतियोगित्वानां प्रत्येकावच्छिन्नाभाववानित्यनेन तादृशप्रतियोगितानिष्ठावच्छेदकताकाभाववत्त्वस्यैव विवक्षितत्वात् । न च संयोगत्वावच्छिन्नप्रतियोगी नास्तीतिप्रतीतिसिद्धाभावमादाय पक्षे स्वरूपासिद्धिरितिवाच्यम् तादृशाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन संयोगत्व एव कल्पनीयत्वादिति । न च तत्तत्प्रतियोगित्वावच्छिन्नाभावप्रतियोगितावच्छेदकं तत्तत्संयोगादिनिष्ठतत्तद्व्यक्तित्वमेव लाघवात् न तत्तत्प्रतियोगित्वम् । तथा च संयोगत्वावच्छिन्नप्रतियोगितानिष्ठावच्छेदकताकप्रतियोगिताकाभावाप्रसिद्ध्या हेत्वप्रसिद्धिरिति वाच्यम् जगदीशेन जातीतरस्य स्वरूपतो भानाङ्गीकारात् स्वरूपतस्तत्तत्प्रतियोगित्वस्यैवावच्छेदकत्वस्वीकारात् तदपेक्षया तद्व्यक्तित्वस्यावच्छेदकत्वकल्पने लाघवानवकाशादिति । अथात्र प्रतियोगित्वनिष्ठावच्छेदकत्वं स्वरूपसम्बन्धावच्छिन्नं ग्राह्यम् अन्यथा कालिकसम्बन्धावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववत्त्वस्य वृक्षादावसत्त्वेन स्वरूपासिद्धिप्रसङ्गः न चात्रापि स्वरूपासिद्धिवारकविशेषणस्य वैयर्थ्यमिति वाच्यम् यत्किञ्चित्सम्बन्धावच्छिन्नावच्छेदकत्वघटितलक्षणे व्यर्थविशेषणत्वाभावादिति । वस्तुतस्तु यद्धर्मावच्छिन्नप्रतियोगितात्वव्यापकसमुदायत्वविशिष्टाभाववत्त्वमेव हेतुः व्यापकत्वं च स्वाश्रयाभावप्रतियोगितावच्छेदकत्वसम्बन्धेन बोध्यमिति ॥ ४६ ॥

न चाभिघातत्वसमानाधिकरणतत्तदभिघातत्वावच्छिन्नाभाव-

वति वृक्षे ऽभिघातसामान्याभावरूपसाध्यवति निरवच्छिन्नवृत्तिकत्वविशिष्टाभिघातयावद्विशेषाभावासत्त्वेनोपाधेः साध्याव्यापकत्वमिति वाच्यम् गुणविभाजकजातेरेव हेतुसाध्ययोः प्रविष्टत्वादिति जगदीशेनोक्तम् तन्न सङ्गच्छते उपाधिदानार्थं गुणविभाजकजातिनिवेशस्यासङ्गतत्वादिति चेत् । न गुणविभाजकजात्यवच्छिन्नाभावसाध्यकानुमाने उपाधिसत्त्वेन गुणविभाजकजात्यवच्छिन्नाभावस्य पक्षावृत्तित्वसिद्धौ सामान्यतो जात्यवच्छिन्नाभावसाध्यकानुमानस्य निरुपाधित्वे ऽपि तद्बलात् विशेषबाधेन सामान्यसिद्धौ सिद्धसाधनापत्तेर्दुर्वारत्वात् एवं सति संयोगत्वावच्छिन्नाभावसाध्यकानुमाने उपाधिदाने संयोगाभावेतराभावसिद्धौ सिद्धसाधनापत्तिसम्भवे गुणविभाजकजातिपर्यन्तप्रवेशो वृथेति विभावनीयम् । न च घटाद्यवच्छेदेन ज्ञानादिसामान्याभाववत्यात्मनि निरवच्छिन्नवृत्तिकतदीययावद्विशेषाभावासत्त्वादुपाधेः साध्याव्यापकत्वमिति वाच्यम् साध्यघटकगुणविभाजकजातेः सविषयकावृत्तित्वेनापि विशेषणीयत्वादिति ध्येयम् । इदं तु चिन्त्यते वक्ष्यमाणयत्त्वादिकल्पे रूपाद्यवृत्तित्वेन जातिविशेषणेनैव सामञ्जस्ये तत्कल्पस्य परित्यागानौचित्यमिति ॥ ४७ ॥

यत्त्वेकावच्छेदेनेत्यस्य परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टेनेत्यर्थमाह तच्चिन्त्यमिति जगदीश । तस्यायमाशयः निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभाववत्त्वस्योपाधित्वे कपिसंयोगाभावमादायोपाधिसाध्यव्याप्तौ व्यभिचारमाशङ्क्य गुणविभाजकजात्यवच्छिन्नाभावनिवेशनं कृतं जगदीशेन। एतन्मते परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टकपिसंयोगीययावद्विशेषाभाववत्त्वस्य पक्षे सत्त्वान्न व्यभिचारः स्वावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकताकभेदवत्त्वस्वप्रतियोग्यधिकरणसमवेतत्वोभयसम्बन्धेन यत्किञ्चिद्विशेषाभावविशिष्टधर्मानवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभाववत्त्वमुपाधिरिति ॥ ४८ ॥

नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके साध्यसाधनभेदेन व्याप्तेर्भेदादिति दीधितिः । एतद्व्याख्यानप्रस्तावे सत्तावान् जातेरित्यादावव्याप्तिवारणं तु अभावे विशेषणताविशेषसम्बन्धावच्छिन्नवृत्तित्वनिवेशादेव सम्भवति परन्तु द्रव्यत्वशून्यं सत्त्वादित्यादौ द्रव्यत्वरूपसाध्याभावस्य विशेषणतया वृत्तित्वविरहात् द्रव्यभिन्न-

त्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि द्रव्यत्वानतिरेकादतिव्याप्तिरिति जगदीशः । अथ द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यातिरिक्तत्वे ऽपि तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्त्यनिरासात्तादृशाभावस्यातिरिक्तत्वखण्डनस्यानौचित्यं जगदीशस्येति चेत् । न द्रव्यभिन्नत्वाभावत्वस्य अतिरिक्ताभा वेकल्पनामपेक्ष्य द्रव्यत्वस्वरूप एव कल्पयितुमुचितत्वेन क्लृप्तद्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावे ऽपि कल्पयितुं शक्यतया विशेषणताविशेषसम्बन्धेन वर्तमानस्य तादृशाभावस्य प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमतो नातिव्याप्तिरित्याशङ्क्य द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यातिरिक्तत्वं खण्डयति द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वेति अतो न क्वचिदनुपपत्तिरिति । केचित्तु तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वमिति पारिभाषिकलक्षणाभिप्रायेणेदमिति चेत् । न तद्घटवृत्तिरूपध्वंसाभावाभावमादायातिव्याप्तिवारणसम्भवे तद्ग्रन्थासङ्गतेरिति ॥ ४९ ॥

तथापि साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगिमत्ताबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेन सम्बन्धेन हेत्वधिकरणवृत्तित्वमभावस्य विवक्षितमिति जगदीशः । तस्यायमर्थः साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धेन तत्त्वमिति फलितम् । न चात्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशो व्यर्थ इति वाच्यम् विषयितासम्बन्धेन घटाभावविशिष्टभेदे साध्ये घटाभावाविषयकज्ञानत्वादित्यादावव्याप्तेः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य घटाभावानतिरिक्ततया कालिकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूता या कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्नप्रकारता तदवच्छेदकीभूतविशेषणताविशेषसम्बन्धेन हेत्वधिकरणवृत्तितादृशाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति। न च तथापि स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावस्तस्य स्वरूपसम्बन्धेन साध्यतायां गगनत्वादिहेतावव्याप्तिः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियो-

गिताकसाध्याभावस्यापि साध्यतावच्छेदकसम्बन्धेन स्वप्रतियं
गितावच्छेदकीभूतघटत्ववत्त्वबुद्धेः प्रतिबन्धकतावच्छेदकीभूतवि
शेषणताविशेषेण हेत्वधिकरणवृत्तितया तदवच्छेदकत्वस्य साध्य
तावच्छेदके सत्त्वादिति वाच्यम् साध्यतावच्छेदकसम्बन्धेन या
शप्रतियोगितावच्छेदकावच्छिन्नवत्ताबुद्धेः प्रतिबन्धकतावच्छेदक
प्रकारतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वं यदभावस्य त
भावीयतादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके वि
क्षितत्वात् । अथवा स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नस
ध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरू
तप्रतिबन्धकतावच्छेदकीभूतस्वावच्छिन्नप्रकारतावच्छेदकसम्बन्ध
वच्छिन्नहेत्वधिकरणवृत्तितावच्छेदकीभूतं यदनुयोगित्वं तन्नि
पितप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् स्वमनुयोगित
मिति ध्येयम् ॥ ५० ॥

वस्तुतो व्याप्यवृत्तित्वमत्र साध्यतावच्छेदकसम्बन्धेन साध
वदवृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रति
योगित्वमिति जगदीश । अत्रेदं चिन्त्यते विषयितासम्बन्धेन गग
वद्भेदस्य साध्यत्वे प्रमेयत्वादिहेतावतिव्याप्तिः स्वाश्रयसमवेतनित
भिन्नत्वसम्बन्धेन रूपवद्भेदस्य साध्यतायां नित्यरूपगगनान्यतरत्व
दिहेतावतिव्याप्तिश्च विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगित
कसाध्याभावस्य हेत्वधिकरणवृत्त्यभावान्तरप्रतियोगितानवच्छेद
त्वस्य साध्यतावच्छेदके सत्त्वादिति। मैवं साध्यतावच्छेदकसम्बन्धं
साध्यवत्ताग्रहविरोधिताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व-
साध्याभावनिष्ठत्वैतदुभयाभाववद्धेत्वधिकरणसम्बन्धितावदभावप्र
तियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वादिति
वस्तुतस्तु वृत्त्यनियामकसम्बन्धावच्छिन्नत्वसाध्याधिकरणनि
पितत्वोभयाभाववद्धेत्वधिकरणसम्बन्धितावदभावप्रतियोगितानव-
च्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वान्न दोष इति ध्येयम् ॥५

अथ अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वे व्याप्यवृ
साध्यकस्थलीयलक्षणे घटत्वाभाववान् पटत्वादित्यादौ साधनसम
नाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभ
वात्मकसाध्यभेदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेद
सत्त्वादव्याप्तिरतस्तद्वारणाय साधनसमानाधिकरणाभावीयात्यन

भावत्वनिरूपकप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके वाच्यम् तथा सति तन्मते घटत्वाभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावस्तस्यापि घटाद्यभावस्वरूपतया साधनसमानाधिकरणघटाद्यभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावस्वरूपात्यन्ताभावत्वनिरूपकप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन पुनः तत्रैवाव्याप्तिरतस्तद्वारणाय साधनसमानाधिकरणाभावीयात्यन्ताभावत्वनिरूपकसाध्यतावच्छेदकसम्बवच्छिन्नप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके वाच्यम् तथा च इयं गौः सास्नाया इत्यादौ साधनसमानाधिकरणाभावीयात्यन्ताभावत्वनिरूपकप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाप्रसिद्ध्या ऽव्याप्तिसम्भवे इदमप्यभाववृत्तिरभावो नाधिकरणस्वरूप इत्यादि जगदीशग्रन्थासङ्गतिरिति चेत्। न व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे प्रतियोगितायामत्यन्ताभावत्वनिरूपकत्वमपहाय साधनसमानाधिकरणात्यन्ताभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वादिति। न च घटाद्यभावस्य तादात्म्येन साध्यतायां तद्व्यक्तित्वादिहेनावव्याप्तिः साधनसमानाधिकरणघटत्वाभावात्मकघटभेदस्य साध्यभेदात्मकतया तदीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् हेतुसमानाधिकरणाभावीयहेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वाददोष इति। तथा चाभाववृत्त्यभावस्याधिकरणस्वरूपत्वेपि नाव्याप्तिसम्भव इति ध्येयम्॥ ५२॥

स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्धेत्वधिकरणं तद्वृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके विवक्षणीयम् तथा च सद्धेतुस्थल इव द्रव्यत्वाभाववान् सत्त्वादित्यत्रापि घटाद्यभाव एव प्रतियोगिव्यधिकरण इति जगदीशः। अत्रेयमापत्तिः पूर्वक्षणवृत्तित्वविशिष्टघटाद्यभावाभाववान् पटत्वादित्यादावव्याप्तिः स्वीयं घटनिष्ठं यत्प्रतियोगित्वं संयोगसम्बन्धावच्छिन्नं संयोगेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यत् पटादि तद्वृत्तिघटाभावीयसाध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नपूर्व-

क्षणवृत्तित्वविशिष्टघटाभावाभावनिष्ठप्रतियोगिताया अवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् न च हेतुमद्वृत्तितावच्छेदकानुयोगिता परवृत्तित्वविशिष्टघटाभावत्वस्वरूपानुयोगितैव तन्निरूपितत्वं परवृत्तित्वविशिष्टघटाभावाभावनिष्ठप्रतियोगितायामेव न साध्यतावच्छेदकीभूतविशेषणताविशेषसम्बन्धावच्छिन्नपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावनिष्ठप्रतियोगितायामतो नाव्याप्तिरिति वाच्यम् कपिसंयोगविशिष्टघटाभावाभाववानेतद्वृक्षत्वादित्यादावव्याप्तिः न च कपिसंयोगविशिष्टघटाभावाभावस्य एतद्वृक्षेऽसत्त्वात् कथं कपिसंयोगविशिष्टघटाभावाभावसाध्यकं एतद्वृक्षत्वादिकं सद्धेतुरिति वाच्यम् कपिसंयोगस्याव्याप्यवृत्तित्वेन वृक्षे कपिसंयोगविशिष्टघटाभावाभावस्यापि मूलावच्छेदेन सत्त्वाद्विशेषणस्याव्याप्यवृत्तितया विशिष्टस्याप्यव्याप्यवृत्तित्वस्य ग्रन्थकृतैव व्याप्तिग्रहोपाये विवक्षितत्वात् । स्वीयघटनिष्ठप्रतियोगित्वं संयोगसम्बन्धावच्छिन्नं संयोगेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्धेत्वधिकरणं वृक्षादि तद्वृत्तितावच्छेदकीभूतकपिसंयोगविशिष्टघटाभावाभावाभावत्वस्वरूपानुयोगितानिरूपितसाध्यतावच्छेदकीभूतविशेषणताविशेषसम्बन्धावच्छिन्नकपिसंयोगविशिष्टघटाभावाभावनिष्ठप्रतियोगिताया अवच्छेदकत्वस्य साध्यतावच्छेदककपिसंयोगविशिष्टघटाभावाभावत्वे सत्त्वादनधिकरणान्तस्य वैयर्थ्यभयेन हेत्वधिकरणवृत्तितायां निरवच्छिन्नत्वस्य निवेशासम्भवात् । न च हेतुमद्वृत्तितावच्छेदकत्वे सति निरवच्छिन्नवृत्तितावच्छेदकत्वमप्यनुयोगिताविशेषणं देयम् । तथा च कपिसंयोगविशिष्टघटाभावस्य सर्वत्राव्याप्यवृत्तितया कपिसंयोगविशिष्टघटाभावाभावत्वस्वरूपानुयोगिताया निरवच्छिन्नवृत्तितावच्छेदकत्वविरहादेवाव्याप्तिव्युदास इति वाच्यम् कपिसंयोगाभावविशिष्टघटाभावाभाववानेतद्वृक्षत्वादित्यादावव्याप्तिप्रसङ्गात् गुणपरमाणुनिरूपितनिरवच्छिन्नवृत्तिताया अवच्छेदकत्वस्य साध्याभावत्वे सत्त्वात् । अत्र केचित् स्वीययन्निष्ठप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्धेत्वधिकरणं तद्वृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावीयतन्निष्ठप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात् तथा च स्वीयघटनिष्ठप्रतियोगित्वं संयोगसम्बन्धावच्छिन्नं संयोगेन प्रतियोगितावच्छेदकावच्छिन्नसामा-

स्यानधिकरणं पटादि तद्वृत्तिसाध्यतावच्छेदकविशेषणताविशेषसम्बन्धावच्छिन्नपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावनिष्ठप्रतियोगिताकाभावीया या घटनिष्ठप्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् न तत्राव्याप्तिः । न च घटाभाववानात्मत्वादित्यादावव्याप्तिर्घटाभावनिष्ठप्रतियोगित्वं कालिकसम्बन्धावच्छिन्नं कालिकेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्धेत्वधिकरणमात्मादि तद्वृत्तिसाध्यतावच्छेदकविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकस्य पूर्वक्षणवृत्तित्वविशिष्टकालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावाभावाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावतया तदीया या घटाभावनिष्ठा प्रतियोगिता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् अभावे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वमपहाय प्रतियोगितायां साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभावस्य विवक्षणीयत्वात् तथा च घटाभाववानात्मत्वादित्यादौ तादृशहेत्वधिकरणवृत्त्यभावीयघटाभावनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धातिरिक्तकालिकसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयसत्त्वेन तत्प्रतियोगितायाः लक्षणाघटकत्वान्नाव्याप्तिः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान् पटत्वादित्यादौ घटनिष्ठप्रतियोगितायां साध्यनिष्ठत्वविरहेणोभयाभावसत्त्वात् तत्तत्प्रतियोगितामादायैव लक्षणसमन्वय इत्याहुः । केचित्तु हेतुसमानाधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितायां स्वप्रतियोगितावच्छेदकयादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्धेत्वधिकरणं तादृशसम्बन्धानवच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य विशेषणताविशेषसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य विवक्षणीयत्वात् । तथा च पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान् पटत्वादित्यादौ संयोगादिसम्बन्धावच्छिन्नपटाभावीयपूर्वक्षणवृत्तित्वविशिष्टपटाभावाभावनिष्ठप्रतियोगितैव लक्षणघटिकेत्यप्याहु । नव्यास्तु साध्यतावच्छेदकसम्बन्धानवच्छिन्नत्वसाध्याभावनिरूपितत्वोभयाभाववत्प्रतियोगित्वस्य स्वप्रतियोगित्वपदेन विवक्षितत्वात् तथा च संयोगसम्बन्धावच्छिन्नघटनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धा-

नवच्छिन्नत्वपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावरूपसाध्याभाव-निरूपितत्वोभयसत्त्वेन लक्षणाघटकत्वात् पूर्वक्षणवृत्तित्वविशिष्टघ-टाभावात्मकस्य घटाभावानतिरिक्तत्वात्। न च द्रव्यत्वाभावस्य विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव द्रव्यभि-न्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोपि तथा च द्र-व्यत्वाभावनिष्ठं यद् द्रव्यभिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नं प्रति-योगित्वं तत्र साध्यतावच्छेदकस्वरूपसम्बन्धानवच्छिन्नत्व-साध्याभा-वनिरूपितत्वोभयाभावसत्त्वेन स्वप्रतियोगितावच्छेदकद्रव्यभिन्नानुयो-गिकस्वरूपसम्बन्धेन तादृशप्रतियोगितावच्छेदकावच्छिन्नसामान्यान-धिकरणत्वस्य हेत्वधिकरणे सत्त्वात् द्रव्यत्वस्वरूपस्य साधाभावस्य लक्षणघटकत्वात् कथं द्रव्यत्वाभाववान्सत्त्वादित्यादावतिव्याप्ति-रिति वाच्यं, यत्राऽऽत्मत्वप्रकारकप्रमाविशेष्यत्वस्य तदात्मानुयोगि-कस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावः तस्य कालिकस-म्बन्धावच्छिन्नप्रतियोगिताकाभावस्य दैशिकविशेषणतया साध्यता-यामात्मत्वं हेतुस्तत्र सद्धेतौ हेत्वधिकरणे आत्मनि वर्तमानो यस्त-दात्मानुयोगिकविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकात्म-त्वप्रकारकप्रमाविशेष्यत्वाभावस्तत्प्रतियोगित्वं तदात्मानुयोगिकवि-शेषणताविशेषसम्बन्धावच्छिन्नं तेन तदभावप्रतियोगितावच्छेद-कावच्छिन्नसामान्यानधिकरणहेत्वधिकरणवृत्तिर्यस्तदनुयोगिकस्वरू-पसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभाव-स्तदीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यनिष्ठा या प्रति-योगिता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिस्तद्वा-रणार्थं साध्यतावच्छेदकसंसर्गतावच्छेदकेतरावच्छिन्नसंसर्गतानि-रूपितत्वसाध्याभावनिरूपितत्वोभयाभाववत्प्रतियोगित्वस्य स्वप्र-तियोगित्वपदेन विवक्षितत्वात्। तथा च तदात्मानुयोगिकविशेषण-ताविशेषसम्बन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वनिष्ठप्रतियोगि-तायाः साध्यतावच्छेदकसंसर्गतावच्छेदकेतरतदात्मानुयोगिकत्वा-वच्छिन्नसंसर्गतानिरूपितत्वसाध्याभावनिरूपितत्वोभयसत्त्वेन लक्ष-णाघटकत्वं किन्तु घटाद्यभावीयप्रतियोगितायामेव तथात्वम् त-स्याः साध्यतावच्छेदकेतरसंयोगत्वावच्छिन्नसंसर्गतानिरूपितत्वेऽपि साध्याभावनिरूपितत्वाभावसत्त्वेन तादृशोभयाभावसत्त्वात् तथा च द्रव्यत्वाभाववान् सत्त्वादित्यादौ द्रव्यभिन्नानुयोगिकस्वरूपसम्ब-

-न्धेन द्रव्यत्वाभावस्याभावो न लक्षणघटकः द्रव्यभिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्ना या साध्याभावनिरूपिता प्रतियोगिता तत्र साध्यतावच्छेदकसंसर्गतावच्छेदकेतरद्रव्यभिन्नानुयोगिकत्वावच्छिन्नसंसर्गत्वनिरूपितत्वसाध्याभावनिरूपितत्वोभयसत्त्वात् किन्त्वभावान्तरमादायातिव्याप्तिरिति सङ्गच्छते ॥ ५३ ॥

अत्र कल्पे घटत्ववान् तत्क्रियात्वादित्यत्र कालिकसम्बन्धेन साध्यत्वे तत्क्रियात्वस्य हेतुतायामव्याप्तिस्तत्र स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशात् तादृशसम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः । न चैतत्क्रियासमानकालीनकालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावमादाय नाव्याप्तिः विभिन्नकालीनवस्तुनः कालिकसम्बन्धेनाधाराधेयभावाकल्पनादिति वाच्यम् एतत्कालासमानकालीनघटाद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावानतिरिक्ततया पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावरूपस्य प्रतियोगिनः कालिकेन सम्बन्धेन तत्क्रियायामधिकरणत्वसत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः। अत्रोच्यते । स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन तादृशसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य हेत्वधिकरणे विवक्षितत्वात् एतत्कालासमानकालीनपटाद्यभावमादाय नाव्याप्तिः एतत्कालासमानकालीनपटाभावप्रतियोगी यः पूर्वक्षणवृत्तित्वविशिष्टपटाभावाभावस्तन्निष्ठप्रतियोगितायास्तादृशकालिकसम्बन्धानवच्छिन्नत्वात् पूर्वक्षणवृत्तित्वविशिष्टैतत्क्रियासमानकालीनपटाभावाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तु न तत्क्रियाऽसमानकालीनपटाभावस्वरूपः किन्त्वतिरिक्तएवेति । एतेन संयोगादिसम्बन्धेन घटाद्यभावस्य विषयितासम्बन्धेन घटाद्यभाववद्भिन्नभेदात्मकतया विषयितया घटाद्यभाववद्भिन्नवह्न्यादिरूपप्रतियोगिसामानाधिकरण्यात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या वह्निमान् धूमादित्यादावसम्भवतादवस्थ्यम् हेत्वधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वविवक्षया कथञ्चित् तद्वारणे ऽपि स्वरूपसम्बन्धेन स्वाधिकरणावृत्तित्वावच्छिन्नाभावस्वरूपतया घटाभावस्य स्वरूपसम्बन्धेन स्वा-

धिकरणावृत्तिवह्न्यादिरूपप्रतियोगिसमानाधिकरणतया वह्निमान् धूमादित्यादावव्याप्तिर्दुर्वारैवेत्यपि निरस्तम् घटाद्यभावीयवह्न्यादिनिष्ठप्रतियोगितायास्तादृशसम्बन्धानवच्छिन्नत्वादिति ध्येयम् ॥ ५४ ॥

प्राचां मते संयोगसामान्याभावसाध्यकमात्मत्वं विरुद्धमतः कपिसंयोगाभाव उक्तः वृक्षादावुत्पत्तिकालावच्छेदेन गुणसामान्याभावसत्त्वाद्वृक्षत्वादिकं परित्यज्यात्मत्वं हेतुरुक्तः इति जागदीशी। अत्रेयमाशङ्का । न च कपिसंयोगवृक्षत्वान्यतराभावाभावमादाय कपिसंयोगाभाववान् वृक्षत्वादित्यत्राव्याप्तिसम्भवे कथं तत्परित्यक्तमिति वाच्यम् वृक्षत्वकपिसंयोगान्यतराभावाभावस्य वृक्षत्ववृक्षावृत्तिकपिसंयोगान्यतरस्वरूपतया वृक्षत्वकपिसंयोगान्यतराभावत्वस्य हेतुसमानाधिकरणकपिसंयोगात्मकसाध्याभावप्रतियोगितानवच्छेदकत्वात् । न च तथापि संयोगस्वरूपाणां वृक्षवृत्तिकपिसंयोगवृक्षत्वान्यतररूपाभावानां प्रतियोगितावच्छेदकीभूतवृक्षवृत्तिकपिसंयोगवृक्षत्वान्यतराभावत्वावच्छिन्नानधिकरणत्वात् वृक्षस्येति तद्दोषतादवस्थ्यम् । न च वृक्षवृत्तिकपिसंयोगवृक्षत्वान्यतराभावाभावो वृक्षत्वरूप एवातिप्रसङ्गाभावादिति वाच्यम् । कपिचरणं वृक्षत्वकपिसंयोगान्यतराभावाभाववदिति प्रतीत्यनुपपत्तेरिति वाच्यम् यत्प्रतियोगित्वावच्छिन्नानधिकरणत्वं हेतुमति सम्भवति तत्प्रतियोगितायां स्ववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणप्रतियोगिताकाभावावृत्तित्वं निवेश्यम् न च गुणसामान्याभावनिष्ठप्रतियोगित्वमपि न तादृशं विशिष्टस्यानतिरिक्ततया स्ववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणीभूतो यः पूर्वक्षणवृत्तित्वविशिष्टगुणसामान्याभावाभावः तत्प्रतियोगिताकाभाववृत्तित्वादिति वाच्यम् निरुक्तप्रतियोगितायां स्ववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणवृत्त्यनुयोगिताऽनिरूपितत्वस्य विवक्षितत्वात् स्वपदं हेतुसमानाधिकरणाभावपरम् तथा च स्ववृत्तिपदार्थविभाजकीभूतं यद्गुणत्वं तदनधिकरणं यद्वृक्षत्वादि तत्तद्वृत्त्यनुयोगितानिरूपितत्वमन्यतराभावनिष्ठप्रतियोगितायामस्त्येव तथा च वृक्षत्वादिहेतौ अन्यतराभावाभावमादायाव्याप्त्यभावादात्मत्वपर्यन्तानुधावनमिति आत्मत्वादिहेतुकस्थले गुणसामान्याभावनिष्ठप्रतियोगितायां स्ववृत्तिपदार्थविभाजकीभूतगुणत्वानधिकरणवृत्त्यनुयोगित्वानिरूपितत्वादित्यव्याप्तिः सुदृढैवेति ध्येयम् ॥ ५५ ॥

अथ कपिसंयोगप्रतियोगितावच्छेदकगुणसामान्याभावत्वमादाय कपिसंयोगाभाववानात्मत्वादित्यादावव्याप्तिकथनमयुक्तमिति गुणसामान्याभावाभावस्य घटादिवृत्तिनानागुणस्वरूपकल्पनामपेक्ष्य घटादिवृत्त्येकत्वादिस्वरूपकल्पनायाः सुवचत्वाल्लाघवादिति । अथ जन्यज्ञानविशिष्टैकत्वाभाववानात्मत्वादित्यादौ जन्यज्ञानविशिष्टैकत्वस्वरूपसाध्याभावप्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वं हेतुमत इत्यव्याप्तिरिति चेज्जन्यज्ञानविशिष्टैकत्वस्वरूपकल्पनामपेक्ष्य लाघवाज्जन्यज्ञानस्वरूपत्वं कल्पनीयम् । अत्रेदं समाधानम् कपिसंयोगाभाववानात्मत्वादित्यादौ तत्कपिसंयोगान्यतत्कपिवृत्तिगुणान्यगुणाभावत्वस्यापि कपिसंयोगरूपसाध्याभावप्रतियोगितावच्छेदकतया तदवच्छिन्नानधिकरणत्वस्यात्मनि सत्त्वादव्याप्तिः सुसङ्गच्छत इति । न चैवं तत्साध्यकवृक्षत्वादिहेतुकस्थले तत्कपिसंयोगान्यतत्कपिवृत्तिसमवेतान्यसमवेताभावत्वस्यापि कपिसंयोगरूपसाध्याभावप्रतियोगितावच्छेदकतया वृक्षादौ तदवच्छिन्नानधिकरणत्वस्य सत्त्वात् तत्राव्याप्तिवारणसम्भवे तदुपेक्षायां बीजाभावादिति वाच्यम् संयोगान्यतराभावत्ववारणरीत्यैव तद्वारणादिति भाव्यम् ॥ ५६ ॥

अत्र च प्रतियोगितावच्छेदकधर्मेणावच्छिन्नत्वं साध्यतावच्छेदकताघटकसम्बन्धेन ग्राह्यम् तेनायःपिण्डस्यापि कालिकसम्बन्धेन यद्धूमत्वविशिष्टं तृणादि तस्य संयोगेनाधिकरणत्वे ऽपि नातिव्याप्तिरिति जागदीशी । अथात्र साधनसमानाधिकरणाभावमात्रस्यैव कालिकादिसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टगुणादिसमानाधिकरणाभावाप्रसिद्ध्या समवायेन गुणवान् महाकालत्वादित्यादावव्याप्तिसम्भवे धूमवान् वह्नेरित्यादावतिव्याप्त्यभिधानमसङ्गतमिति चेत् न तादात्म्येन गगनविशिष्टाभावमादायैव लक्षणसमन्वयात् केनापि सम्बन्धेन स्वप्रतियोगितावच्छेदकीभूतगगनविशिष्टस्य महाकाले सम्बन्धित्वाविरहात् न च साध्यतावच्छेदकसमवायेन प्रतियोगिव्यधिकरणत्वाप्रसिद्धैव तादृशाभावस्य लक्षणाघटकत्वमिति वाच्यम् महानसानुयोगिकसंयोगेन वह्नेः साध्यतायां तद्धूमादिहेतावव्याप्तिवारणाय प्रतियोगिव्यधिकरणत्वस्य पारिभाषिकस्य ग्रन्थकृतैव प्रागुक्तत्वादिति ध्येयम् ॥ ५७ ॥

स्वप्रतियोगितावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठा-

धिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वद्वयोर्व्यतिरेकस्तत्तद्व्यक्तिभेदकूटवत्त्वं हेतुमतो वाच्यमिति जगदीशः । अत्र स्वाश्रयाधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम् अन्यथा धूमवान् वह्नेरित्यादावतिव्याप्तिः कालिकसम्बन्धेन स्वाश्रयाधिकरणं यदयोगोलकं तन्निष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वद्वयोर्व्यतिरेकस्य प्रतियोगितावच्छेदके सत्त्वात् तद्व्यक्तिभेदवत्त्वस्य हेतुमत्यसत्त्वात् एवमधिकरणतानवच्छेदकत्वमित्यस्याधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम् अन्यथा तज्ज्ञानान्यत्वविशिष्टसत्तावान् ज्ञानत्वादित्यादावतिव्याप्तिः स्वाश्रयाधिकरणं यत्तज्ज्ञानं तन्निष्ठविषयितासम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वाभावसत्त्वात् तत्तद्व्यक्तिभेदकूटवत्त्वस्य हेतुमत्यसत्त्वात् । अत्रायं पूर्वपक्षः वह्निप्रतियोगिकसंयोगसम्बन्धेन वह्नेः साध्यतायां धूमादिहेतावभावाप्रसिद्ध्याऽव्याप्तिः साध्याभावातिरिक्ताभावप्रतियोग्यधिकरणतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वासिद्धेः साध्याभावप्रतियोग्यधिकरणतायां तत्सम्बन्धावच्छिन्नत्वप्रसिद्धावपि साध्यतावच्छेदके स्वाश्रयाधिकरणस्वनिष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वद्वयोर्व्यतिरेकस्तत्तद्व्यक्तिभिन्नत्वस्य हेतुमत्यसत्त्वादभावाप्रसिद्धेः एवं अधिकरणतानवच्छेदकत्वेत्यत्रापि तथा । न च साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यनिरूपितत्वोभयाभाववत्त्वस्य स्वाश्रयाधिकरणतायां निवेशान्नाप्रसिद्धिः । एवमधिकरणतानवच्छेदकत्वमित्यत्रापीति वाच्यम् वह्निप्रतियोगिकसंयोगेन प्रमेयमात्रसाध्यकधूमादिहेतावप्रसिद्धेः वह्न्यभावातिरिक्ताभावप्रतियोग्यधिकरणतायां साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वप्रमेयनिरूपितत्वद्वयोः सत्त्वाद्वह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नवह्न्यभावप्रतियोग्यधिकरणतायां तत्सत्त्वे ऽपि तद्व्यक्तिभिन्नत्वस्य हेतुमत्यसत्त्वादितिचेत् । सत्यम् । साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणवृत्तिसाध्यनिरूपितत्वसाध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वैतदुभयाभावस्य विवक्षितत्वात् घटाद्यभावप्रतियोग्यधिकरणतायामेव साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणवृत्तिसाध्यनिरूपितत्वघटितोभयाभावसत्त्वादिति ध्येयम् ॥ ५८ ॥

अत एव च गोत्वत्वाद्यग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोव्यापकग्रहे सास्नादिना तादात्म्येन गोत्ता-

दात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिद्ध्यतीति दीधितिः । नन्वयं गौरित्यनुमितिर्गवेतरावृत्तित्वरूपायाः शुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानात् निरवच्छिन्नगोत्वसाध्यकैव भविष्यति साध्यवदन्यावृत्तित्वरूपाया अपि व्याप्तेरनुमितिहेतुत्वस्याग्रे वाच्यत्वादतस्तादृशानुमित्यनुरोधात् धर्मिणो धर्मव्यापकत्वस्वीकारोऽनुचित इत्यत उक्तं गोत्वत्वेति । गोत्वत्वं गवेतरावृत्तित्वमिति जगदीशः । अथात्र समवायेन गोत्वसाध्यकस्थले सास्नादेर्गोरवयवत्वेन समवेतत्वसम्बन्धेनैव तस्य सद्धेतुत्वं तथा च गवेतरनिरूपितसमवेतत्वसम्बन्धावच्छिन्नवृत्तित्वाभावस्यैव तद्धेत्वीयव्याप्तितया गोत्वत्वघटकगवेतरासमवेतत्वस्य तद्धेतौ व्याप्तित्वकथनमनुचितं जगदीशस्येति चेत् न गोप्रतिपाद्यपृथिवीसाध्यकसास्नादेः सद्धेतुतया तत्स्थलाभिप्रायेणैव तन्निवेशादिति समवायेन रूपादिहेतुकस्थलाभिप्रायेण वा तल्लिखनादिति ध्ययम् । न चैवं यद्यत्सम्बन्धेन यद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतस्तत्सम्बन्धान्यसाध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद्व्याप्तिरस्तु तथा च घटवान् महाकालत्वादित्यादौ समवायेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरण सम्भवतीति वाच्यम् घटवृत्तित्व(१)विशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वादिति तादात्म्यसम्बन्धेन तथाविधानधिकरणत्वसम्भवेऽपि दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यादावव्याप्तेरिति प्राहुरिति जगदीशः । ननु एतल्लक्षणस्य प्रतियोगिव्यधिकरणाभावाघटिततया घटाद्यभावोऽपि प्रतियोगिव्यधिकरण इति जगदीशग्रन्थासङ्गतिरिति चेत् न एतल्लक्षणस्य प्रतियोगिव्यधिकरणाभावघटितत्वेन मूलाभिप्रेततया प्रतियोगिव्यधिकरणाभावघटितमेव लक्षणं वाच्यम् तथा च यथा प्रतियोगिव्यधिकर-

---

(१) अत्र द्रव्यत्ववान् पटत्वादित्युक्तौ पटानुयोगिकसमवायेन साध्यानधिकरणत्वस्य हेतुमति सम्भवाद्घटवृत्तित्वविशिष्टेति । न चात्रापि तत्तद्घटानुयोतिकसमवायेन साध्यानधिकरणत्वसम्भवान्नाव्याप्तिरिति वाच्यम् घटवृत्तित्वविशिष्टेत्यनेन—तद्घटवृत्तित्वविशिष्टस्योक्तत्वात् । अथ दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्रापि दध्यन्तरानुयोगिकसमवायेन साध्यानधिकरणत्वस्य हेतुमति सत्त्वान्नाव्याप्तिरिति चेत् न गगनाभाववृत्तिविशिष्टगगनाभाववान् गगनाभावत्वादित्यादावव्याप्तिः केनापि सम्बन्धेन हेतुमतः साध्यानधिकरणत्वासम्भवात् विषयतायाः संसर्गत्वानभ्युपगमादिति विभावनीयम् ।

णहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधर्मभिन्नत्वं साध्यतावच्छेदकधर्मे निवेश्य मूलोक्तलक्षणस्य परिष्कारो दीधितिकारेण कृतस्तथा स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणहेतुमन्निष्ठसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावीयतत्तत्प्रतियोगितावच्छेदकसम्बन्धभिन्नत्वं साध्यतावच्छेदकसम्बन्धे निवेश्य लक्षणस्य परिष्कारः कर्तुं शक्यत इत्याशङ्कावता जगदीशेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरण इत्यादिग्रन्थस्योक्तत्वादिति ध्येयम् ॥५९॥

अथ हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभाव इत्यादिक्रमेण निर्वचने घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादौ तादात्म्येन साध्यभेदमादाय दोषवारणसम्भवेऽपि दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यादावव्याप्तिः केनापि सम्बन्धेन हेतुमतस्तत्र साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासम्भवादिति जगदीशः। अत्र च दधित्ववैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन तच्च समवायेन दधित्वाधिकरणे समवायेन वृत्तित्वं तादृशप्रमेयं त्रसरेण्वादिस्वरूपं दधित्वादिकं च न तद्द्व्यणुकं परमाणौ दधित्वजात्यसत्त्वेन तत्र सामानाधिकरण्यसम्बन्धेन वैशिष्ट्यविरहात् न तद्भावो हेत्वधिकरणे समवायेन न वा तादात्म्येन प्रतियोगिव्यधिकरण इत्यव्याप्तिः। साध्यत्वं च तादात्म्येन बोध्यम्। समवायेन साध्यत्वे स्थूलपदस्य व्यभिचारावारकत्वेन व्यर्थत्वात् तादात्म्येन साध्यतायां तु स्थूलपदानुक्तौ द्व्यणुके व्यभिचारापत्तेः तत्र तादृशसाध्यस्य त्रसरेण्वादेः तादात्म्येनाभावात्। न च समवायसम्बन्धेन साध्यत्वे किं स्थूलपदेनेति वाच्यम् तथासत्यव्याप्त्यसम्भवेन प्रकृतानुपयोगात् द्व्यणुकरूपे हेत्वधिकरणे साध्यस्य तादात्म्यसम्बन्धेनाभावसत्त्वात्। अत्रेयमाशङ्का विषयितासम्बन्धमादाय विशिष्टप्रमेयत्वस्य हेत्वधिकरणे ऽसत्त्वेन। प्रतियोगितावच्छेदकतत्तत्सम्बन्धान्यत्वस्य साध्यतावच्छेदकसम्बन्धे सत्त्वात् तत्राव्याप्तिविरहादिति चेत् न विषयित्वादेः संसर्गत्वे मानाभावात्। केचित्तु ज्ञानत्वज्ञानान्यतरस्य समवायेन साध्यतायां योगिज्ञानत्वस्य समवायेन हेतुतायामव्याप्तिः तत्र केनापि सम्बन्धेनानधिकरणत्वविरहात्। न च तत्र महाकालानुयोगिककालिकसम्बन्धेनानधिकरणत्वान्नाव्याप्तिरिति वाच्यम् विशेषरू-

पेण संसर्गतानभ्युपगमादिति तन्न दिक्कृतविशेषणतासम्बन्धेन साध्यानधिकरणत्वस्य ज्ञानादौ सत्त्वादिति ध्येयम् ॥

कालो घटवान् महाकालत्वादित्यादावव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षितम् उभयाभावमपहाय विशिष्टाभावनिवेशे कालो घटवान् महाकालत्वादित्यादावव्याप्तिः गगनप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वाप्रसिद्ध्या गगनाभावस्य लक्षणाघटकत्वादिति जगदीशः । तन्न सङ्गच्छते महाकालाभावस्यैव लक्षणघटकत्वसम्भवात् तादात्म्यसम्बन्ध एव तादृशमहाकालानुयोगिकत्वविशिष्टमहाकालप्रतियोगिकत्वसम्भवात् । अत्र केचित् तादात्म्यकालिकान्यतरसम्बन्धेन साध्यतास्थले तावताऽपि अव्याप्तेरपरिहारादिति । न च प्रकृताव्याप्तितादवस्थ्यमिति जगदीशग्रन्थासङ्गतिरिति वाच्यम् प्रकृतसाध्यहेतुकाव्याप्तिपरतया तत्सङ्गतेरित्यलं पल्लवितेनेति वदन्ति । प्रतियोगिव्यधिकरणस्यानुगमस्तु हेत्वधिकरणवृत्तिप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षणीयम् वृत्तित्वं च स्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन बोध्यम् (१) ॥

(१) वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तके ऽत्रैव सिद्धान्तलक्षणक्रोडपत्रं समाप्तम् । अस्मद्धस्तलिखितपुस्तके न्यायाचार्यश्रीवामाचरणभट्टाचार्यपुस्तके चाधिक पाठो वर्तते स चानुपदमेव सन्निवेश्यते ।

ॐ नमो गणेशाय ।

नन्वष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य विशेषणताविशेषेणाऽव्याप्यवृत्ति किमपि व्यापकं न स्यात् । स्वावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिनि काले वर्तमानस्याभावस्य प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य तेन सम्बन्धेन यत् प्रतियोगिसम्बन्धि तदन्यत्वस्य च काले ऽसम्भवादिति शिरोमणिः । अत्राव्याप्यवृत्तिधर्मत्वावच्छेदेन तादृशकालमात्रवृत्तिधर्मव्यापकत्वाभावः साधनीयः । अत्र व्यापकत्वं किं कालिकसम्बन्धेन प्रतियोगिव्यधिकरणनिरुक्तमहाकालत्वसमानाधिकरणाभावप्रतियोगित्वाभावरूपं किं वा प्रतियोगिवैयधिकरण्याघटितनिरुक्तस्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन निरुक्तमहाकालत्वसमानाधिकरणाभावप्रतियोगित्वाभावरूपम् नाद्यः निरुक्तप्रतियोगित्वाभावरूपव्यापकत्वाप्रसिद्धेः साध्याप्रसिद्धिप्रसङ्गात् । नापि द्वितीयः । अव्याप्यवृत्तिधर्मे निरुक्तकालत्वसमानाधिकरणाभावप्रतियोगित्वाभावाभावरूपव्यापकत्वाभावस्य इष्टत्वात् सिद्धसाधनापत्तेः । न च व्यापकत्वसम्बन्धेन निरुक्तकालत्वाभावः साधनीय क्रियात्वादिरूपधर्मस्य तादृशव्यापकत्वसम्बन्धाप्रसिद्धेः महाकालत्वादि-व्यधिकरणसम्बन्ध एतादृशव्यापकतासम्बन्ध इति नाप्रसिद्धिरिति वाच्यम् । निरुक्तव्यापकतासम्बन्धो यदि प्रतियोगिवैयधिकरण्यघटितस्तदा निरुक्तकालत्वादिधर्मस्य व्यधिकरणतया प्रमेयत्वादावपि तदभावसत्त्वादव्याप्यवृत्तिपदवैयर्थ्यापत्तेः । यदि च प्रतियोगिवैयधिकरण्याघटितस्तदा निरुक्तयुक्त्या सिद्धसाधनापत्तेः इति चेन्न अव्याप्यवृत्तितावच्छेदकधर्मे पक्षीकृत्य प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्वतदघटितव्यापकतावच्छेदकत्वोभयसाधारणैकरूपेण संसर्गत्वमादाय निरुक्तकालत्वाभावस्य साधनीयत्वात् संसर्गतावच्छेदकरूपं च स्वनिष्ठनिरूपकतानिष्ठावच्छेदकतानिरूपिताधिकरणतानिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकताभिन्ना सती स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धावच्छिन्नत्व-

निष्ठावच्छेदकताभिन्ना सती स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताभिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तन्निरूपिता या वृत्तितानिष्ठावच्छेदकता तन्निरूपिताभावनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वानिष्ठावच्छेदकताकसंसर्गताकस्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वम् । इत्थञ्च स्वनिष्ठनिरूपकताकाधिकरणतावन्निरूपितस्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धावच्छिन्नवृत्तितावदभावप्रतियोगितावच्छेदकतासम्बन्धेन स्ववान्नेतिभेदस्य स्वनिष्ठनिरूपकताकाधिकरणतावन्निरूपितस्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धावच्छिन्नवृत्तित्ववदभावप्रतियोगितावच्छेदकत्वसम्बन्धेन स्ववान्नेत्याकारकभेदस्य च संग्रहान्नासिद्धिर्न वा अव्याप्यवृत्तिदलवैयर्थ्यम् । तत्र हेतुश्च महाकालत्वसमानाधिकरणस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्य स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन महाकालत्वसमानाधिकरणस्य एतदन्यतराभावस्य प्रतियोगितात्वव्यापकावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगिकालिकसम्बन्धप्रतियोगितावच्छेदकताविशिष्टाव्याप्यवृत्तितावच्छेदकत्वं तच्च घटत्वादावेवास्तीति न कोऽपि दोष इति । न चोत्तरकालं प्रकृतव्यापकत्वोक्तावपि निरुक्तव्यापकत्वाभावसाधने बाधकाभावादिष्टापत्तेरिदमयुक्तमिति वाच्यम् भवन्मते निरुक्तव्यापकताज्ञानस्यैवानुमितिहेतुतया निरुक्तव्यापकत्वाभावानुमितेस्तद्विरोधितयानुमितेरनुपपत्त्या इष्टापत्तेरयोगात् । अस्मन्मते च वक्ष्यमाणव्यापकताज्ञाने एतदनुमितेरप्रतिबन्धकत्वादिष्टापत्तेः सम्भवादित्याहुः ॥

वस्तुतोऽष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मत्वावच्छेदेनाव्याप्यवृत्तितावच्छेदकघटत्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतानतिरिक्तवृत्तिधर्माभावस्यैव साधनीयत्वान्नोक्तदोषः। तादृशजनकतानतिरिक्तवृत्तिधर्मप्रसिद्धिश्च क्रियात्वादावेव हेतुस्तु कालिकसम्बन्धावच्छिन्नप्रतियोगिताविशिष्टान्यत्वम् ।

प्रतियोगितावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतावच्छिन्नवृत्तितासम्बन्धेन इति ध्येयम्। अव्याप्यवृत्तितावच्छेदकधर्मत्वावच्छेदेन महाकालानुयोगिकानुमितीयकालिकसम्बन्धावच्छिन्नविधेयतावच्छेदकत्वाभावः साधनीयः। हेतुश्च महाकालत्वलिङ्गकप्रमीयानुमितिजनकतावच्छेदकीभूतपक्षविषयतानिरूपितहेतुविषयतानिरूपितवृत्तित्वविषयतानिरूपिताधिकरणताविषयतानिरूपितावच्छिन्नविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितावच्छेदकताविषयतानिरूपिताभावविषयतानिरूपितविषयत्वाभावः॥

अथात्र अष्टद्रव्यातिरिक्तत्वं यदि प्रत्येकं क्षित्यादिभिन्नत्वं तदा कालपदवैयर्थ्यम्। यदि द्रव्यविभाजकीभूतधर्मावच्छिन्नप्रतियोगिताकाष्टभेदपरं तदा घटत्वस्यापि तथात्वेन व्यापकत्वस्यापि गोत्वादौ प्रसिद्धिसम्भवादिति चेदत्र केचित्। प्रत्येकभेद एव तात्पर्यम्। कालपदन्तु कालिकविशेषणतालाभायेत्याहुः। वस्तुतः कालावृत्तिद्रव्यविभाजकधर्मावच्छिन्नप्रतियोगिताकाष्टभेदवत्त्वं तदतिरिक्तत्वं कालपदं कालावृत्तिलाभायेति ध्येयम्। एवं धर्मपदमपि येन सम्बन्धेन कालमात्रवृत्तित्वं तेन सम्बन्धेन हेतुतालाभाय एवं महाकालत्व परित्यज्य एतादृशहेत्वनुसरणं महाकालत्वतद्व्यक्तित्वादिनानाधर्मसंग्रहाय। महाकालपदशक्यतावच्छेदकनिरुक्तकालमात्रवृत्तिधर्म इति तदनुसरणमिति तु न युक्तं चतुर्द्रव्यातिरिक्तेति तु ज्याय इति जगदीशग्रन्थासङ्गतेरिति ध्येयम्।

न चात्र विशेषणताविशेषपदेन महाकालनिरूपितविशेषणताया एव विवक्षितत्वात् तादृशसम्बन्धेन निरुक्तप्रतियोग्यधिकरणाप्रसिद्धेर्नोक्ताभावस्यापि प्रतियोगिवैयधिकरण्यसम्भवः। तथा सति कालमात्रवृत्तिधर्मस्य तादृशविशेषणतया किमपि व्यापकं न स्यात् इत्यस्यैव सम्यक्त्वे अष्टद्रव्यातिरिक्तेत्यभिधानस्य सन्दर्भविरोधापत्तेरिति जगदीशः। अत्रेयमाशङ्का। ननु धर्मस्य किमपि व्यापकं न स्यात् इत्यस्यैव सम्यक्त्वे तत्र कालपदं वृत्तिपदं च व्यर्थमिति चेदत्र केचित्। अव्याप्यवृत्तिधर्मे निरुक्तसम्बन्धेन व्यापकत्वाभावः साधयितुमशक्यः किन्तु अव्याप्यवृत्तितावच्छेदकधर्मावच्छिन्नव्यापकतात्वावच्छेदेन निरुक्तकालिकसम्बन्धावच्छिन्नत्वा

भावः साधनीयः । निरुक्तानुगतहेत्वनुभवनात् । तादृशकालवृत्तिर्यो यो धर्मः तत्तद्धर्मव्यापकतैव च पक्षः व्यापकताया व्यापकस्य व्याप्यस्य च भेदेन भिन्नत्वात् इत्थञ्च कालादिपदानुपादाने गगनस्यापि तादृशत्वात् तस्य व्यापकत्वाप्रसिद्ध्या वाक्यस्यायोग्यतापत्तेः तदुपादाने गगनस्य तादृशत्वाभावान्नानुपपत्तिरित्याहुः । परं तु स्वाश्रयमात्रानुयोगिकसम्बन्धेन स्वव्यापकत्वाभावस्याव्याप्यवृत्तिधर्मे साधन एव तात्पर्यम् । स्वमुभयावृत्तिधर्मः इत्थञ्च तादृशधर्मलाभाय कालादिपदं महाकालानुयोगिक इत्यत्र महाकालपदमनुगतस्वत्वलाभाय । अत एव तात्पर्यग्रन्थे स्वविषयपदं स्वरूपेणैव प्रविश्य व्याप्तिर्वाच्या इति मथुरानाथेन प्रोक्तमित्याहुः । वस्तुतस्तु कालपदस्य वृत्तिपदस्य च पूर्वमपि व्यावृत्तिर्न्न दत्तेदानीमपि तथेति ध्येयम् ॥ ० ॥

कालो घटवान् महाकालत्वादित्यत्र साध्यताघटककालिकसम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धिर्दत्ता तत्र महाकालान्यत्वविशिष्टघटाभावस्य प्रतियोगितावच्छेदकवैशिष्ट्यं साध्यतावच्छेदकताघटकसमवायसम्बन्धेनाप्रसिद्धं स्वरूपसमवायाभ्यामेव तथात्वादिति जगदीशः । तत्रायमभिप्रायः स्वप्रतियोगिव्यधिकरणपदेन स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकवृत्तित्वे सति साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकवृत्ति यदधिकरणत्वं तदभावो विवक्षणीयः । प्रथमवृत्तिश्च स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । द्वितीयवृत्तिश्च स्वनिरूपितनिरूपकतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । अन्यथा तद्धर्मावच्छिन्नप्रतियोगिता एव तद्धर्मावच्छिन्नस्य सम्बन्ध इति मते यत्र प्रतियोगितासम्बन्धेन वह्निः साध्यत्वं वह्नित्वस्य च समवायेन साध्यतावच्छेदकत्व वह्निसामान्याभावत्वकालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वान्यतरस्य हेतुना तत्र सम्बन्धद्वयस्य यदधिकरणतानिरूपकतावच्छेदकत्वं तदधिकर-

णत्वस्य व्यभिचारनिरूपकाधिकरणे सत्त्वान्नातिव्याप्तिः। केचित्तु ध्वंसवान् वह्नेरित्यादावतिव्याप्तिवारणायाधिकरणतायां द्वितीयवृत्तित्वनिवेशः। अन्यथा समवायकालीनकालिकसम्बन्धेन ध्वंसाधिकरणताया अपि तादृशत्वाद्धेत्वधिकरणे सत्त्वेन साध्याभावस्य लक्षणाघटकत्वं साक्षात् परम्परासाधारणावच्छेदकत्वस्वीकारेण निरुक्तध्वंसाधिकरणताया. समवायावच्छिन्नत्वादिति प्राहुः— ॥ ० ॥

यद्यत्सम्बन्धेन यद्धर्मावच्छिन्नानाधिकरणं हेत्वधिकरणं तत्तसम्बन्धान्यसाध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्युक्तं जगदीशेन। तस्यानुगमः संसर्गविशिष्टान्यसाध्यतावच्छेदकसम्बन्धावच्छिन्नसामानाधिकरण्यं व्याप्तिः। संसर्गवैशिष्ट्यं च स्वतादात्म्यावच्छिन्नसाध्यतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्वाभाववद्धेत्वधिकरणवृत्त्यभावप्रतियोगिप्रतियोगिकात्वैतदुभयसम्बन्धेन स्वं संसर्गः।

न च तादृशयत्किञ्चित्सम्बन्धेन प्रतियोगिसामानाधिकरण्या भावोक्तौ वह्निसामान्याभावस्य धूमवत्पर्वतावच्छेदेन महानसीयसंयोगेन प्रतियोग्यसामानाधिकरण्याद्वह्निमान् धूमादित्यादावव्याप्तिरिति जगदीशः। अत्र यत् किञ्चित्त्वस्यानुगतत्वाभावात् केन रूपेण लक्षणे निवेश इति चेदत्रोच्यते स्वप्रतियोगितावच्छेदकसंसर्गतानिष्ठोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नसंसर्गतानिष्ठावच्छेदकतानिरूपितत्वे सति प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतात्वावाच्छिन्नप्रतियोगिताकाभावो हेत्वधिकरणे बोध्यः।

महाकालान्यत्वविशिष्टघटाभावप्रतियोगितावच्छेदकवैशिष्ट्यं समवायेनाप्रसिद्धं स्वरूपसमवायाभ्यामेव तथात्वादिति जगदीशः। अथ तादृशस्थलेऽव्याप्तिसम्भवेऽपि घटाधिकरणतावान् महाकालत्वादित्यादौ साध्यतावच्छेदकताघटकस्वरूपसम्बन्धेन महाकालान्यत्वविशिष्टघटाभावप्रतियोगितावच्छेदकवैशिष्ट्यसम्भवात् तत्र लक्षणगमनेनाव्याप्यवृत्ति किमपि व्यापकं न स्यादिति दीधितिग्रन्थासङ्गतिरिति चेन्न स्वरूपसम्बन्धातिरिक्तसम्बन्धेन साध्यतावच्छेदकवैशिष्ट्यस्थलाभिप्रायेणोक्तत्वादि-

ति । न च गोत्ववान् घटत्वादित्यत्र स्वरूपसम्बन्धातिरिक्तसम्बन्धेन गोत्वत्वस्य वैशिष्ट्यं नास्ति तत्र स्वरूपसम्बन्धेन वैशिष्ट्यमिति ग्रन्थासङ्गतिरिति वाच्यं तादात्म्येन गोत्वविशिष्टस्य कालिकेन साध्यतास्थलाभिप्रायेण च अष्टद्रव्यातिरिक्तदलस्य व्यावृत्तिर्बोध्या । न च वाच्यं कालत्वादित्यादौ वाच्यत्वत्वस्य स्वरूपसम्बन्धातिरिक्तसम्बन्धेन वैशिष्ट्याप्रसिद्ध्या ग्रन्थासङ्गतिरिति वाच्यं तत्र वाच्यत्वमीश्वरेच्छा वाच्यत्वत्व ईश्वरेच्छात्वमितिग्रन्थसङ्गतिरिति । स्वरूपत्वस्याननुगतत्वाभिप्रायेण तद्भिन्नतिरिक्तं वचः वह्न्यधिकरणतावान् धूमादित्यादावव्याप्त्यापत्तेः । वह्न्यधिकरणतात्वस्वरूपेण घटाधिकरणतात्ववैशिष्ट्याप्रसिद्धेरिति । वस्तुत एतद्स्वरसेनैव केचित्तु इत्युक्तत्वान्न दोष इति ।

ननु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्ति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमित्युक्ता गुणकर्मान्यत्वविशिष्टसत्त्वात्वविशिष्टादिकं च न मनागुणादिवृत्ति इति शिरोमणिः । इदञ्च विशिष्टस्यानतिरिक्तत्वेऽपि विशिष्टनिरूपिताधेयत्वस्यातिरिक्तत्वमभ्युपेत्य इति जगदीशः । अत्रेयमाशङ्का । ननु विशिष्टस्यानतिरिक्तत्वे गुणवृत्तित्वस्य सत्तायां सत्त्वे विशिष्टसत्त्वेऽपि सत्त्वात् कथं तदभावः प्रतियोगिव्यधिकरण इति चेदत्र केचित् । अवृत्तित्वपदेन वृत्तितानवच्छेदकत्वस्य प्रतियोगितावच्छेदके विवक्षितत्वात् विशिष्टसत्तात्वे गुणवृत्तितावच्छेदकत्वाभावान्न दोषः । विशिष्टनिरूपिताधेयत्वमित्यस्य विशिष्टसत्तात्वावच्छिन्नाधेयत्वं न गुणनिरूपितमित्यर्थकत्वात् सामान्यपदं पर्याप्तिपरमित्याहुः । वस्तुतो यद्भावीयप्रतियोगितावच्छेदकावच्छिन्नसम्बन्धितासामान्ये हेत्वधिकरणीभूतयत्किञ्चित्व्यक्तिनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धित्वाभावः स एव प्रतियोगिव्यधिकरणः आधेयभेदेनाधेयत्वस्य नानात्वे कपिसयोग्येतत्वादित्यादावव्याप्तिः अतः सामान्यपदमिति ध्येयम् ।

साध्यतावच्छेदकसम्बन्धसामान्ये यद्भावीयप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वादिति शिरोमणिः । ननु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वं यदि तद्व्यक्तिवृ-

त्तित्वं तदा धूमवान् वह्नेरित्यत्रातिव्याप्तिः। धूमप्रतियोगिकस्यापि संयोगस्य कालिकसम्बन्धेनायोगोलकवृत्तित्वादिति जगदीशः। अथात्र ननु संयोगकालिकान्यतरसम्बन्धेन घटस्य साध्यतायां महाकालत्वहेतावव्याप्तिः । प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धेः । साध्यतावच्छेदकसम्बन्धसत्त्वानियामकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यत्वनिरूपितत्वोभयाभावस्य वृत्तितायां निवेशात् तथाच महाकालनिरूपितवृत्तितायां निरुक्तोभयसत्त्वेन धर्तुमशक्यत्वादथवान्यतरत्वेन संसर्गताया अप्रामाणिकत्वस्याकाङ्क्षाग्रन्थे मथुरानाथेनोक्तत्वादिति । परे तु महाकाले कालिकेन संयोगादेराधिकरणत्वास्वीकर्तृमते ऽव्याप्तिर्न सम्भवति अतिव्याप्तिस्तु उभयमत एवेति तन्नोक्तं महाकाले कालिकसम्बन्धेन रूपाद्यधिकरणत्वे मानाभावस्तदानीमिदानीमित्यादिना कालोपाधिनामेव तथात्वावगाहनादिति पूर्वपक्षग्रन्थे जगदीशेनोक्तमिति ध्येयम् ।

तथा च साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिकसम्बन्धत्वहेत्वाधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसम्बन्धत्वोभयाभावस्य विवक्षितत्वादिति जगदीशः । अत्र पर्वतनिरूपिताधेयतायाः स्वरूपसम्बन्धावच्छिन्नाधिकरणतासम्बन्धेन साध्यतायां पर्वतवाच्यत्वान्यतरत्वरूपव्यभिचारिहेतावतिव्याप्तिः साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नाधिकरणतासम्बन्धे पर्वतानुयोगिकसम्बन्धत्वपर्वतनिरूपिताधेयताप्रतियोगिकत्वोभयसत्त्वेन साध्याभावस्य प्रतियोगिव्यधिकरणत्वाभावात् पर्वतनिष्ठाधिकरणतायां पर्वतनिरूपिताधेयताप्रतियोगिकत्वसत्त्वात्। आधेयताप्रतियोगिकाधिकरणतेति व्याप्तिपञ्चकग्रन्थे मथुरानाथेनोक्तत्वादिति निरुक्तप्रतियोगिकत्वं परित्यज्य प्रतियोगिकसम्बन्धत्वमनुसृतम् । इत्थञ्च पर्वतनिष्ठाधिकरणतायाः पर्वतनिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयतायाः संसर्गत्वविरहात् साध्याभावस्य धर्तुं शक्यत्वादिति । परे तु पर्वतानुयोगिकस्वरूपसम्बन्धेन वाच्यत्वाभाववान् पर्वतत्वादित्यादावतिव्याप्ति साध्यतावच्छेदकसम्बन्धे पर्वतानुयोगिकसम्बन्धत्वसाध्यतावच्छेदकावच्छिन्नाभावीयप्रतियोगिकत्वोभयसत्त्वेन साध्याभावस्य लक्षणाघटकत्वात्तन्निवेशे च पर्वतानुयोगिकस्वरूपे साध्यप्रतियोगिकसम्बन्धत्वविरहान्नातिव्याप्तिरित्याहुः

एवं संयोगेन वह्निसाध्यकसंयोगाभावत्वहेतावतिव्याप्तिः साध्यतावच्छेदकीभूतसंयोगसम्बन्धे वह्निप्रतियोगिकसम्बन्धत्वहेत्वधिकरणीभूतसंयोगाभावानुयोगिकत्वोभयसत्त्वेन साध्याभावस्य लक्षणाघटकत्वात् संयोगनिष्ठप्रतियोगितायां संयोगाभावत्वरूपानुयोगितानिरूपकत्वसत्त्वेन संयोगेऽपि तत्सत्त्वात् प्रतियोगितायाः प्रतियोगिकत्वस्वरूपत्वादतः प्रतियोगिकसम्बन्धानुधावनमिति । अथवा प्रतियोगितासम्बन्धेन घटाभावस्य साध्यतायां घटाभावघटान्यतरत्वस्य हेतुतायामतिव्याप्तिः साध्याभावस्य लक्षणाघटकत्वात् । एवमप्यवच्छिन्नप्रतियोगितासंम्बन्धेन घटत्वं घटे वर्तते तेन सम्बन्धेन घटत्वसाध्यकघटाभावत्वरूपव्यभिचारिहेतावतिव्याप्तिः साध्यतावच्छेदकप्रतियोगितासम्बन्धे घटत्वप्रतियोगिकत्वघटाभावानुयोगिकत्वोभयसत्त्वेन साध्याभावस्य धर्तुमशक्यत्वात् अस्मन्मते च प्रातयोगितायां तदनुयोगिकसम्बन्धत्वाविरहात् । अन्ये तु अभावप्रतियोगितासम्वन्धप्रतियोगितासाधारणैकप्रतियोगितात्वाविरहात् सम्बन्धप्रतियोगितालाभाय तदनुधावनमिति(१) ॥

---

(१) यद्वा स्वावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकानधिकरण हेत्वाधिकरणं तादृशप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वयद्धर्मावच्छिन्नावच्छेदकताकत्वैतदुभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वमिति जगदीश ।

अत्र यादृशप्रतियोगिताश्रयभिन्न हेत्वधिकरणमित्युक्तावेव सामञ्जस्ये प्रतियोगितावच्छेदकानधिकरणत्वप्रवेशो व्यर्थ इति चेन्न तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगित्व तत्सम्बन्धेन वर्तमान एव प्रतियोगिनि स्वीक्रियते इति मताश्रयणे प्रमेयवान् [illegible] स्वरूपसम्नन्धेन प्रमेयवत संयोगेनाभावप्रतियोगित्वं संयोगिप्रमेये स्वीकरणीयमिति तदभावप्रतियोगिभिन्नत्वस्य गुणादौ सत्त्वात्तत्प्रतियोगितायामुभयाभावविरहादव्याप्तेरिति ।

अथ तादृशप्रतियोगितावच्छेदकतासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाव इत्येवोच्यताम् अवच्छेदकताद्वयप्रवेशे गौरवमिति चेन्न। सामान्यपदस्य व्यापकतार्थकत्वेन तादृशप्रतियोगितावच्छेदकतावृत्त्यभावप्रतियोगित्वरूपव्यापकताया गुरुतया प्रतियोगितात्वव्यापकतानिवेशे लाघवादिति ।

अथ तादृशप्रतियोगितासामान्ये [illegible]वच्छेदकताकत्वाभाव इत्येवोच्यताम् किमुभयाभावनिवेशेनेति चेन्न । प्रमेयवह्निमान् धूमादित्यादौ गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानुपगमे [illegible]न्धावच्छिन्नावच्छेदकताकत्वस्याप्रसिद्ध्याऽव्याप्ते । उभयाभावप्रवेशे तु विषयितया प्रमेयवह्निमदभेदाभावीयप्रतियोगितायाः प्रमेयवह्नित्वावच्छिन्नावच्छेदकताकत्वस्य संयोगेन घटवदभावीयप्रतियोगिताया

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सिद्धान्त-
लक्षणजागदीशीकोडपत्त्रम् ॥

संयोगसम्बन्धावच्छिन्नावच्छेदकताकत्वस्य प्रसिद्धत्वात् ।

एतेन तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नयत्सम्बन्धावच्छिन्नावच्छेदकताकत्वाभाव-इत्येकाभावप्रवेशेनैवोपपत्तावुभयाभावप्रवेशो व्यर्थ इत्यपास्त प्रमेयवह्निमान् धूमादित्यादौ तादृशस्या-प्रसिद्ध्याव्याप्तेरिति विभावनीयम् ॥



## अथावच्छेदकत्वनिरुक्तिजागदीश्याः
## कालीशङ्करीक्रोडपत्रम् ।

नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः सम्भवति लघौ धर्मे गुरौ तदभावादिति शिरोमणिः । साधनसमानाधिकरणाभावप्रतियोगित्वीयस्वरूपसम्बन्धरूपावच्छेदकत्वमेतल्लक्षणघटकत्वाभाववत् व्यभिचारिवृत्तित्वात् व्यभिचारिवृत्तित्वन्तु सम्पादकतासम्बन्धेन हेतुरिति केचित् । तादृशस्वरूपसम्बन्धरूपावच्छेदकत्वाभावघटितसामानाधिकरण्यं नानुमितिजनकताया विषयविधयावच्छेदकं व्यभिचारिहेतुवृत्तित्वादिति भट्टाचार्याभिमतः समुदितार्थः । जगदीशस्यापि तत्रैव तात्पर्यमित्यवधेयम् ॥ १ ॥

विशिष्टसत्तात्वसमनियतसत्तात्वस्य लघुनोपि न विशिष्टाभावप्रतियोगितावच्छेदकत्वं गुणादावपि सत्ता नास्तीति प्रतीतिप्रसङ्गादिति जगदीशः । विशिष्टसत्ताभाववत्ताया विशिष्टसत्तात्वावच्छिन्नाधिकरणतया समं विरोधित्वमित्यभिप्रायेणेदमुक्तमन्यथा सत्तात्वावच्छिन्नप्रतियोगिताकाभाववत्तायाः सत्तात्वावच्छिन्नाधिकरणतया समं विरोधित्व उक्तविशिष्टाभावव्यक्तेरपि सत्तात्वावच्छिन्नाधिकरणतासत्त्वेन गुणे सत्ता नास्तीति प्रतीत्यापत्तिदानस्यासङ्गत्यापत्तेरिति ॥ २ ॥

पृथिवीसमवेतत्वासमनियतस्यापि च समवेतत्वस्य पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वमनतिप्रसङ्गादिति जगदीश । पृथिवीसमवेतत्वोपलक्षिताभावप्रतियोगितावच्छेदकं समवेतत्वं न तु विशिष्टाभावस्येति तथा सति जलादावपि समवेतत्वविशिष्टाभावावगाहिप्रत्ययापत्तेरिति । अथात्र पृथिवीनिरूपितत्वस्य समवेतत्वांशे उपलक्षणतयावच्छेदकत्वाभावात् कुतो लाघवमिति जगदीशमतेऽवच्छेदककोट्यन्तर्गतोपलक्षणस्यावच्छेदकत्वाभावादित्यस्य सिद्धान्तलक्षणे व्यक्तत्वादिति चेन्न । आधेयतासम्बन्धेन पृथिव्या समवेतांश एवोपलक्षणत्वादित्यभिप्रायः ॥ ३ ॥

अथ कम्बुग्रीवादिमत्त्वात् प्रमेयत्वादित्यादौ हेतुमन्निष्ठाभावप्र-

तियोगितावच्छेदकघटत्वादिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वेनाति-व्याप्तिरिति जगदीशः। ननु कम्बुग्रीवानाशक्षणे कम्बुग्रीवादिमान्नास्तीति प्रतीत्या तत्र च घटो नास्तीत्यप्रत्ययेन कथं कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकं घटत्वमिति चेन्न कम्बुग्रीवादिमत्त्वोपलक्षिताभावप्रतियोगितावच्छेदकत्वस्य घटत्वे सत्त्वादिति। न च तथाप्यतिप्रसङ्गभयेन कम्बुग्रीवादिविशिष्टाभावप्रतियोगितावच्छेदकत्वस्य घटत्वादावस्वीकारेण तादृशाभावप्रतियोगितावच्छेदकत्वमादायैवातिव्याप्तिवारणसम्भवान्नेदं युक्तमिति वाच्यम्। उपलक्षितस्थले उपलक्षिताभावस्य विशिष्टसाध्यतावच्छेदकस्थले विशिष्टाभावस्य घटकत्वादिति। अन्यथा गुणकर्मान्यत्वोपलक्षितसत्तासाध्यकजातिमत्त्वादिहेतावव्याप्तिः गुणकर्मान्यत्वविशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् जन्यतासम्बन्धेन कम्बुग्रीवादिविशिष्टसाध्यताभिप्रायेणेदं तथा च जन्यतासम्बन्धेन विभिन्नकालीनवस्तुन आधाराधेयभावाभ्युपगमात्तादृशसम्बन्धेन कम्बुग्रीवादिविशिष्टाभावस्य कम्बुग्रीवानाशक्षणावच्छेदेन भूतलादावप्यसत्त्वाद्यथाश्रुतमेव सम्यगिति कश्चित्॥ ४॥

न च कम्बुग्रीवादिमत्त्वं कम्बुग्रीवाव्यक्तिरेव सा च प्रत्येकं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदिकैवेति कुतोऽतिव्याप्तिरिति वाच्यम्। परम्परया संस्थानगतकम्बुग्रीवात्वस्यैव साध्यतावच्छेदकत्वादिति जगदीशः। अथात्र लक्षणे साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्यावच्छेदकतायां निवेशनेन तत्तत्कम्बुग्रीवादिविशिष्टाभावस्य लक्षणाघटकत्वेपि तत्त्वोपलक्षितकम्बुग्रीवादिमदभावमादायातिव्याप्तिवारणं सम्भवति। न च तत्त्वोपलक्षितकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकं घटनिष्ठं तद्व्यक्तित्वमेव लाघवादिति वाच्यम्। जगदीशमते तत्तत्कम्बुग्रीवादिमत्त्वस्यैव स्वरूपतोऽवच्छेदकत्वादिति। न च कम्बुग्रीवादिमत्त्वस्यावयवद्वयसंयोगरूपत्वे स्वाश्रयसमवेतत्वसम्बन्धेन कम्बुग्रीवादिमत्त्वस्य प्रतियोगितावच्छेदकत्वापेक्षया साक्षात्सम्बन्धेन तद्व्यक्तित्वस्यैवावच्छेदकत्वं युक्तमिति वाच्यम्। तद्व्यक्तित्वस्य तद्घटतादात्म्यविशिष्टसमवायेन घटत्वाद्यात्मकतया तादृशसम्बन्धेन घटादिनिष्ठतत्तद्व्यक्तित्वस्यावच्छेदकत्वस्वीकारेपि लाघवानवकाशादिति॥ ५॥

घ्राणग्राह्यगुणत्वं घ्राणग्राह्यत्वे सति गुणत्वाव्यापकीभूतजातिमत्त्वं तेन गन्धत्वस्य लघोः सामनैयत्ये तात्पर्यमिति कश्चिदिति जगदीशः । अत्र घ्राणग्राह्यत्वं गुणत्वाव्यापकजातौ विशेषणं बोध्यम् । अत्र घ्राणग्राह्यगुणत्वाव्यापकजातिमत्त्वं तादृशजात्यधिकरणत्वम् । तच्च तादृशजातेर्भेदेऽपि एकमेव साध्यतावच्छेदकं तस्य नानात्वे तु सर्वस्यैव साध्यतावच्छेदकस्य साधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वादिति । परे तु विशिष्टसाध्यतावच्छेदकस्थले साध्यतावच्छेदकतावच्छेदकं साधनवन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदकं तदवच्छिन्नविशिष्टसामानाधिकरण्यं व्याप्तिरित्यभिप्रायेणेदं तथा च साध्यतावच्छेदकतावच्छेदकीभूतस्य घ्राणग्राह्यत्वविशिष्टगुणत्वाव्यापकजातित्वस्य साधनवन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदकत्वेनातिव्याप्तिरित्याहुः ॥ ६ ॥

तथाविधाभावीयप्रतियोगितासामान्यशून्यत्वमप्रसिद्धं सर्वस्यैव वस्तुनस्तादृशयावत्त्वावच्छिन्नाभावप्रतियोगितासत्त्वादत उक्तं यत्किञ्चिदिति।समनियताभावयोरैक्यानुपगमाच्च घटादिसामान्याभावस्यैव घटादिनिरूपितसंयोगसम्बन्धेन प्रमेयसामान्याभावतया पुनर्नाप्रसिद्धिरिति जगदीशः । ननु कथमिदं युक्तं समनियताभावयोरैक्यानुपगमादिति समवायेन वन्ह्यभावमादायाव्याप्तिवारणार्थं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां निवेश्यं तथा सति साध्यतावच्छेदकेन शुद्धसंयोगेनावच्छिन्नं यद्घटनिष्ठप्रतियोगित्वं तत्प्रतियोगितासामान्यशून्यत्वस्य प्रसिद्धत्वात् । घटादिनिरूपितसंयोगसम्बन्धावच्छिन्नं यत् प्रतियोगित्वं तस्य पुनः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविरहात् । अत्र केचित् यत्र संयोगेन द्रव्यस्य साध्यता प्रमेयत्वादिकञ्च हेतुस्तत्रातिव्याप्तिः संयोगेन द्रव्याभावस्य संयोगेन प्रमेयसामान्याभावस्य चैक्यात् साध्यतावच्छेदकसंयोगसम्बन्धेनावच्छिन्नं यत् प्रमेयनिष्ठं प्रतियोगित्वं तत्सामान्यशून्यत्वाप्रसिद्ध्या ईदृशाभावस्य लक्षणाघटकत्वेन साध्यतावच्छेदकसंयोगसम्बन्धेन घटाभावस्यैव सौलभ्यात् तत्प्रतियोगितासामान्यशून्यावृत्तिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वादिति तस्मात् प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपहाय तत्सम्बन्धावच्छिन्न-

प्रतियोगिताकत्वमभावे विवक्षणीयम् तथा च द्रव्यवान् प्रमेयत्वादित्यादावप्रसिद्धिनिबन्धनैव नातिव्याप्तिः। साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकस्य घटाद्यभावस्यापि घटादिनिरूपितसंयोगेन प्रमेयसामान्याभावतया तादृशप्रतियोगितासामान्यशून्यत्वाप्रसिद्ध्यसम्भववारणायोक्तं तदित्याहुः । तन्मन्दम् । समवायसम्बन्धावच्छिन्नप्रतियोगितासामान्यशून्यत्वाप्रसिद्ध्याऽभावान्तरप्रतियोगितानतिरिक्तवृत्तिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वेन समवायेन प्रमेयसाध्यकवाच्यत्वादिहेतावतिव्याप्तिवारणाय यद्धर्म्मव्यापकतावच्छेदकं तादृशप्रतियोगित्वं तद्धर्म एव पारिभाषिकावच्छेदक इति वक्ष्यमाणविवक्षणेन तत्रातिव्याप्तिवारणसम्भवे तद्वारणाय तत्प्रयाशस्यानुचितत्वादिति । अन्ये तु तद्वह्नीयसंयोगेन वह्नेः साध्यतायां तद्धूमादिहेतावव्याप्तिस्तादृशसंयोगेन घटाभावस्य तादृशसम्बन्धेन यावत्त्वावच्छिन्नाभावस्य चैकत्वेन तदीययावत्त्वावच्छिन्नप्रतियोगित्वाभावस्याप्रसिद्धेरित्याहुः । नवीनाः साध्यतावच्छेकसम्बन्धावच्छिन्नप्रतियोगिताकत्वविशिष्टहेत्वधिकरणवृत्तित्वोपलक्षिततदभावप्रतियोगितासामान्यशून्यावृत्तित्वस्य विवक्षणीयत्वात् । जगदीशमतेऽवच्छेदककोट्यन्तर्गतोपलक्षणस्यावच्छेदकत्वास्वीकारेण तद्घटकीभूतप्रतियोगित्वाभावप्रतियोगितावच्छेदकत्वस्य उपलक्षणीभूतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वे विरहात् प्रतियोगितायान्तन्निवेशमपेक्ष्याभावांशे तन्निवेशस्य लघुत्वादिति प्राहुः । वस्तुतस्तु संयोगेन घटाभावस्य संयोगेन घटघटान्यप्रमेयोभयाभावतया साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासामान्यशून्यत्वाप्रसिद्धेरित्यत्रैव तात्पर्यमिति ॥ ७ ॥

यत्तु साध्यतावच्छेदकताघटकसम्बन्धेनैव तदभावो ग्राह्य इति तत्तुच्छम् । धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्रातिव्याप्त्यापत्तेः । लघुतया वह्निमन्निष्ठतादृशप्रमाविशेष्याभावप्रतियोगितावच्छेदकीभूतस्य धूमत्वादेः स्वरूपसम्बन्धेनाभाववति धूम एव तादृशप्रमाविशेष्यत्वस्य वृत्तेरिति जगदीशः । नन्वत्र विषयितया रूपत्वविशिष्टाभावमादाय रूपवान् पृथिवीत्वादित्यादावव्याप्तिसम्भवे तामपहाय कथमतिव्याप्तिर्जगदीशेन दत्तेति । न च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना या अवच्छेदकता तदाश्रयानतिरिक्तवृत्ति-

त्वं वाच्यम् वह्नित्वानिरूपितसमवायसम्बन्धेन वह्नित्वविशिष्टस्य साध्यतायां धूमादिहेतौ साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तेः। न च साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावाच्छिन्नत्वसाध्यतावच्छेदकानिष्ठत्वैतदुभयाभावविशिष्टावच्छेदकताश्रयानतिरिक्तवृत्तित्वं बोध्यम्। तथा च विषयितया रूपत्ववदभावप्रतियोगितावच्छेदकतायान्तादृशोभयोः सत्त्वात्तादृशाभावमादाय नाव्याप्तिरिति वाच्यम्। एवं सति विषयितया गुणत्वविशिष्टाभावमादायाव्याप्तेः गुणत्वनिष्ठावच्छेदकतायां तादृशोभयाभावसत्त्वादिति। मैवं साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकसमानाधिकरणानिष्ठत्वोभयाभावस्यावच्छेदकतायां विवक्षितत्वात्। साध्यतावच्छेदकसमानाधिकरणत्वं साध्यतावच्छेदकताघटकसम्बन्धेन बोध्यम्॥८॥

ननु तथापि धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तेः अयोगोलकावृत्त्यभावमादायैव बारणसम्भवात् मैवं तादात्म्येन धूमविशिष्टस्य संयोगसम्बन्धेन साध्यतायां वन्ह्यादिहेतावतिव्याप्त्यापत्तेर्लघुतया तादात्म्येन धूमविशिष्टाभावीयप्रतियोगितावच्छेदकस्य धूमत्वस्यायोगोलकावृत्तित्वस्यापि साध्यतावच्छेदकताघटकतादात्म्यसम्बन्धेनाभाववति धूम एव साध्यतावच्छेदकताघटकसम्बन्धेन धूमस्य वृत्तेः तत्रावृत्ति यद्धूमत्वादिकं तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वादित्यभिप्रायो जगदीशसम्मत इत्यवधेयम्॥ ९॥

प्रतियोगितावच्छेदकानातिरिक्तवृत्तित्वस्य विवक्षितत्वात् स्वसमानवृत्तिकञ्चावच्छेदकं ग्राह्यमिति शिरोमणिः। प्रतियोगितावच्छेदकञ्च विशिष्योपादेयमिति जगदीशः। प्रतियोगितावच्छेदकं यद्यत्तत्तदभाववदवृत्तिभिन्नत्वं साध्यतावच्छेदके विवक्षितमिति समुदितार्थः। नन्वेवमपि महानसीयवन्ह्यभावप्रतियोगितावच्छेदकं यन्महानसीयवह्नित्वं तदन्तःपातिवह्नित्वाभाववदवृत्तित्वस्य वह्नित्वे सत्त्वेन वह्निमान् धूमादित्यादावव्याप्तिः। न चैवं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वेन प्रतियोगिता विशेषणीया इति वाच्यम्। गुरुधर्मसाध्यतावच्छेदकस्थले उभयावच्छिन्नत्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः। मैवम् स्वेतरानवच्छिन्नत्वेन प्रतियोगिताया विशेषणीयत्वादिति

तथा च महानसीयवन्ह्यभावीयप्रतियोगितायाः स्वेतरावच्छिन्नत्वात् स्वपदं प्रतियोगितावच्छेदकपरम् । अत एव वह्निघटोभयादिकं परित्यज्य वह्निघटवृत्तिद्वित्वतार्णातार्णदहनवृत्तिद्वित्वावच्छिन्नाभावमादायाव्याप्तिरिति यदुक्तं तदपि सङ्गच्छते । न चैवं वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिस्तादृशोभयाभावप्रतियोगितायां स्वेतरावच्छिन्नत्वादिति वाच्यम् व्यभिचारिस्थलान्यत्वविशिष्टाभावमादाय सर्वत्र व्यभिचारिण्यतिव्याप्तिवारणसम्भवात् । न च तादृशप्रतियोगितावच्छेदकस्य वह्निधूमोभयत्वसमानवृत्तिकत्वाभावेन तादृशोभयत्वस्य पारिभाषिकावच्छेदकत्वाभावेनातिव्याप्तितादवस्थ्यादिति वाच्यम् । स्वसमानवृत्तिकत्वपदेन स्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वस्य विवक्षितत्वादिति । तद्भाववद्वृत्तितायां च तादृशप्रतियोगितावच्छेदकाभावव्याप्यधर्मावच्छिन्ननिरूपकतानिरूपितत्वं वाच्यम् तेन वह्निधूमोभयत्वस्यायोगोलकीयवह्निवृत्तित्वेपि न क्षतिः ॥ १० ॥

अथ प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव पारिभाषिकावच्छेदकत्वमिति कल्पे समवायेन तार्णातार्णोभयत्वविशिष्टस्य संयोगसम्बन्धेन साध्यतायां धूमादिहेतावव्याप्तिः पर्याप्तिसम्बन्धेन तादृशोभयत्वविशिष्टाभावप्रतियोगितावच्छेदकतादृशोभयत्वस्य साध्यतावच्छेदकसमानवृत्तिकत्वेन तदभाववदवृत्तित्वस्य साध्यतावच्छेदके सत्त्वेन साध्यतावच्छेदकस्य पारिभाषिकावच्छेदकत्वादिति । अत्र केचित् पर्याप्तिसम्बन्धेन साध्यतावच्छेदकतास्थल एव तार्णातार्णवृत्तिद्वित्वावच्छिन्नाभावमादाय दोषमभिदधानस्य दीधितिकारस्य साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकतानिवेशे तात्पर्यं तथा च साध्यतावच्छेदकताघटकसम्बन्धेऽवच्छेदकत्वाभावेन पर्याप्तिसम्बन्धेनोभयत्वविशिष्टाभावमादाय न दोषः । ननु तादात्म्यसम्बन्धेन धूमविशिष्टस्य संयोगेन साध्यतायां वन्ह्यादावतिव्याप्तिरिति तत्र हेतुसमानाधिकरणधूमविशिष्टाभावस्य प्रतियोगितावच्छेदकं लाघवाद्धूमत्वमेव इति तादृशाभावस्य लक्षणाघटकत्वेनान्यविधाभावस्य प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वाभिन्नत्वस्य साध्यतावच्छेदके सत्त्वादिति । न च तादृशाभावाप्रसिद्ध्या नातिव्याप्तिरिति वाच्यम् । तथा सति तादृशसाध्यकसद्धेतावव्या-

व्याप्तेः । यदि च तादात्म्येन तद्व्यक्तिविशिष्टाभावप्रतियोगितावच्छेदकत्वं तद्व्यक्तावेव प्रसिद्धं तद्व्यक्तित्वस्य तद्व्यक्तितादात्म्यविशिष्टसमवायस्वरूपतया तस्यावच्छेदकत्वकल्पने लाघवानवकाशादिति विभाव्यते तदा पूर्वोक्तसाध्यकव्यभिचारिण्यतिव्याप्तिरिति चेन्न साध्यतावच्छेदकताघटकसंसर्गातिरिक्तसाध्यतावच्छेदकप्रतियोगिकसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वस्य हेतुमन्निष्ठाभावप्रतियोगितायां निवेशान्न पूर्वोक्तस्थलेऽव्याप्तिरिति। अन्यत्सर्वं स्वयमूहनीयम्। परे तु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोगिताश्रयाधिकरणत्वाभाववद्वृत्त्यधिकरणवृत्त्यभावीयं येन केनापि सम्बन्धेनावच्छिन्नं प्रतियोगित्वमिति मते तदभावस्य प्रतियोगिव्यधिकरणत्वाभावान्न लक्षणघटकता इति ध्येयम्। एवरीत्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन यद्धर्मव्यापकमित्यादिकमत्यपि कल्पः परिष्कार्य इति ॥ १० ॥

ननु प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमिति' लक्षणे द्रव्यत्वपृथिवीत्वोभयवान् द्रव्यत्वादित्यादावतिव्याप्तिः। तथाहि द्रव्यत्वसमानाधिकरणतादृशोभयाभावीयप्रतियोगितावच्छेदकं पृथिवीतरासमवेतत्वं न तु तादृशोभयत्वं गौरवात् तस्य च साध्यतावच्छेदकसमानवृत्तिकत्वाभावेन पारिभाषिकावच्छेदकाभिन्नत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न प्रतियोगित्वन्यूनवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वाभावात्। न चैतदप्रामाणिकं सिद्धान्तलक्षणे यो यदीयपङ्क्तिव्याख्याने भट्टाचार्येण स्वयमेव लिखितत्वादिति। तथा च तादृशाभावीयप्रतियोगितावच्छेदकं साध्यतावच्छेदकमेव तस्य समानवृत्तिकत्वं विद्यत एव साध्यतावच्छेदकस्येति नातिव्याप्तिरिति भावः ॥ ११ ॥

ननु प्रमेयस्य संयोगेन साध्यतायां भावत्वादिहेतावतिव्याप्तिवारणाय तादृशप्रतियोगितावच्छेदकं यदन्यूनवृत्ति तत्त्वमित्यर्थः कृतो जगदीशेन। तन्मते यत्राभाववतः संयोगेन साध्यता वाच्यत्वादिहेतुस्तत्रातिव्याप्तिस्तथाहि संयोगेन तादृशसाध्याभावप्रतियोगितावच्छेदकं द्रव्यत्वमेव लाघवात्। तथा च तादृशाभावप्रतियोगितावच्छेदकद्रव्यत्वस्य साध्यतावच्छेदकीभूताभावव्यापकत्वाभावादिति

पारिभाषिकावच्छेदकीभूतद्रव्यत्वप्रकारकप्रमाविशेष्यत्वाभिन्नत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न भावाभावसाधारणाभावत्वं यदखण्डोपाधि तस्य हेतुमन्निष्ठताद्दशसाध्याभावप्रतियोगितावच्छेदकत्वात्तस्य च साध्यतावच्छेदकीभूताभावव्यापकत्वात् । एवं साध्यतावच्छेदकाभावव्यापकीभूतप्रमेयत्वस्य ताद्दशाभावप्रतियोगितावच्छेदकत्वं स्वयमेव स्वीकृतमतो नातिव्याप्तिरिति ॥ १२ ॥

व्यासज्यवृत्तित्वतदन्यत्वान्यतररूपेण समानवृत्तिकत्वोक्तौ वह्नित्ववारणसम्भवे स्वपर्य्याप्तीत्यादिपर्यन्तानुधावनस्य प्रयोजनमाह त्रित्वादिकमिति जगदीशः। ननु व्यासज्यवृत्तित्वमेकत्वानवच्छिन्नपर्याप्तिकत्वं तथा च वह्निधूमोभयवान् धूमादित्यादौ वह्निधूमघटवृत्तित्रित्वावच्छिन्नाभावमादाय नाव्याप्तिस्ताद्दशत्रित्वनिष्ठं यदेकत्वानवच्छिन्नपर्याप्तिकत्वं तदन्यत्वस्य च ताद्दशोभयत्वेऽसत्त्वेन तत् समानवृत्तिकत्वविरहादितिचेन्न व्यासज्यवृत्तित्वमत्र एकत्वावच्छिन्नपर्याप्तिकान्यत्वमवश्यं वक्तव्यम् अन्यथा वह्निधूमोभयाभावप्रतियोगितावच्छेदकवान् वह्नेरित्यत्रातिव्याप्त्यापत्तेः । ताद्दशप्रतियोगितावच्छेदकत्वापेक्षया लाघवात्ताद्दशप्रतियोगितावच्छेदकत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकं धूमत्ववह्नित्वोभयत्वं ताद्दशावच्छेदकत्वस्य व्यासज्यवृत्तितया तदभावस्य वह्नित्वधूमत्वोभयत्वावच्छिन्नाभावसामनैयत्येनानतिप्रसक्तत्वात् । तथा च एकत्वावच्छिन्नपर्याप्तिकान्यत्वरूपव्यासज्यवृत्तित्वस्य वह्निघटधूमैतत्त्रित्व वह्निधूमोभयत्वोभयसाधारणमेकमेवेतिउक्ताव्याप्तिः सुद्दढैवेति ध्येयम् ॥

यद्वा महानसीयवन्ह्यभावप्रतियोगितावच्छेदकवान् वह्नेरित्यत्रातिव्याप्तिः साध्याभावीयप्रतियोगितावच्छेदकत्वस्य ताद्दशावच्छेदकत्वापेक्षया लाघवाद् वह्नित्वमहानसीयत्वोभयत्वे कल्पनात् तद्वारणाय एकत्वावच्छिन्नपर्याप्तिकान्यत्वं वाच्यम् । वस्तुतस्तु वह्निधूमान्यतरानुयोगिकसमवायेन वह्निधूमघटवृत्तित्रित्वविशिष्टस्य साध्यतायां व्यभिचारिण्यतिव्याप्तिस्ताद्दशत्रित्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं वह्निधूमोभयत्वे लाघवात् कल्पनीयं तस्य च प्रागुक्तत्रित्वसमानवृत्तिकत्वविरहादित्यभिप्रायेणैव पूर्वकल्पं परित्यज्य एतत्कल्पानुसरणं तथा चात्र एकत्वावच्छिन्नपर्याप्तिकान्यत्वं व्यासज्यवृत्तित्वं वाच्यम् एतदतिव्याप्तिवारणायेति ध्येयम् ॥ १३ ॥

इदं तु चिन्त्यते। नञ्द्वयप्रवेशमपेक्ष्य लाघवेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यावत्तत्प्रत्येकातिरिक्तवृत्तित्वं साध्यतावच्छेदकविशेषणमिति जगदीशः। नन्वत्र वह्निमान् धूमादित्यादावव्याप्तिर्हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यत्तार्णतार्णोभयत्वं प्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन तदभाववति घटादौ साध्यतावच्छेदकताघटकसमवायेन वह्नित्वस्यावृत्तेः। न च स्वसमानवृत्तिकत्वेनावच्छेदकं विशेषणीयमिति। स्वपदं साध्यतावच्छेदकपरं तार्णतार्णोभयत्वस्य वह्नित्वसमानवृत्तिकत्वाभावादेव नाव्याप्तिरिति वाच्यम् तथाप्येतद्रूपवान् एतद्रसादित्यादौ स्वसमानवृत्तिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाप्रसिद्ध्या अव्याप्तेः। न च तत्र पूर्वक्षणवृत्तित्वविशिष्ट एतद्रूपत्वमेव तादृशावच्छेदकत्वेन प्रसिद्धमिति वाच्यं तदवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याभावादिति चेन्न नञ्द्वयप्रवेशकल्पेपि स्वावच्छिन्नाधिकरणत्वसम्बन्धेन सत्ताद्रव्यत्वोभयत्वविशिष्टस्य समवायेन साध्यतायां पृथिवीत्वादिहेतावतिव्याप्तिः तत्र साध्याभावप्रतियोगितावच्छेदकं लाघवात् द्रव्यत्वमेव तस्य च साध्यतावच्छेदकपर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नापर्याप्तिकत्वात् अन्यस्यापि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकपर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकत्वाभावादतस्तद्वारणाय स्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं विशेषणीयं तथा चैतत्कल्पेपि तन्निवेशादेव वह्निमान् धूमादित्यादौ तादृशाद्वित्वावच्छिन्नाभावमादाय नाव्याप्तिरिति ध्येयम्। यद्वा तदवच्छेदकातिरिक्तवृत्तित्वपदेन तदवच्छिन्नाधिकरणताशून्यवृत्तिस्वावच्छिन्नाधिकरणताकत्वस्य विवक्षितत्वान्न दोष इति। केचित्तु स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्वसामानाधिकरण्योभयाभाववत्त्वं तादृशप्रतियोगितावच्छेदके विवक्षितमतो न कुत्रापि दोष इति। यत्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यावत् स्वपर्याप्त्यवच्छेदकत्वसम्बन्धेन तत्प्रत्येकाभाववति स्वपर्याप्त्यवच्छेदकत्वसम्बन्धेन वृत्तित्वस्य विवक्षितत्वादिति। तथा च वह्निमान् धूमादित्यादौ नाव्याप्तिरिति तत्तुच्छम्। समवायेन तार्णतार्णदहनवृत्तिद्वित्वविशिष्टस्य संयोगेन साध्यतायां धूमादिहेतावव्याप्तिश्च पर्याप्तिसम्बन्धेन द्वि-

त्वविशिष्टाभावीयप्रतियोगितावच्छेदकद्वित्वस्य स्वपर्याप्त्यवच्छेदकत्वसम्बन्धावच्छिन्नाभाववति साध्यतावच्छेदकस्यावृत्तेः । न च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वं निवेशनीयं विशेषरूपेण संसर्गतानभ्युपगमादेव वह्नित्वनिरूपितसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमादिहेतौ नाव्याप्तिरिति वाच्यं तादात्म्येन वह्निविशिष्टस्य साध्यतायां धूमादिहेतावव्याप्तिः । तादात्म्येन घटादिविशिष्टाभावीयप्रतियोगितायाः घटत्वादिना अवच्छेद्यतया तादात्म्यसम्बन्धावच्छिन्नावच्छेदकत्वाभावस्याप्रसिद्धत्वात् । न च साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकसमानाधिकरणनिष्ठत्वोभयाभावनिवेशान्नैष दोष इति वाच्यम् । सामानाधिकरण्यं तु साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकताघटकसम्बन्धेन वा नाद्यः । रूपवान् पृथिवीत्वादित्यादौ विषयितया वाच्यत्वविशिष्टाभावमादायाव्याप्तेः । न द्वितीयः तादात्म्येन धूमविशिष्टस्य साध्यतायां व्यभिचारिण्यतिव्याप्तेः । वस्तुतस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततार्णातार्णदहनवृत्तिद्वित्वस्याभाववति प्रत्येकवह्नौ वह्नित्वस्य वृत्तेर्वह्निमान् धूमादित्यादावव्याप्तिविरहेण स्वसमानवृत्तिकत्वं नोपादेयमिति । न चैवं वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिरिति वाच्यम् । साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूतधूमत्वस्याभाववति वह्नौ साध्यतावच्छेदकीभूतद्वित्वस्यावृत्त्यातिव्याप्तिविरहादिति ॥ १४ ॥

प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वकल्पेऽपि तार्णातार्णदहनवृत्तिद्वित्वावच्छिन्नाभावमादायाव्याप्तिरतस्तद्वारणाय स्वसमानवृत्तिकत्वं निवेशितं जगदीशेन । अत्रेयमाशङ्का पूर्वकल्पे एव स्वपर्याप्त्यनवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकधर्मावच्छिन्नयत्किञ्चिदभावीयप्रतियोगितात्वावच्छिन्नाभाववद्वृत्तित्वनिवेशेनैव तद्दोषवारणसम्भवे कृतमेतत्कल्पानुसरणेनेतिचेन्न धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय यत्किञ्चिदभावीयप्रतियोगितात्वावच्छिन्नप्रतियोगिताकाभावो निवेशितः । तत्र स्वपर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकधर्मावच्छिन्नत्वस्योपलक्षणविधयापि निवेशे प्रतियोग्यंशे उपलक्षणस्य उपलक्षणविधया अवच्छेदकत्व-

स्वीकृततया गौरवात्। परकल्पे च साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्यत् तत्तदभाववद्वृत्तित्वमित्यत्र प्रतियोगितावच्छेदकाभावप्रतियोगितावच्छेदककोटौ साधनसमानाधिकरणाभावादेरनिवेशादेव लाघवमिति प्राहुः। कश्चित्तु प्रतियोगितायाः प्रतियोगिस्वरूपत्वे वह्निसामान्याभावीयप्रतियोगित्वमेव तार्णातार्णोभयत्वावच्छिन्नं तथा च वह्नित्वपर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकं यद्वह्नित्वं तदवच्छिन्ना या तादृशाभावीयप्रतियोगिता तत्सामान्यशून्यावृत्तित्वस्य वह्नित्वे सत्त्वेन वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यमतः परकल्पानुसरणमिति। तन्मन्दम्। प्रतियोगित्वं प्रतियोग्यभावोभयस्वरूपं प्रतियोगिमात्रस्वरूपत्वे तु सामान्याभावीयविशेषाभावीयप्रतियोगित्वयोरैक्यापत्तेरित्यादिग्रन्थे प्रतियोगितायाः प्रतियोगिस्वरूपत्वखण्डनादिति ध्येयम्॥ १५॥

तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वमिति शिरोमणिः। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वमिति समुदितार्थः। अत्र यद्धर्मवैशिष्ट्यं साध्यतावच्छेदकताघटकसम्बन्धेन बोध्यमित्युक्ते पुरुषनिष्ठसंयोगसम्बन्धेन दण्डविशिष्टस्य साध्यत्वे महाकालत्वादिहेतावव्याप्तिरिति जगदीशः। ननु संयोगेन दण्डविशिष्टस्य साध्यत्वेऽप्यव्याप्तिसङ्गतिः कथं पुरुषनिष्ठपर्यन्तानुसरणमिति चेन्न महानसीयवह्निवृत्तित्वविशिष्टजातिमत्त्वान् धूमादित्यत्रातिव्याप्तिवारणार्थं तदवच्छिन्नाभाववदसम्बद्धयद्रूपावच्छिन्नाधिकरणताविशिष्टसामान्यकत्वमिति लक्षणमीदृशं वक्तव्यं तथा च महानसीयवह्निवृत्तित्वविशिष्टजात्यवच्छिन्नाभाववति पर्वतादौ महानसीयवह्निवृत्तित्वविशिष्टजातेर्जात्यनतिरिक्ततया तद्धर्मविशिष्टस्य सम्बद्धत्वेपि न क्षतिरिति महानसीयवह्निवृत्तित्वविशिष्टजातित्वावच्छिन्नाधिकरणताविशिष्टमहानसीयवह्नेरसत्त्वात्। तथा च संयोगेन दण्डविशिष्टस्य साध्यतायां महाकालत्वादिहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतगगनत्वावच्छिन्नाभाववति संयोगेन गगनवृत्तित्वविशिष्टघटत्वावच्छिन्नाधिकरणताविशिष्टगगणस्यासत्त्वेन तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिरत उक्तं पुरुषनिष्ठे-

ति। तथा च पुरुषनिष्ठसंयोगेन गगनवृत्तित्वविशिष्टघटत्वावच्छिन्नाधिकरणताविशिष्टस्याप्रसिद्ध्या अव्याप्तिर्दृढैवेति ॥ १६ ॥

प्रतियोगितावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्याभिधाने धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तिर्हेतुमन्निष्ठधूमत्वप्रकारकप्रमाविशेष्याभावप्रतियोगितावच्छेदकं लाघवाद्धूमत्वं तदवच्छिन्नाभाववति प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्ववैशिष्ट्यस्याप्रसिद्ध्या तस्याः सुदृढत्वादिति जगदीशः। न च विषयित्वादिसम्बन्धेन वह्नित्वविशिष्टस्याभावमादाय वह्निमान् धूमादित्यादौ सर्वत्रासम्भवसम्भवे कथमतिव्याप्तिर्दत्ता जगदीशेनेति वाच्यं साध्यतावच्छेदकताघटकसम्बन्धानिरिक्तत्वसाध्यतावच्छेदकप्रतियोगिकत्वोभयाभाववत् प्रतियोगितावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्याभिधानादिति ध्येयम्। प्रतियोगितावच्छेदकताघटकयत्सम्बन्धेन यद्धर्मविशिष्टसामान्यमसम्बद्धं तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नविशेष्यताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नविशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदकं विवक्षणान्न दोष इत्यपि कश्चित् ॥ १७ ॥

ननु हेत्वधिकरणायोगोलकासंयुक्तत्वावच्छिन्नाभावप्रतियोगितावच्छेदकताघटकविशेषणताविशेषसम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वस्य वैशिष्ट्यस्य प्रसिद्धतया तादृशव्यभिचारिस्थलावृत्त्यभावमादाय एव नातिव्याप्तिस्तत् कथमुक्तं जगदीशेनेति चेन्न तादृशाभावप्रतियोगितावच्छेदकताघटको योऽभावीयस्वरूपसम्बन्धस्तेन सम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वस्य वैशिष्ट्यस्याप्रसिद्ध्या एतादृशाभावमादाय नातिव्याप्तिवारणसम्भव इति प्राचामाशयः। केचित्तु अयोगोलकावृत्त्यभावमादायात्रातिव्याप्तिवारणसम्भवेऽपि तादात्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां वन्ह्यादिहेतावतिव्याप्तिः। तत्र धूमापेक्षया लघुत्वेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धूमत्वं तदवच्छिन्नाभाववति धूमारम्भकपरमाणौ प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन धूमविशिष्टस्य परमाण्वन्तरस्य साध्यतावच्छेदकसंयोगसम्बन्धेन सम्बद्धतया धूमस्य पारिभाषिकावच्छेदकत्वविरहादिति। नन्वेवमपि साध्यत्वप्रतियोगित्वान्यतरावच्छेदकताघटकसम्बन्धने

यद्धर्मवैशिष्ट्याभिधानादुक्तदोषवारणसम्भवेपि तादात्म्येन धूमवतः संयोगेन साध्यतायां द्रव्यत्वादावतिव्याप्तिस्तत्र धूमापेक्षया लघुत्वेन प्रतियोगितावच्छेदकं यद्धूमत्वं तदवच्छिन्नाभाववति धूमारम्भकपरमाणौ प्रतियोगितावच्छेदकताघटकसमवायेन धूमविशिष्टस्य परमाण्वन्तरस्य साध्यतावच्छेदकसंयोगसम्बन्धेन सम्बद्धत्वादिति कथमुक्तं जगदीशेन अयोगोलकावृत्त्यभावप्रतियोगितावच्छेदकताघटकविशेषणताविशेषसम्बन्धेन धूमस्य वैशिष्ट्याप्रसिद्ध्या तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति तादात्म्येन धूमविशिष्टस्यासम्बद्धतया तादृशाभावमादायैव धूमस्य पारिभाषिकावच्छेदकत्वसिद्धेरिति चेन्न तादात्म्येन घटाभावविशिष्टस्य विशेषणताविशेषेण साध्यत्वे वाच्यत्वादिहेतावतिव्याप्तिः साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकताघटकविशेषणताविशेषेण घटाभावविशिष्टस्य साध्यताघटकसम्बन्धेन सम्बद्धतया पारिभाषिकावच्छेदकत्वाभावात्तस्येति ॥ १८ ॥

नन्वत्र कल्पे कालिकेन घटत्वविशिष्टस्य कालिकेन साध्यतायां महाकालत्वादिहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्गगनत्वं तदवच्छिन्नाभाववति महाकालादावन्यतरकालिकेन गगनत्वविशिष्टं यज्जन्यं तस्य साध्यतावच्छेदककालिकेन सम्बन्धत्वात् पारिभाषिकावच्छेदकाप्रसिद्धिनिबन्धनाव्याप्तिः स्यात् तत् कथं तत्परित्यज्यातिव्याप्तिरितिमैवम्। अत्र तादात्म्यसम्बन्धेन गगनविशिष्टाभावमादायैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्गगनं तदवच्छिन्नाभाववति अन्यतरसम्बन्धेन गगनविशिष्टगगनस्य कालिकसम्बन्धेनासम्बद्धतया पारिभाषिकावच्छेदकाप्रसिद्धिनिबन्धनाव्याप्तिवारणसम्भवात् ॥ १९ ॥

ननु तथापि विषयितया घटत्वविशिष्टज्ञानस्य कालिकेन साध्यत्वे महाकालत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्गगनत्वं तदवच्छिन्नाभाववति विषयितया गगनत्वविशिष्टज्ञानस्य कालिकेन सम्बद्धतया पारिभाषिकावच्छेदकाप्रसिद्धिनिबन्धनाव्याप्तिः स्यात् तत् कथं परित्यज्यत इति चेन्न साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धः प्रतियोगितावच्छेदकताघटकसम्बन्धः एतदन्यतरसम्बन्धेनैव यद्धर्मवैशिष्ट्यस्योक्तत्वादिति। तथा च हे-

तुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् गगनत्वं साध्यतावच्छेदक-प्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धेन तस्य वैशिष्ट्याप्रसिद्ध्या तादृशान्यतरसम्बन्धेन गगनत्वविशिष्टस्यासम्बद्धत्वेन गगनत्वस्यैव पारिभाषिकावच्छेदकत्वप्रसिद्धेरिति ध्येयम् ॥ २० ॥

यद्यत्सम्बन्धेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यताघटकसम्बन्धेनासम्बद्धं तत्तत्सम्बन्धेन तादृशधर्मावच्छिन्नविशेष्यताभिन्नं यत् साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नविशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वान्न कोपि दोष इति जगदीशः । अत्र तादृशविषयताभिन्नविषयतावच्छेदकत्वाविवक्षणेनैव तादृशदोषवारणसम्भवे विशेष्यताभिन्नपर्यन्तानुधावनं व्यर्थमिति चेन्न व्याप्यधर्मघटितस्य लक्षणत्वसम्भवे व्यापकधर्मघटितलक्षणस्य सम्प्रदायविरोधेनान्याय्यत्वादिति। न च तथापि तादृशसम्बन्धावच्छिन्नतत्तन्निष्ठावच्छेदकताभिन्नावच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैव तादृशदोषवारणसम्भवे विशेष्यतापर्यन्तानुधावनं व्यर्थमिति वाच्यम्। विषयितावच्छेदकतासाधारणावच्छेदकतात्वस्यैकस्यास्वीकारेण तत्तदवच्छेदकताभिन्नावच्छेदकत्वनिवेशे महागौरवादिति ॥ २१ ॥

केचित्तु तादात्म्यसाध्यताघटकान्यतरसम्बन्धेन यद्धर्मविशिष्टसम्बन्धिनिष्ठतादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो योऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वमितिपर्य्यवसितोर्थ इति जगदीशः । तथा च घटवान् महाकालत्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्गगनत्वं तस्य तादात्म्यसाध्यताघटकान्यतरसम्बन्धेन यद्गगनत्वविशिष्टस्य सम्बन्धि तन्निष्ठस्तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो घटाद्यभावस्तत्प्रतियोगितानवच्छेदकत्वादितिलक्षणसमन्वयः। अथात्र साध्यताघटकसम्बन्धेन यद्धर्मविशिष्टसम्बन्धित्वोक्तौ कालो घटवान् महाकालत्वादित्यादौ पारिभाषिकावच्छेदकाप्रसिद्ध्याऽव्याप्तिरित्यतोन्यतरत्वादिकमुक्तम्। न च तादात्म्येन यद्धर्मविशिष्टसम्बन्धिनिष्ठः तादात्म्यसाध्यताघटकान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो योऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वविवक्षणेनैव सामञ्जस्ये अन्यतरसम्बन्धानुसरणमनतिप्रयोजनकमितिवाच्यम्। सत्तावान् द्रव्यत्वादित्यादावव्या-

प्तेः साधनवन्निष्ठद्रव्यान्यत्वविशिष्टसत्ताभावप्रतियोगितावच्छेदकं यद्द्रव्यान्यत्वविशिष्टसत्तात्वं तस्य तादात्म्येन सत्तात्वविशिष्टसम्बन्धिनि प्रतियोगिव्यधिकरणो घटाभाव एव न तु तादृशविशिष्टसत्ताभावः तत्प्रतियोगितानवच्छेदकत्वेन सत्तात्वस्य पारिभाषिकावच्छेदकत्वादिति । यदि च तद्विवक्षणेपि तत्राव्याप्तिस्तदवस्थैवेति । साधनसमानाधिकरणघटान्यत्वविशिष्टाभावप्रतियोगितावच्छेदकघटान्यत्वस्य तादृशान्यतरसम्बन्धेन सत्तात्वविशिष्टसम्बन्धिनि घटे सत्त्वे वा तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो न घटान्यत्वविशिष्टाभावः । तादात्म्यसम्बन्धेन घटान्यत्वविशिष्टघटस्यैव सम्बन्धत्वात् तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्यान्यविधाभावस्य प्रतियोगितानवच्छेदकत्वादिति विभाव्यते तदा द्रव्यं गगनत्वादित्यादावव्याप्तिवारणाय तदिति । तदुपादाने गगनान्यत्वविशिष्टाभावप्रतियोगितावच्छेदकगगनान्यत्वस्य गगनस्य गगनान्यत्वविशिष्टत्वाभावेन तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य द्रव्यत्वविशिष्टसम्बन्धिनिष्ठगगनान्यत्वविशिष्टाभावस्य प्रतियोगितावच्छेदकत्वेन द्रव्यत्वत्वस्य पारिभाषिकावच्छेदकत्वाभावान्नाव्याप्तिरिति ॥

अथ तादात्म्यसाध्यताघटकान्यतरसम्बन्धेन यद्धर्मविशिष्टसम्बन्धिनिष्ठतादात्म्येन प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतत्कत्वविवक्षणेनैव सामञ्जस्ये प्रतियोगिव्यधिकरणत्वदले ऽन्यतरसम्बन्धनिवेशो व्यर्थ इति चेन्न धूमवान् वह्नेरित्यादावतिव्याप्तेः साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकधूमत्वस्य तादृशान्यतरसम्बन्धेन धूमत्वविशिष्टस्य सम्बन्धिनि पर्वतादौ वर्तमानस्य तादात्म्येन प्रतियोगिव्यधिकरणधूमाभावस्य प्रतियोगितावच्छेदकत्वेन पारिभाषिकावच्छेदकभिन्नत्वस्य धूमत्वादौ सत्त्वादिति । यदि च व्यभिचारिस्थलावृत्तित्वविशिष्टस्य पर्वतादेः पर्वतादौ तादात्म्येन सम्बन्धतया तादृशान्यतरसम्बन्धेन धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य व्यभिचारिस्थलावृत्तित्वे सत्त्वेन व्यभिचारिस्थलावृत्त्यभावमादायैव तत्र नातिव्याप्तिरिति विभाव्यते तदा रूपत्ववान् रूपघटान्यतरत्वादित्यादावतिव्याप्तिः रूपत्ववत्वविशिष्टसम्बन्धिनि रूपे रूपत्ववत्त्वविशिष्टस्य घटावृत्तित्ववि-

शिष्टस्य च तादात्म्येनासम्बन्धतया तादात्म्यसम्बन्धेन प्रतियोगिव्यधिकरणतन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य साधनसमानाधिकरणाभावप्रतियोगितावच्छेदके रूपत्वत्वे घटावृत्तित्वे च सत्त्वादिति। यद्यप्यत्रापि तद्रूपान्यत्वविशिष्टाभावमादाय नातिव्याप्तिरिति विभाव्यते तदा गगनत्वत्वविशिष्टस्य स्वरूपसम्बन्धेन गगनावृत्तेर्वा विशेषणतया साध्यत्वे गगनगगनत्वान्यतरत्वादिहेतावतिव्याप्तिवारणाय तदिति ध्येयम्। केचित्तु तादात्म्यमात्रेण यद्धर्मविशिष्टसम्बन्धित्वोक्तौ वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिस्तादात्म्येन उभयवैशिष्ट्याप्रसिद्ध्या यद्धर्मपदेन वह्निधूमोभयत्वस्य धर्तुमशक्यत्वात्। तादात्म्यमात्रेण प्रतियोगिवैयधिकरण्योक्तौ कालिकविषयितान्यतरसम्बन्धेन घटस्य साध्यतायां महाकालत्वादिहेतावव्याप्तिः पारिभाषिकावच्छेदकाप्रसिद्धेरित्याहु ॥

न च तादात्म्येन यद्धर्मविशिष्टसम्बन्धिनिष्ठतादात्म्येन प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतत्कत्वमिति विवक्षणेनैव सामञ्जस्ये उभयदिश्यपि साध्यताघटकसम्बन्धप्रवेशो व्यर्थ इति वाच्यम्। सत्तावान् गगनत्वादित्यादौ घटवृत्तित्वविशिष्टसत्ताभावमादायाव्याप्त्यापत्तेरिति ध्येयम् ॥ २१ ॥

धूमगगनाभावान्यतरस्य संयोगेन साध्यतायां वह्न्यादिहेतावतिव्याप्तिस्तादृशान्यतरत्वापेक्षया लघुत्वेन धूमत्वस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वादिति जगदीशः। नन्वत्र हेतुसमानाधिकरणान्यतरभेदप्रतियोगितावच्छेदकान्यतरत्वे तादृशान्यतरसम्बन्धेनान्यतरत्वविशिष्टसम्बन्धिनिष्ठस्यान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वेनान्यतरत्वस्य पारिभाषिकावच्छेदकत्वान्न तत्रातिव्याप्तिरिति। न चान्यतरत्वं भेदप्रतियोगितावच्छेदकमेव न भवति लघुतया धूमत्वस्यैव तथात्वादिति वाच्यम् गगनाभावेऽन्यतरभेदस्य प्रत्ययप्रसङ्गात्। न चान्यतरत्वावच्छिन्नप्रतियोगिकत्वायोगोलकानुयोगिकत्वएतदुभयत्वापेक्षया धूमत्वावच्छिन्नप्रतियोगिकत्वायोगोलकानुयोगिकत्वैतदुभयत्वस्य लघुत्वात्तादृशान्यतरत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वावच्छिन्नाभावाप्रसिद्ध्या अन्यतरत्वावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वेनातिव्याप्तिः सुदृढैवेति वाच्यम् गगनाभावप्रतियोगिकस्वरूपसम्बन्धस्य धूमत्वा-

वच्छिन्नप्रतियोगिकत्वघटितोभयाभाववतः अन्यतरत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वावच्छिन्नाभावासत्त्वात् । लघुनोपि धूमत्वाच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य अन्यतरत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वादिति चेन्न धूमत्वप्रकारकप्रमाविशेष्यत्वप्रमेयत्वैतदन्यतरविशिष्टस्य धूमप्रतियोगिकसंयोगेन साध्यतायां वह्न्यादिहेतावतिव्याप्तितात्पर्यात् तादृशान्यतरविशिष्टाभावीयप्रतियोगितावच्छेदकं लाघवात् धूमत्वमेव तादृशान्यतरविशिष्टस्य भेदाप्रसिद्ध्यानतिप्रसक्तत्वात् । न चैवं सति अन्यतरत्वस्याखण्डस्येतिग्रन्थविरोध इति वाच्यम् तेनान्यतरत्वस्याभावात्मकतयाभावस्य स्वरूपतोवच्छेदकत्वस्याविष्कृतत्वात् तथा च गगनाभावमादायैवात्र नातिव्याप्तिरिति भावः । केचित्तु साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगितावच्छेदकधर्मे ऽन्यतरसम्बन्धेन यद्धर्मविशिष्टसम्बन्धिनिष्ठान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वं वाच्यम् अन्यथा धूमवान् वह्नेरित्यादौ धर्मान्तरावच्छिन्नाभावप्रतियोगिकत्वघटितोभयत्वमादायातिव्याप्तिः। एवं सति लाघवात् साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया एव यादृशयादृशत्वेन लक्षणे निवेशनीयतया धूमगगनाभावान्यतरसाध्यकव्यभिचारिण्यातिव्याप्त्यभिधानमपि सङ्गच्छते अन्यतरभेदप्रतियोगिताया लक्षणाघटकत्वात् ॥

ननु तथाप्ययोगोलके संयोगेनावृत्तेः संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायैव नातिव्याप्तिः । तथाहि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकायोगोलकावृत्तित्वस्य तादात्म्यसाध्यताघटकान्यतरसम्बन्धेन यद्धर्मविशिष्टस्य सम्बन्धिनो ये धूमगगनाभावपर्वतादयः तन्निष्ठान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो नाऽयोगोलकावृत्त्यभावः अयोगोलकावृत्तिरूपतत्प्रतियोगिनो धूमगगनाभावपर्वतादिषु अन्यतरसम्बन्धेन सम्बन्धित्वात् किन्त्वयोगोलकसंयुक्तगगनाद्यभाव एव तादृशप्रतियोगिव्यधिकरणः तत्प्रतियोगितानवच्छेदकत्वात् । तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके सत्त्वान्नातिव्याप्तिरिति । मैवम् । वह्निमान् धूमादित्यादौ पर्वतान्यत्व-

विशिष्टाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकातिरिक्ताभावानवच्छिन्नत्वस्य प्रतियोगितायां निवेशनीयतया अयोगोलकावृत्त्यभावस्य लक्षणाघटकतया अभावान्तरस्य लक्षणघटकतयातिव्याप्तिसङ्गतिरिति । परे तु धूमप्रतियोगिकसम्बन्धेन तादृशान्यतरसाध्यकव्यभिचारिण्यतिव्याप्तिरित्यत्रैव तात्पर्यात् इति । केचित्तु समवेतगगनाभावान्यतरस्य समवायेन साध्यत्वे व्यभिचारिण्यतिप्रसङ्गात्। तत्र सामान्याद्यवृत्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन समवेतत्व एव कल्पनात् ॥ २२ ॥

तादात्म्यसाध्यताघटकान्यतरसम्बन्धेन यः स्वविशिष्टसम्बन्धीतन्निष्ठो यस्तदन्यतरसम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वमिति लक्षणे रूपवान् घटत्वादित्यादौ रूपत्वद्द्रव्यान्यतराभावमादायाव्याप्तिर्दत्ता जगदीशेन । तन्न सङ्गच्छते वह्निमान् धूमादित्यादिप्रसिद्धस्थले विशेषणतासंयोगसम्बन्धावच्छिन्नसम्बन्धित्वघटितसामानाधिकरण्यसम्बन्धेन तत्पर्वतान्यत्वविशिष्टाभावमादायाव्याप्तिसम्भवे तत्त्यागे सन्दर्भविरोधादिति चेन्न साधनसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकातिरिक्ताभावानवच्छिन्नत्वेन विशेषणीयत्वादिति ॥

न च तथापि सामानाधिकरण्यसम्बन्धेन गगनत्वविशिष्टद्रव्यत्वावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यमिति वाच्यम् । तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य विशेषणतासंयोगघटितसामानाधिकरण्यसम्बन्धेन गगनत्वविशिष्टद्रव्यत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकत्वस्य साधनवन्निष्ठाभावीयतादृशप्रतियोगितावच्छेदके सत्त्वेन वह्नित्वस्य पारिभाषिकावच्छेदकत्वाभावादिति प्राहुः । केचित्तु एकसम्बन्धावच्छिन्नवृत्तित्वविशिष्टस्य विषयित्वातिरिक्तसम्बन्धेनाधिकरणत्वं न स्वीक्रियते इति मतेनेदम् । न च यद्धर्मविशिष्टसम्बन्धिनि इत्यत्र तादात्म्यसम्बन्धेन सम्बन्ध्यप्रसिद्ध्या गुणान्यत्वविशिष्टसत्तात्वस्य तादात्म्येन सत्तात्वविशिष्टसम्बन्धिनि सत्तादौ वर्तमानस्य तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणगुणान्यत्वविशिष्टसत्ताभावस्य प्रतियोगितावच्छेदकत्वेन सत्तात्वस्य पारिभाषिकावच्छेदकत्वाभावेन साध्यताघटकसम्बन्धनिवेशो व्यर्थ इति वाच्यम् । गगनाभावत्ववान् त

द्यक्तित्वादित्यत्राव्याप्तेः साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य गगनाभाववत्त्वस्य तादात्म्यसम्बन्धेन साध्यतावच्छेदकीभूतगगनाभाववत्त्वावच्छिन्नसम्बन्धिनि गगनाभाववत्वे वर्तमानस्यान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वेन गगनाभाववत्त्वस्य पारिभाषिकावच्छेदकत्वात् । अन्यतरसम्बन्धेन सम्बन्धित्वोपादाने च तादृशान्यतरसम्बन्धेन गगनाभाववत्त्वविशिष्टसम्बन्धिनि गगनाभावे अन्यतरसम्बन्धेन प्रतियोगिव्यधिकरणगगनाभाववत्त्वावच्छिन्नाभावीयप्रतियोगितावच्छेदकत्वस्य साधनवन्निष्ठाभावीयतादृशप्रतियोगितावच्छेदके सत्त्वेन साध्यतावच्छेदके पारिभाषिकावच्छेदकत्वाभावान्नाव्याप्तिरिति । एवं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्त्यापत्तेः विशिष्टसत्तात्वविशिष्टस्य तादात्म्येन सम्बन्धित्वाप्रसिद्ध्या यद्धर्मपदेन विशिष्टसत्तात्वस्य धर्तुमशक्यत्वेन धर्मान्तरस्यैव धर्तव्यतया तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वादित्याहु । तन्न समीचीनं भाति सर्वत्रासम्भवापत्तेः घटादिवृत्तित्वविशिष्टद्रव्यत्वावच्छिन्नस्य तादृशान्यतरसम्बन्धेन सम्बन्धित्वाप्रसिद्ध्या तादृशान्यतरसम्बन्धेन वह्नित्वविशिष्टसम्बन्धिनि पर्वतादौ तादृशान्यतरसम्बन्धेन प्रतियोगिव्याधिकरणाभावान्तरप्रतियोगितानवच्छेदकत्वस्य साधनसमानाधिकरणाभावप्रतियोगितावच्छेदके घटादिवृत्तित्वविशिष्टद्रव्यत्वेसत्त्वादिति ॥ २३ ॥

रूपवान् घटत्वादित्यादौ रूपत्वद्रव्यान्यतराभावमादायाव्याप्तिं दत्त्वा केचित्त्वित्यादिकल्पं परित्यक्तं जगदीशेन ॥ ० ॥

न च तादृशान्यतरीययत्सम्बन्धेन यः स्वविशिष्टसम्बन्धी तन्निष्ठतादृशान्यतरीयतत्सम्बन्धेन प्रतियोगिव्यधिकरणो यो ऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वविवक्षणादेव नाव्याप्तिरिति वाच्यम् । सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावमादायाव्याप्तेः । तादृशान्यतरीयतादात्म्यसम्बन्धेन सत्तात्वविशिष्टसम्बन्धिनि सत्तादौ तादात्म्येन प्रतियोगिव्यधिकरणो न विशिष्टसत्ताभावः अपि तु घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकत्वस्य साधनसमानाधिकरणविशिष्टसत्ताभावप्रतियोगितावच्छेदके सत्त्वेन सत्तात्वस्य पारिभाषिकावच्छेदकत्वादिति । न च तादृशयद्यत्सम्बन्धेन

यो यो यद्धर्मविशिष्टसम्बन्धी तत्तत्सम्बन्धेन तत्तन्निष्ठप्रतियोगिव्यधिकरणाभाव इत्युक्तौ समवायेन गुणे तदभावस्य प्रतियोगिव्यधिकरणतया नाव्याप्तिरिति वाच्यम्। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वस्य तादृशयद्यत्सम्बन्धेन सम्बन्धित्वाप्रसिद्धया घटत्वविशिष्टसम्बन्धी यो यस्तत्तन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वादसमानकालीनतत्तद्व्यक्तित्वे तत्तदवच्छेदकत्वात् कालो घटवान् महाकालत्वादित्यत्राव्याप्तेः। यदि चात्र स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धिताविशिष्टान्या याऽन्यतरसम्बन्धावच्छिन्ना यद्धर्मविशिष्टसम्बन्धिता तद्वन्निष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वमित्युक्तौ नैष दोष इति विभाव्यते तदा घटान्यत्वविशिष्टप्रमेयवान् वाच्यत्वादित्यादावतिव्याप्तिः। साध्याभावप्रतियोगितावच्छेदकं लाघवात् घटभेदत्वमेव तथा च गगनाभावादिनिष्ठा या साध्यतावच्छेदकावच्छिन्नतादात्म्यसम्बन्धावच्छिन्नसम्बन्धिता तस्या निरूकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धिताविशिष्टान्यत्वात्। तद्वन्निष्ठाभावप्रतियोगितावच्छेदकमेव घटभेदत्वमतो यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वादितिध्येयम्। सामान्यधर्मावच्छिन्नाधिकरणत्वस्यैक्यमते तत्तद्व्यक्त्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिश्चेति विभावनीयम्॥२४॥

न च तथापि कालो घटवान् महाकालत्वादित्यादावव्याप्तिवारणायावृत्तिनिरूपिततादात्म्यसाध्यताघटकान्यतरसम्बन्धेन यः स्वविशिष्टसम्बन्धी तन्निष्ठो यस्तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वविवक्षणान्नोक्तस्थलेऽव्याप्तिरिति वाच्यम्। शब्दवान् गगनत्वादित्यादौ शब्दत्वगगनान्यतराभावमादायाव्याप्तेस्तादृशान्यतरघटिततादृशावच्छेदकभेदकूटस्य साधनवन्निष्ठाभावप्रतियोगितावच्छेदके सत्त्वात् एवं संयोगेन द्रव्यसाध्यकद्रव्यत्वादिहेतौ आत्मान्यत्वविशिष्टद्रव्याभावमादायाव्याप्तेश्च ॥ २५ ॥

हेतुमन्निष्ठाभावीयप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकीभूततद्धर्मावच्छेद्यत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्तद्धर्मावच्छिन्नसामानाधिक-

रण्यं व्याप्तिरित्यत्र यद्धर्मविशिष्टसम्बन्धित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम् । अन्यथा वह्निमन्निष्ठाभावप्रतियोगितायां धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वात् धूमवान् वह्नेरित्यादौ अतिव्याप्त्यापत्तेः । न च गोत्वत्वाद्यवच्छेद्यत्वमप्रसिद्धमिति वाच्यम् । गोत्वभेदीयप्रतियोगितायां तत्सौलभ्यादिति । अत एव प्रमेयधूमत्वमुपेक्षितं तदवच्छिन्नत्वस्य भेदीयप्रतियोगितायामप्यभावात् । यदि च गोत्वत्वाद्यवच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयाभावाप्रसिद्ध्यैव नातिव्याप्तिः । गवेतरासमवेतत्वाद्यवच्छिन्नत्वमात्रघटिततादृशोभयत्वस्य लघुत्वेन प्रतियोगितावच्छेदकत्वादिति विभाव्यते तदा वह्निमान् धूमादित्यादावव्याप्तिवारणाय सम्बन्धित्वं साध्यतावच्छेदकसम्बन्धेन निवेशनीयमिति जगदीशेनोक्तम्॥०॥

अत्रेदं चिन्त्यते संयोगसम्बन्धावच्छिन्नगोत्वाभावीयप्रतियोगितायां गोत्वत्वावच्छिन्नत्वघटितोभयाभावसत्त्वात्तत्र गवेतरासमवेतत्वाद्यवच्छेद्यत्वघटितोभयाभावासत्त्वात् कथं गवेतरासमवेतत्वावच्छेद्यत्वघटितोभयत्वस्यातिप्रसङ्गाद्यनापादकत्वं न च गवेतरासमवेतत्वनिष्ठभेदप्रतियोगितावच्छेदकताकत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावस्य तादृशप्रतियोगितायां सत्त्वात् तादृशोभयत्वमेवातिप्रसङ्गाद्यनापादकमित्यत्रैव तात्पर्यमिति वाच्यम् तथा सति गवेतरासमवेतत्वपर्यन्तानुधावनवैयर्थ्यापत्तेः । भेदत्वनिरूपकत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वस्यैव लाघवेन तथात्वौचित्यात् । अथ संयोगसम्बन्धेन गोत्वाभावप्रतियोगितायां गवेतरासमवेतत्वमवच्छेदकं न भूतले गोत्वं नास्तीतिप्रतीतिसत्त्वात् तत्र गवेतरासमवेतं नास्तीत्यप्रत्ययात् गवेतरासमवेतत्वमात्रस्यातिप्रसङ्गाद्यापादकत्वात् किन्तु समवेतत्वे सति गवेतरासमवेतत्वं तथा च गवेतरासमवेतत्वावच्छिन्नत्वरूपगवेतरासमवेतत्वमात्रावच्छिन्नत्वघटितोभयत्वस्य लघुत्वाभावात् अत्र वदन्ति ॥

संयोगेन गोत्वाभावप्रतियोगितावच्छेदकं गोसमवेतत्वं न तु समवेतत्वे सति गवेतरासमवेतत्वं तथा च गवेतरासमवेतत्वावच्छिन्नत्वघटितोभयत्वमतिप्रसङ्गाद्यनापादकमेवेति नासङ्गतिः ।न च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकगवेतरासमवेताभावीयप्रतियोगितायां गोत्वत्वाव-

च्छेद्यत्वघटितोभयाभावसत्त्वेन तत्र च गवेतरासमवेतत्वावच्छेद्यत्वघटितोभयाभावासत्त्वादतिप्रसङ्ग इति वाच्यम्। संयोगेन गवेतरासमवेताभावप्रतियोगितावच्छेदकत्वस्य लाघवेन द्रव्यत्व एव कल्पनात्। न च गवेतरासमवेतत्वं यदि गोत्वाभावप्रतियोगितानवच्छेदक तर्हि अनवच्छेदकपदेन तदुपादाय तदवच्छिन्नत्वघटितोभयाभावस्य सत्त्वात् अतिव्याप्तिरिति कथमप्रसिद्धिरित्युक्तमिति वाच्यम्। अनवच्छेदकयद्यद्धर्म इत्यस्यैव विवक्षणीयत्वादन्यथा साध्यतावच्छेदकसम्बन्धानिवेशेऽपि धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्ते। धूमवन्निष्ठाभावप्रतियोगितायां वह्नित्वरूपानवच्छेदकधर्मावच्छिन्नत्वाभावात्। तथा च गोत्वत्वस्याप्यनवच्छेदकत्वात् तद्घटितोभयत्वावच्छिन्नाभावाप्रसिद्धेरिति अतोऽव्याप्तिपर्यन्तानुधावनमिति कश्चित्। तन्न साध्यतावच्छेदकसम्बन्धेन सम्बन्धित्वनिवेशेऽपि यद्धर्मावच्छिन्नत्वघटितोभयाभावकूटनिवेशे वह्निमान् धूमादित्यादौ संयोगसम्बन्धेन यद्वह्नित्वविशिष्टसम्बन्धि तन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य गोत्वत्वादावपि सत्त्वात् तदवच्छेद्यत्वघटितोभयाभावासत्त्वात् पुनरव्याप्त्यापत्तेरतः सामान्याभावनिवेशो युक्तस्तदा कथमप्रसिद्धिदानसङ्गतिः मैवम् इत्यस्वरसादेव यदि चेत्यस्योक्तत्वात्। अन्ये तु गोत्वभेदप्रतियोगित्वनिष्ठं यद्गोत्वत्वाद्यवच्छेद्यत्वं संयोगसम्बन्धावच्छेद्यत्वं चैतदुभयत्वस्यैवातिप्रसङ्गाद्यनापादकस्य प्रतियोगितावच्छेदकत्वमित्याहुः॥ २६॥

गवेतरासमवेतत्वनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकत्वसंयोगावच्छेद्यत्वोभयत्वस्य गवेतरासमवेतत्वनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितसकलगोसमवेतत्वनिष्ठावच्छेदकताकत्वसंयोगसम्बन्धावच्छेद्यत्वोभयत्वापेक्षया लघुत्वादतिप्रसङ्गाद्यनापादकत्वाच्च। तादृशोभयाभावप्रतियोगितावच्छेदकत्वमित्यपि वदन्ति॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचिता अवच्छेदकत्वनिरुक्तिपत्रिका समाप्ता।

केचित्तु(१) कल्पस्यानुगमय्य परिस्कारे तद्घटान्यत्वविशिष्टप्रमेयवान् वाच्यत्वादित्यत्रातिव्याप्तिः साध्याभावप्रतियोगितावच्छेदकत्वस्य लाघवेन तद्घटभेदत्व एव कल्पनात् साध्यताघटकसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिवेशेन साध्यभेदस्यापि धर्तुमशक्यत्वादिति केचिद्वदन्ति । तन्न विषयतया तद्घटान्यत्वविशिष्टप्रमेयमित्याकारकयत्किञ्चिज्जन्यज्ञानविशिष्टतद्घटान्यत्वविशिष्टप्रमेयाभावमादायैवातिव्याप्तिवारणसम्भवात् तदभावप्रतियोगितावच्छेदकत्वस्यान्यत्र कल्पनासम्भवात् तदभावस्याव्याप्यवृत्तित्वात् न च निखिलाविषयतया अवच्छेदकत्वकल्पनामपेक्ष्य तद्घटभेदानिष्ठविषयतया तज्ज्ञानव्यक्तेरेवावच्छेदकत्वं लाघवेन कल्पनीयमिति वाच्यम् । एवमपि विषयतया भिन्नकालीनतद्घटभेदमात्रविषयकजन्यज्ञानतद्घटभेदभिन्नमात्रविषयकयत्किञ्चिज्जन्यज्ञानैतदन्यतरविशिष्टतद्घटान्यत्वविशिष्टप्रमेयाभावमादायैवातिव्याप्तिवारणसम्भवात् । तद्घटभेदविषयकज्ञानासत्त्वदशायां तदन्यवाच्यत्वादिविषयकज्ञानदशायां च पटादौ तादृशान्यतरविशिष्टो नास्तीति प्रतीत्यनुदयेन तद्घटभेदमात्रविषयकज्ञानस्य उक्ताभावप्रतियोगितावच्छेदकत्वस्य कल्पयितुमशक्यत्वात् । एवं तद्घटभेदमात्रविषयकज्ञानदशायां तदन्यवाच्यत्वादिविषयकज्ञानसत्त्वदशायाञ्च पटादौ तादृशप्रतीत्यनुदयेन तद्घटभेदभिन्नविषयकज्ञानमात्रस्यापि तादृशावच्छेदकत्वस्य कल्पयितुमशक्यत्वात् । न च संसारस्यानादितया सर्वदैव कस्यचिज्ज्ञानोत्पादेन तादृशान्यतरकालीनतद्घटभेदमात्रविषयकज्ञानस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वं कल्पनीयमिति वाच्यम् । तादृशान्यतरकालीनतद्घटभेदमात्रविषयकज्ञानस्य तदपेक्षया गुरुत्वात् । तद्घटभेदाविषयकतत्पुरुषीयैतदन्यतरज्ञानविशिष्टतद्घटान्यत्वाविशिष्टप्रमेयाभावमादाय तथाप्यतिव्याप्तिवारणसम्भवात् । तत्पुरुषीयज्ञानविशिष्टाभावप्रतियोगितावच्छेदकत्वस्यान्यत्र कल्पयितुमशक्यत्वादिति निपुणतरं विभावनीयमिति ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचिता अवच्छेदकत्वनिरुक्तिजागदीशीपत्रिका समाप्ता(२) ॥

---

(१) श्रीप्रसन्नचन्द्रतर्कपञ्चाननैरस्मत्परमगुरुभिः कृता टीप्पणीयम् ।

(२) द्वितीयपुस्तके ऽत्र अत प्रकरणसमाप्तिर्वर्तते ।

## अथ विशेषव्याप्तिजागदीश्याः कालीशङ्करी-
## क्रोडपत्रम् ।



प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना साध्येन सामानाधिकरण्यं व्याप्तिरिति मूलोक्तलक्षणम् । अथात्र नानाव्यक्तिरूपादिसाध्यकैकव्यक्तिपृथिवीत्वादिहेतावव्याप्तिरिति शिरोमणिः । अथ द्रव्यं पृथिवीत्वादित्याद्येकव्यक्तिसाध्यके ऽव्याप्तिविरहान्नानाव्यक्तीति । जातित्वेन शब्दत्वेन वा नानाव्यक्तेः साध्यत्वे ऽव्याप्त्यभावाद्रूपादीत्युक्तमिति जगदीशः । तन्न सङ्गच्छते शब्दत्वेन साध्यतास्थले गगनत्वादिहेतोरेव सद्धेतुतया तस्य पृथिवीत्वादिहेत्वनन्तर्भावादेव धर्तुमशक्यत्वात् । न चादिपदेन गगनत्वहेतुसंग्रहान्नासङ्गतिरिति वाच्यम् तथा सति रूपवान् तद्रसादित्यत्र तद्रसहेतोरादिपदग्राह्यत्वापत्त्याऽसङ्गतिभयेन नानाधिकरणकैकव्यक्तिहेतोरेव पृथिवीत्वपदस्वरसेन शाब्दत्वादिति चेन्न स्ववृत्तिशब्दत्ववत्त्वसम्बन्धेन शब्दसाध्यकस्थले आदिपदग्राह्यनानाधिकरणप्रत्यासन्नैकव्यक्तिशब्दत्वादिहेतोः सङ्ग्रहान्नासङ्गतिरिति ध्येयम् । वस्तुतः शब्दत्वेन साध्यतायामित्यस्य शक्तिसम्बन्धेन साध्यतायामित्यर्थः । तत्र पृथिवीत्वहेतोरपि सद्धेतुत्वात् पृथिव्यादिशब्दानां हेतुमन्निष्ठाभावप्रतियोगित्वाभावान्नासङ्गतिरिति मन्तव्यम् । ननूक्तमिदं नानाव्यक्तिरूपादिसाध्यकत्वं न तावत् स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टसाध्यतावच्छेदककत्वं जातिसाध्यकस्थलेपि तत् सत्त्वात् अपि तु स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तद्वृत्तित्वे सति स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टसाध्यतावच्छेदककत्वमिति फलितार्थः । अत्र वृत्तित्वं साध्यतावच्छेदकसम्बन्धेन द्वितीयन्तु साध्यतावच्छेदकताघटकसम्बन्धेन बोध्यमिति ।

उक्तजातिसाध्यकस्य तु उभयसम्बन्धेन भेदवत्सत्तादिवृत्तिसाध्यतावच्छेदककत्वान्नासङ्गतिः । न च सत्तान्यजा-

तिमान् सत्त्वादित्यादावव्याप्त्यप्रदर्शनेन न्यूनता स्यादिति वाच्यम् । सकलस्थले ऽव्याप्त्यप्रदर्शनेन मूलन्यूनताया अकिञ्चित्करत्वादन्यथा संख्यान्यगुणवान् गुणावृत्तिजातिमत्त्वादित्यादिनानाव्यक्तिहेतुके ऽव्याप्त्यप्रदर्शनेन एकव्यक्तिहेतुके ऽव्याप्तिवादिनो दीधितिकारस्य तथापत्तेरिति । नानाव्यक्तिरूपादिसाध्यकरसादिहेतावव्याप्तिविरहेण हेतौ एकव्यक्तीत्युक्तम् । एकव्यक्तितद्रसादिहेतावव्याप्तिविरहेण पृथिवीत्वादीत्युक्तम् एकव्यक्तिपृथिवीत्वादिहेतुकत्वं तु नानाधिकरणवृत्तितावच्छेदकैकव्यक्तिमात्रवृत्तिहेतुतावच्छेदककत्वम् । तच्च स्वप्रतियोगिवृत्तितावच्छेदकत्वस्वानुयोगिवृत्तितावच्छेदकत्वोभयसम्बन्धेन भेदवत्त्वे सति स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यहेतुतावच्छेदकवत्त्वमिति । सम्बन्धघटकीभूतप्रथमवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन बोध्यम् । द्वितीयं तु हेतुतावच्छेदकताघटकसम्बन्धेनेति केचित् । परे तु हेतुमन्निष्ठभेदप्रतियोगितानवच्छेदकावृत्तिसाध्यतावच्छेदककसद्धेतुत्वमेव नानाव्यक्तिरूपादिसाध्यकैकव्यक्तिपृथिवीत्वहेतुकत्वमिति समुदितार्थः । यद्धेतुसमानाधिकरणात्यन्ताभावाप्रतियोग्यवृत्तिसाध्यतावच्छेदककत्वमिति अवच्छेदकत्वं प्रतियोगित्वञ्च वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नमित्याहुः । नन्वेवं वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावमादाय साध्यस्य हेतुमन्निष्ठाभावप्रतियोगित्वादसम्भव एव वक्तुमुचितः । न च तद्रूपवान् तद्रसादित्यादौ तद्रूपैतद्रूपोभयाभावस्य हेतुसामानाधिकरण्येपि प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्ध्या लक्षणाघटकतयाऽव्याप्तिविरहान्नासम्भव इति वाच्यम् । रूपघटोभयाभावस्य लक्षणघटकत्वसम्भवात् तत्र प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य कपाले एव प्रसिद्ध्या न प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धिरिति चेन्न वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं न त्वविशिष्टसाध्यकस्थले तत्र यथाश्रुतमेव प्रतियोगिवैयधिकरण्यं निवेश्यम् । तथा च रूपघटोभयाभावस्य प्रतियोगिवैयधिकरण्यविरहान्न तदभावमादायाव्याप्तिरिति । न चाविशिष्टसाध्यकस्थलीयलक्षणस्य विशिष्टसाध्यकव्यभिचारिण्यतिव्याप्तिवारणा-

र्थमवश्यं प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं निवेशनीयमिति वाच्यम् साध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसम्बन्धेन प्रतियोग्यधिकरणत्वाभावस्य हेत्वधिकरणे विवक्षणीयत्वादिति । वस्तुतस्तु प्रतियोगिवैयधिकरण्यपदेन साध्यतावच्छेदकावच्छिन्नाधिकरणत्वस्वप्रतियोग्यधिकरणत्वोभयाभावविशिष्टहेत्वधिकरणवृत्तित्वस्य विवक्षितत्वान्न कोपि दोष इति ध्येयम् । परे तु तादात्म्यसम्बन्धेन तद्रूपादेः साध्यत्वे तद्व्यक्तित्वादिहेतौ लक्षणगमनान्नासम्भव. प्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन प्रतियोगिव्यधिकरणो न विशिष्टाभाव उभयाभावश्च प्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन तादृशविशिष्टाभावोभयाभावप्रतियोगिनः सम्बन्धित्वस्य हेतुमति सत्त्वादिति । अथ तथापि तद्ग्रहस्य व्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेण जगदीशेनोक्तनया तत्र प्रतियोगिवैयधिकरण्यानिवेशात् तत्स्थलीयलक्षणस्यासम्भवतादवस्थ्यमिति वाच्यम् वाच्यं ज्ञेयत्वादित्यादौ लक्षणगमनात् वाच्यत्वगगनत्वोभयं नास्तीति प्रतीतेः गगनत्वाद्यभावविषयकत्वेनोपपत्तौ अतिरिक्ततादृशोभयाभावे मानाभावात् । न चैवमपसिद्धान्त इति वाच्यम् घटपटोभयं नास्तीति प्रतीतेरभावद्वयविषयकत्वस्यानुभवविरुद्धत्वेनातिरिक्तोभयत्वावच्छिन्नप्रतियोगिताकैकाभावविषयकत्वस्वीकारेपि वाच्यत्वगगनत्वोभयं नास्तीति प्रतीतेः प्रकारीभूतगगनत्वत्वावच्छिन्नप्रतियोगिताकाभावविषयकत्वेनोपपत्तौ युक्त्यन्तरविरहेणातिरिक्ताभावविषयकत्वास्वीकारात् । एतदेव ननु घटपटौ न स्तः वह्निह्रदौ न स्त इत्यादिप्रतीतेरधिकरणभेदेन नानाभावविषयकत्वमनुभवविरुद्धमेकाभावविषयकत्वस्यानुभवसिद्धत्वात् तादृशानुभवापलापेनातिरिक्ताभावस्याप्रसिद्ध्यापत्तेरित्यादिना मथुरानाथेनाग्रे व्यक्तीकृतम् । न चैवं सति सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिदानासङ्गतिः सत्तागुणत्वोभयं नास्तीति प्रतीतेः गुणत्वाभावविषयकत्वेनोपपत्तौ तादृशोभयाभावे मानाभावादिति वाच्यम् सत्ताधिकरणतावान् द्रव्यत्वादित्यादौ सत्ताधिकरणत्वघटान्यत्वोभयाभावमादायाव्याप्तिदानस्यैव तद्ग्रन्थतात्पर्यादिति ध्येयम् ॥ १ ॥

अथाप्रतियोगित्वं प्रतियोगित्वाभावः स च येन रूपेण तद्रूपावच्छिन्नव्याप्यत्वं हेताविति शिरोमणिना यदुक्तं तत्र तेनैव शङ्कित-

म् । अथ प्रमेयधूमत्वं गौरवेन न सामानाधिकरण्यप्रतियोगितावच्छेदकं विवक्षितं चात्र तथेत्यादिना ॥ ० ॥

अथेति तथा च साधननिष्ठसामानाधिकरण्यनिरूपकतावच्छेदकयद्धर्मावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगित्वाभावस्तद्धर्मावलीढसामानाधिकरण्यं व्याप्तिरित्यर्थः । अत्र साधननिष्ठसामानाधिकरण्यनिरूपकताया अवच्छेदकत्वमनतिरिक्तवृत्तित्वविशिष्टस्वरूपसम्बन्धरूपं स्वरूपसम्बन्धमात्रं वेति जगदीशः ॥

ननु साधननिष्ठसामानाधिकरण्यनिरूपकतावच्छेदकयद्धर्मावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगित्वाभावस्तद्धर्मावच्छिन्नसामानाधिकरण्यस्य व्याप्तित्वे गौरवं द्विधा सामानाधिकरण्यप्रवेशात् तदपेक्षया लाघवात् तादृशप्रतियोगित्वाभावावच्छेदकसाध्यतावच्छेदकानिष्ठतादृशावच्छेदकताकनिरूपकताकाधिकरणतावद्वृत्तित्वस्यैव व्याप्तित्वकथनमुचितमिति चेन्न व्याप्यवृत्तेरवच्छेदकत्वस्वीकारे समवायेन गगनस्य एवं प्रमेयधूमस्य च घटत्वव्यापकत्वापत्तेः समवायेन गगनस्याधिकरणाप्रसिद्ध्या समवायेन प्रतियोगिव्यधिकरणाभावान्तरप्रतियोगित्वाभावावच्छेदकत्वस्य गगनत्वे सत्त्वात् । अस्माकं तु साधननिष्ठसामानाधिकरण्यनिरूपकतावच्छेदकत्वस्य गगनत्वेऽसत्त्वात् न तल्लक्षणातिव्याप्तिरिति । अथ भवन्मतेऽपि साधननिष्ठपदं व्यर्थं सामानाधिकरण्यनिरूपकतावच्छेदकत्वविवक्षणादेव व्यापकत्वलक्षणातिव्याप्तिवारणसम्भवादिति । न चासमानाधिकरणधूमकवह्निव्यक्तिवृत्तितया वह्नित्वमपि नावच्छेदकमित्युत्तरदीधितिसङ्गमनार्थमेव तदिति वाच्यम् प्रयोजनान्तरविरहेण केवलं तत्सङ्गमनार्थं तादृशविशेषणस्य वैयर्थ्यादिति ध्येयम् । यत्तु विषयितासम्बन्धेन प्रमेयधूमस्य साध्यतायां घटत्वादिविरुद्धहेतौ व्यापकत्वलक्षणस्यातिव्याप्तिः । विषयित्वादेर्वृत्त्यनियामकतया तदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्या सम्बन्धान्तरावच्छिन्नप्रतियोगित्वाभावावच्छेदकत्वस्य विषयित्वसम्बन्धावच्छिन्नसामानाधिकरण्यनिरूपकतावच्छेदकत्वस्य च प्रमेयधूमत्वे सत्त्वात् अस्माकं तु तादृशप्रतियोगित्वाभावावच्छेदकत्वेऽपि साधननिष्ठतादृशसामानाधिकरण्यनिरूपकतावच्छेदकत्वाभावान्नातिव्याप्तिरिति तत्तुच्छम् । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे तद्विशेषणदानेऽपि

तादृशसाध्यकव्यभिचारिणि ज्ञानत्वादिहेतावतिव्याप्तेर्दुरुद्धरत्वात्॥२॥ न च पूर्वलक्षण इवात्रापि साधनवन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगित्वाभावावच्छेदकं तद्भिन्नधर्मवता सामानाधिकरण्यमित्युक्तौ निस्तार इति वाच्यम्। तादृशप्रतियोगित्वाभावोऽत्र विशिष्य तत्तत्प्रतियोगित्वाभावकूटत्वेन निवेश्यः अन्यथा गुरोरवच्छेदकत्वं विना दुर्वचत्वापत्तेः। तथा च वह्निमान् धूमादित्यत्रैवाव्याप्तिः धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटत्वादेः स्वविशिष्टसम्बन्धिनिष्ठपटात्यन्ताभावप्रतियोगित्वाभावानवच्छेदकत्वेन पारिभाषिकावच्छेदकाप्रसिद्धेः। घटादौ पटाद्यभावप्रतियोगित्वाभावस्य व्याप्यवृत्तितयाऽवच्छेदकत्वानपेक्षणादिति जगदीशः। अथ सर्वत्रैव लक्षणागमनादसम्भव एव वक्तुमुचितः कथमव्याप्तिरिति चेन्न विषयितासम्बन्धेन पटादिसाध्यकतज्ज्ञानत्वादिहेतौ लक्षणगमनात् विषयितासम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य प्रतियोगितावच्छेकं यत् प्रमेयत्वं तस्य स्वविशिष्टसम्बन्धिनिष्ठाभावीया यावत्यः प्रतियोगितास्तत्तदभावकूटावच्छेदकत्वेन पारिभाषिकावच्छेदकप्रसिद्धेः प्रमेयत्वस्य तादृशसकलप्रतियोगितासामानाधिकरण्यादिति ध्येयम्। अथात्र कल्पे वह्निमान् धूमादित्यादावव्याप्तेरसङ्गतिः। तत्पर्वतान्यत्वविशिष्टाभावप्रतियोगितावच्छेदकं यत् तत्पर्वतान्यत्वं तस्य स्वविशिष्टसम्बन्धिनिष्ठसाध्यतावच्छेदकसंयोगसम्बन्धेन प्रतियोगिव्यधिकरणाभावीयप्रतियोगित्वाभावकूटावच्छेदकत्वेन पारिभाषिकावच्छेदकत्वप्रसिद्धेरिति चेन्न तत्पर्वतान्यत्वविशिष्टाभावीयप्रतियोगितावच्छेदकं सामानाधिकरण्यसम्बन्धेन तत्पर्वतान्यत्वमेव न तु तत्पर्वतावृत्तित्वमेवातो वह्निमान् धूमादित्यत्राव्याप्तिसङ्गतिः। न च यादृशपर्वतविशेषवह्न्यादौ तत्पर्वतवृत्तित्वमेव न तु तत्पर्वतावृत्तित्वमतिप्रसङ्गापातादिति वाच्यम्। तादृशस्थले मानाभावात्। केचित्तु तादृशस्थलाभ्युपगमे प्रतियोगिवैयधिकरण्यद्वयाप्रवेशेन लाघवात् प्रतियोगिताद्वयं विशेषणताविशेषसम्बन्धावच्छिन्नं दीधितिकारेण विवक्षितं तदभिप्रायेणेदं तथा च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतदभावप्रतियोगितावच्छेदकतत्पर्वतान्यत्वस्य

यद्धर्मविशिष्टसम्बन्धिनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकता-दृशाभावप्रतियोगितावच्छेदकत्वेन तादृशप्रतियोगित्वाभावकूटाव-च्छेदकत्वविरहान्न पारिभाषिकावच्छेदकत्वप्रसिद्धिः । न चैवं सति सर्वत्रैव तादृशपारिभाषिकावच्छेदकाप्रसिद्ध्या ऽसम्भव एव वक्तु-मुचित इति वाच्यम् । एतन्मते ऽव्याप्तिपदस्याऽसम्भवपरतया त-थैवोक्तत्वादित्याहुस्तच्चिन्त्यम् ॥ ३ ॥

अथ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्ब-न्धिनिष्ठाभावीययद्धर्मसमानाधिकरणप्रतियोगित्वाभावकूटावच्छेद-कं तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्ति-रित्युक्तौ नाव्याप्त्यवकाश इति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्घटत्वादि तस्य स्वविशिष्टसन्बन्धिनिष्ठाभावीयघटत्वसमानाधि-करणप्रतियोगित्वाभावकूटावच्छेदकत्वेन पारिभाषिकावच्छेदकत्वप्र-सिद्धेरिति चेन्न तद्घटवान् द्रव्यत्वादित्यादावतिव्याप्तेः। हेतुमन्निष्ठा-भावप्रतियोगितावच्छेदकं यत्तद्घटत्वादिकं तद्विशिष्टसम्बन्धिनिष्ठ-प्रतियोगिव्यधिकरणाभावीयतद्घटत्वसमानाधिकरणतत्तद्घटाभा-वीयप्रतियोगित्वाप्रसिद्ध्या हेतुमन्निष्ठपटाभावप्रतियोगितावच्छेदकं यत् पटत्वादिकं तस्य पटत्वादिविशिष्टसम्बन्धिनिष्ठतत्तत्पटाभा-वीयपटत्वसमानाधिकरणतत्तत्प्रतियोगित्वाभावकूटावच्छेदकत्वेन तस्यैव पारिभाषिकावच्छेदकत्वादिति । न चात्रापि तद्घटत्ववि-शिष्टसम्बन्धिनिष्ठघटपटोभयाभावीयतद्घटत्वसमानाधिकरणप्रति-गित्वाभावावच्छेदकत्वेन तस्यैव पारिभाषिकावच्छेदकत्वान्नाति-व्याप्तिरिति वाच्यम् । तादात्म्येन सम्बन्धेन गगनस्य साध्यतायां व्यभिचारिण्यतिव्याप्तेः । न च प्रतियोगिवैयधिकरण्यद्वयाप्रवेशेन लाघवात् प्रतियोगितायामेकसम्बन्धावच्छिन्नत्वं दीधितिकारेण विवक्षितं तथा च तादात्म्यसम्बन्धेन गगनसाध्यकव्यभिचारिस्थले च साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकगगनत्वस्य पा-रिभाषिकावच्छेदकत्वेनाभिमतं यद्गगनत्वं तत्समानाधिकरण-गगनत्वविविशिष्टसम्बन्धिनिष्ठगगनघटोभयभेदीयप्रतियोगित्वस्या-भावावच्छेदकत्वेन नातिव्याप्त्यवकाश इति वाच्यम् यथा श्रुतप्राति-योगिव्यधिकरणाभिप्रायेण तस्यैवोक्तत्वादिति । केचित्तु लाघ-वाभिप्रायेण तद्विवक्षणे ऽतिलाघवेन प्रतियोगिताया विशेषणतावि-

शेषावच्छिन्नत्वं तेनैव विवक्षितं तदभिप्रायेणेदम् । तथा च धूमवान् वह्नेरित्यादावतिव्याप्तिः साधनसमानाधिकरणस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकव्यभिचारिस्थलान्यत्वाद्यभावस्य प्रतियोगिवच्छेदकं यद्व्यभिचारिस्थलभेदत्वादिकं तस्य धूमत्वसमानाधिकरणधूमत्वविशिष्टसम्बन्धिनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावीयप्रतियोगित्वाभावानवच्छेदकत्वात् व्याप्यतावच्छेदकत्वानङ्गीकारात् । न च स्वरूपसम्बन्धेन व्यभिचारिस्थलावृत्त्यभावमादाय धूमत्वस्यैव पारिभाषिकावच्छेदकत्वप्रसिद्धिरिति वाच्यम् लाघवात् व्यभिचारिस्थलभेदत्वस्यैव व्यभिचारिस्थलावृत्त्यभावप्रतियोगितावच्छेदकत्वकल्पनादिति ध्येयम् ॥ ० ॥

अत्रेदं चिन्त्यते । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसमानाधिकरणप्रतियोगित्वाभावावच्छेदकं तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके विवक्षणान्न कोऽपि दोषः। उक्तगगनसाध्यकव्यभिचारिणि तत्तद्घटान्यभेदप्रतियोगितावच्छेदकं व्यभिचारिस्थलान्यत्वं तस्य गगनत्वविशिष्टसम्बन्धिनिष्ठाभावीयतादृशप्रतियोगितावच्छेदकसमानाधिकरणतत्तत्प्रतियोगित्वाभावावच्छेदकत्वेन गगनत्वस्य पारिभाषिकावच्छेदकतया नातिव्याप्तिरिति । विशिष्टार्थस्तु साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूतयद्धर्मसमानाधिकरणस्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगित्वाभावकूटावच्छेदकं तद्धर्मवत्त्वमेव पारिभाषिकावच्छेदकत्वमिति ध्येयम् ॥ ० ॥

अथ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयतत्तत्प्रतियोगिताप्रतियोगिताकाभावावच्छेदकं तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके विवक्षणान्नाव्याप्तिरिति तथा च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितात्ववान्निष्ठभेदीयप्रतियोगितानवच्छेदकं तद्धर्मवत्त्वमेव पारिभाषिकावच्छेदकमिति पर्यवसितार्थः अवच्छेदकत्वं स्वावच्छेद्याभावप्रतियोगित्वसम्बन्धेन बोध्यमिति । धूमवन्निष्ठघटाभावप्रतियोगितावच्छेदकं यद्घटत्वादिकं तस्य घटत्वविशिष्टसम्बन्धिनिष्ठपटाद्यभावप्रतियोगितावच्छेदकपटत्वाद्यवच्छिन्नप्रतियोगित्वतद्घटत्वावच्छिन्नप्रतियोगित्वैतदन्यतराभावावच्छेदकत्वेन

पारिभाषिकावच्छेदकत्वस्य घटत्वादौ प्रसिद्धेरिति । न चैवं रीत्या वह्निमान् धूमादित्यादावव्याप्तिः धूमवन्निष्ठाभावप्रतियोगितावच्छेदकं यद् घटत्वादिकं तस्य वह्निमन्निष्ठाभावप्रतियोगिताप्रतियोगिकस्य घटत्वाद्यवच्छिन्नप्रतियोगितातद्घटत्वावच्छिन्नप्रतियोगिता एतदुभयाभावस्यावच्छेदकत्वेन पारिभाषिकावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् तादृशोभयाभावस्य व्याप्यवृत्तित्वेन घटत्वादावनवच्छेदकत्वविरहात् । तथाहि घटत्वे तादृशावच्छेदकत्वस्वीकारे तद्घटत्वेपि तत् स्वीकरणीयं तुल्यन्यायात् एवं सति तादृशोभयाभावानवच्छेदकाप्रसिद्ध्या स्वसमानाधिकरणाभावप्रतियोगित्वलक्षणाव्याप्यवृत्तित्वविरहादिति चेन्न तादृशप्रतियोगित्वाभावविशेषणीभूतयावत्त्वस्य तत्परित्यागेन प्रतियोगिताविशेषणत्वे यथासन्निवेशेन वैयर्थ्यविरहादिति केचित् प्रलपन्ति ॥ ० ॥

अथवानौपाधिकत्वं व्याप्तिः । तच्च यावत् यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत्तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन समं सामानाधिकरण्यमिति मूलं साधनसमानाधिकरणाभावप्रतियोगितावच्छेदका यावन्तो धर्मा यद्धर्म्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदका—स्तद्धर्मावलीढसामानाधिकरण्यमित्यर्थः । एतेन सर्वत्र तादृशैर्यावद्भिरवच्छिन्नस्य तादृशावच्छिन्नयावत्प्रतियोगिकस्य चातिप्रसङ्गकाद्यावत्त्वावच्छिन्नप्रतियोगिताकादतिरिक्तस्याभावस्याप्रसिद्धिः । तादृशावच्छिन्नप्रतियोगिताकयावदभावानामधिकरणस्यापि प्रायशस्तथा इति शिरोमणिः । अथात्र वाच्यं गगनत्वादित्याद्येकव्यक्तिवृत्तिसाधनस्थले तादृशयावदभाववत्त्वं साधनवत्येव प्रसिद्धमतः प्रायश इत्युक्तमिति जगदीशेनोक्तं तत् कथं सङ्गच्छते तत्रापि तादृशयावदभावान्तर्गतगुणसामान्याभावाभावस्य गुणत्वरूपस्याधिकरणाप्रसिध्याऽव्याप्तिसत्त्वादिति चेन्न अभावाभावस्यातिरिक्तत्वमते तादृशयावदभावान्तर्गतस्य गुणसामान्याभावाभावस्यातिरिक्ततया साधनवत्येव तद्वत्त्वसम्भवादव्याप्तिविरहेण प्रायश इत्युक्तम् । वह्निमान् धूमात् द्रव्यं पृथिवीत्वादिनानाव्यक्तिवृत्तिसाधनके पर्वतावृत्त्यभावस्य चत्वरावृत्त्यभावस्यातिरिक्तत्वेपि तादृशाभावकूटाधिकरणाऽप्रसिद्ध्याऽव्याप्तिर्बोध्या । अथवा भावभिन्नत्वनिवेशाभिप्राये-

णेदं गुणसामान्याभावाभावस्य गुणत्वरूपत्वेन भावभिन्नत्वविरहा-दिति। वस्तुतस्तु साधनसमानाधिकरणात्यन्ताभावप्रतियोगिनावच्छे-दकावच्छिन्नप्रतियोगिताकसाधनसमानाधिकरणा यावन्तोऽभावा-स्तत्कूटाधिकरणवृत्तिसाध्यसामानाधिकरण्यमित्यभिप्रायेणेदमिति ध्येयम्। वयं तु हेत्वधिकरणावृत्त्यभावानिरूपितत्वेन स्वनिष्ठानुयोगिता-निरूपितत्वस्वेतरनिष्ठानुयोगितानिरूपितत्वोभयसम्बन्धेन धर्मविशि-ष्टान्यत्वेन वा हेतुमन्निष्ठाभावप्रतियोगिताया विशेषणीयत्वान्नोक्ता-भावमादायाव्याप्तिरिति समाधानम् ॥ ० ॥

अथ साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकाव-च्छिन्नप्रतियोगिताका यावन्तोऽभावा यद्धर्मावच्छिन्नसमानाधिकर-णास्तद्धर्मावलीढसमानाधिकरण्यमित्यर्थः । अभावस्तु भावभिन्नो-ग्राह्य. तेनेदं जलं स्नेहवत्त्वादित्यादौ रूपसामान्याभावाभावमादाया-व्याप्तिरिति दीधितिकार । ननु तादृशरीत्या वह्निवान् धूमादित्य-व्याप्तिसम्भवे प्रसिद्धस्थलपरित्यागे बीजाभावः । न च साधन-समानाधिकरणाभावे निरवच्छिन्नत्वविशेषणात् पर्वतवृत्तिरूपादेः नि-रवच्छिन्नत्वाभावेन तदभावस्य धर्तुमशक्यत्वादत्र स्नेहवति जलीय-परमाणौ रूपस्य निरवच्छिन्नत्वसम्भवादतस्तादृशस्थलानुधावनमि-ति वाच्यम् समवेतसामान्याभावाभावस्य निरवच्छिन्नत्वसम्भवेन तादृशाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिसम्भवात् । न च तादृशाभावाभाव सत्तास्वरूप एव वाच्यो लाघवादिति वाच्यम् । तावतापि रूपवन्मात्रसमवेताभावाभावमादायाव्याप्तिसम्भवात् । न हि तादृशाभावो द्रव्यत्वस्वरूप कल्पयितुं शक्यते वाय्वादेरपि तादृशाभावप्रतीत्यापत्तेरिति चेदत्र केचित् । साध्यतावच्छेदकताघ-टकसम्बन्धावच्छिन्नावच्छेदकताकाभावानिवेशात् तत्र नाव्याप्तिरि-त्यभिप्रायेणेदम् । न च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्ट-स्य साध्यतायां धूमादिहेतौ तादृशसम्बन्धावच्छिन्नावच्छेदकताक-हेतुसमानाधिकरणाभावाप्रसिद्ध्याव्याप्तिरिति वाच्यम् । अत्र च सा-ध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यानिवेशेन वह्नि-त्वविशिष्टवह्नेः समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य यद्ध-र्मावच्छिन्नसामानाधिकरण्यसौलभ्यादिति। न च साध्यतावच्छेदक-सम्बन्धावच्छिन्नप्रतियोगिताकाभावानिवेशे वह्निमान् धूमादित्यादा-

वव्याप्तिः समवायसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावप्रतियोगितावच्छेदकावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यापि निरुक्तयावदन्तर्गततया तत्र साध्यसामानाधिकरण्यविरहादिति वाच्यम् प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वविवक्षणात्। एकसम्बन्धावच्छिन्नत्वं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टप्रतियोगित्वं तथा च साधनसमानाधिकरणाभावप्रतियोगिताविशिष्टप्रतियोगिताकयावदभावे साध्यसामानाधिकरण्यमिति फलितार्थ इत्याहुः । तन्न सङ्गच्छते। सत्ताभावतेजस्त्वाभावैतदन्यतराभावाभावमादाय वक्ष्यमाणाव्याप्तिदानासङ्गतेः। वस्तुतः प्रयासगौरवादेव प्रसिद्धस्थलोपेक्षेति ध्येयम्। न च घटाभावभिन्नमभावत्वादित्यत्र घटाभावभेदाभावस्य तादात्म्येन घटाभावात्मकतया स्वस्वरूपसम्बन्धेन साध्यसामानाधिकरण्यसत्त्वादतिव्याप्तिरिति वाच्यम् तत्रापि वृत्तित्वद्वयोरेकसम्बन्धावच्छिन्नत्वनिवेशात् तथा च घटाभावभेदाभावस्य तादात्म्येन हेत्वधिकरणीभूतघटाभावनिरूपितवृत्तित्वेपि तेन सम्बन्धेन साध्याधिकरणवृत्तित्वविरहादेव नातिव्याप्तिरिति भावः। अत्रेदं चिन्त्यते साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापकं यद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति यद्धर्मावच्छिन्नाधिकरणवृत्तित्वं तु स्वप्रतियोगिमत्त्वग्रहविरोधिताघटकसम्बन्धेन तथा च धूमवान् वह्नेरित्याद्यतिव्याप्तिः। कालिकसम्बन्धस्यापि तादृशत्वेन तत्सम्बन्धावच्छिन्नवृत्तित्वस्य धूमाद्यभावे सत्त्वादिति सिद्धान्तस्तु अनुगमपत्रिकायां विवेचनीयः। अथैतत्कल्पे तद्रूपभिन्नं गुणत्वादित्याद्यतिव्याप्तिः तद्रूपभेदाभावस्य तद्रूपत्वानतिरिक्ततया भावभिन्नत्वाभावात् साधनसमानाधिकरणस्यान्यविधाभावस्य प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकयावदभावे यद्धर्मावच्छिन्नसामानाधिकरण्यसत्त्वादिति चेन्न। तद्रूपवत्त्वप्रकारकयत्किञ्चिज्जन्यज्ञानविषयत्वतद्रूपभेदैतदन्यतराभावस्य भावभिन्नतया साधनसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभावे यद्धर्मावच्छिन्नसामानाधिकरण्याभावादिति ॥ ० ॥

तेजस्त्वाभावसत्ताभावैतदन्यतरत्वावच्छिन्नाभावत्वस्य साध-

नसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकतया तदवच्छिन्ना-भावस्य सत्ताभावाद्यात्मकतया तत्र साध्यसामानाधिकरण्याभावेन वह्निमान् धूमादित्यादावव्याप्तिरित्यस्वरसाद्वदन्तीत्युक्तमिति जगदीशः । तन्न सङ्गच्छते तादृशान्यतरत्वावच्छिन्नाभावाभावत्व तेजस्त्वाभाव एव स्वीकरणीयम् न तु सत्ताभावेपीति अतिप्रसङ्गाद्य-भावात् तादृशाभावे साध्यसामानाधिकरण्यसम्भवात्तमादायाव्याप्तिदानासङ्गतारिति चेन्न । अभावान्तरमादायैवाव्याप्तेः तथाहि गुणत्वप्रकारकयत्किञ्चिज्जन्यज्ञानविषयत्वगुणभिन्नत्वैतदन्यतराभावः द्रव्यान्यत्वविशिष्टसत्ताभावैतदन्यतरत्वावच्छिन्नाभावाभावस्यान्य-तरस्वरूपतया साधनसमानाधिकरणाभावप्रतियोगितावच्छदकीभूत-धर्मावच्छिन्नप्रतियोगिताकाभावत्वाश्रयगुणभिन्नत्वगुणत्वप्रकारकय-त्किञ्चित्प्रमाविशेष्यत्वैतदन्यतराभावस्य साध्यसामानाधिकर-ण्याभावादिति । अथवा रूपभेदरूपमित्याकारकयत्किञ्चिज्जन्य-प्रमाविशेष्यत्वैतदन्यतराभावः गुणत्वाभावैतदन्यतराभावाभावस्य एतदन्यतरस्वरूपस्य रूपभेदरूपमित्याकारकयत्किञ्चिज्जन्यज्ञानवि-षयत्वैतदन्यतराभावस्वरूपतया तत्र साध्यसामानाधिकरण्यविरहा-दव्याप्तिसङ्गतिरिति ध्येयम् । केचित्तु अभावाभावत्वं प्रतियोगित्व-मितिमतेनेदं तथा चान्यतरात्मकतया तादृशसत्ताभावे साध्यसामा-नाधिकरण्यासत्त्वादव्याप्तिदानं यथाश्रुतमेव सङ्गच्छते अन्यथाऽत्य-न्ताभावस्य त्रितयप्रतियोगिकत्ववादिनां प्राचां मते प्रागभावध्वं-सादिसाधारणरूपसामान्याभावाभावत्वमङ्गीकृत्य यद्धर्मावच्छिन्नाभा-वत्वावच्छेदेन भावभिन्नत्वं साधनसमानाधिकरणाभावप्रतियोगिता-वच्छेदकीभूततादृशधर्मावच्छिन्नाभावेन सामानाधिकरण्यमित्यादि-निवेशस्य वैयर्थ्यापत्तेरिति । न चैवं सति समवेताभावाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिसम्भवे इदं जलं स्नेहवत्त्वादित्यत्रा-व्याप्तिदानं सन्दर्भविरुद्धमिति वाच्यम् तादृशस्थलेप्यव्याप्तेरिष्टत्वा-दत एव समवेताभावाभावमादाय वह्निमान्धूमादित्यत्राव्याप्तिरित्य-पि द्रष्टव्यमित्यादिग्रहणेन भवतापि तत्राव्याप्तिः स्वीकृतेत्याहुः ॥ यत्तु जन्यत्वाभावजलमित्याकारकारकयत्किञ्चिज्जन्यज्ञानविषय-त्वाभावैतदन्यतराभावाभावमादायोक्तस्थलेऽव्याप्तिरिति तत्तुच्छम् तादृशान्यतरत्वावच्छिन्नाभावाभावत्वं जलत्वप्रकारतानिरूपितविशे-

ष्यत्वाभावे कल्पनीयम् । न तु जन्यत्वाभावेपि अतिप्रसङ्गाद्यभावा-
दिति ।

साम्प्रदायिकास्तु भावभिन्नत्वपदेन वास्तवात्यन्ताभावो ग्राह्यः । ननु घटध्वंसो ध्वसत्वादित्यादावतिव्याप्तिरभावप्रतियोगिताकाभावमात्रस्याधिकरणस्वरूपतया घटात्यन्ताभावादिवृत्तेर्घटध्वंसत्वाभावस्य घटात्यन्ताभावस्वरूपस्य घटध्वंसत्वादिरूपसाध्यसामानाधिकरण्यादिति जगदीशः । ननु घटात्यन्ताभावनिष्ठस्य घटध्वंसत्वाभावस्य वास्तवात्यन्ताभावतया साध्यसामानाधिकरण्येपि तादृशरीत्या जन्यत्वाभावनिष्ठस्य घटध्वंसत्वाभावस्य तत्स्वरूपतया तस्यापि यावदन्तर्गतत्वेन साध्यसामानाधिकरण्यासम्भवात् कथमतिव्याप्तिसङ्गतिरिति चेदत्र केचित् जन्यत्वाभावाज्ञानदशायामेव तदुत्थापनसम्भवादन्यथा घटध्वंसत्वप्रकारकप्रमाविशेष्यत्वाभावादेरुपस्थितिसम्भवात् तादृशग्रन्थानवतारप्रसङ्गादित्याहुः । यत्तु ध्वंसादिनिष्ठजन्यत्वस्य स्वरूपसम्बन्धात्मकस्य घटध्वंसरूपतया तदभावस्याभावप्रतियोगिकत्वेन घटाभावादिरूपाधिकरणस्वरूपतया तस्यापि साध्यसामानाधिकरण्यादतिव्याप्तिसङ्गतिरित्याहुः । तत्तुच्छम् जन्यत्वं नास्तीतिप्रतीतिसिद्धाभावात्मकसाध्याभावे साध्यसामानाधिकरण्याभावादिति । न चात्रापि जन्यत्वं नास्तीति प्रतीतिसिद्धाभावस्यापि ध्वंसवृत्तिजन्यत्वप्रतियोगिकतया सोपि घटात्यन्ताभावादिरूपाधिकरणस्वरूप एव तदात्मकसाध्याभावे सामानाधिकरण्यसत्त्वादतिव्याप्तिसङ्गतिरिति वाच्यम् अभावमात्रप्रतियोगिकाभावमात्रस्यैवाधिकरणस्वरूपत्वं न तु भावाभावोभयप्रतियोगिकस्यापि तथात्वं कल्प्यते अन्यथा घटात्यन्ताभावस्यापि पूर्वक्षणवृत्तित्वाविशिष्टघटाभावाभावप्रतियोगिकतया तस्याप्यधिकरणस्वरूपताप्रसङ्गः न चेष्टापत्ति अभावमात्रस्यैवाभेदप्रसङ्गात् तत्रापीष्टापत्तौ महानुभवविरोधः । धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटध्वंसत्वत्वावच्छिन्नाभावस्य द्रव्यत्वाभावनिष्ठस्यापि तुल्ययुक्त्या द्रव्यत्वाभावात्मकतया वह्निसामानाधिकरण्याभावेन वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे घटध्वंसो ध्वंसत्वादित्यत्रातिव्याप्तिपर्यन्तानुधावनस्य सन्दर्भविरोधापत्तेरित्यन्तेनाव्याप्तिदानासङ्गतेः । अभावमात्रस्यैवाभावप्रतियोगिकत्वेनाधिकरणस्वरूपतयाऽत्यन्ताभावस्याभिद्धत्वे-

नासम्भवस्यैव सम्भवादिति । वस्तुतस्तु नित्यप्रतियोगिकत्वघट-ध्वंसत्वैतदन्यतरस्य साध्यतायां ध्वंसत्वादिहेतावतिव्याप्तिः जन्यत्वाभावे तादृशान्यतरत्वावच्छिन्नसामानाधिकरण्यसत्त्वेन तमादायातिव्याप्तिवारणस्यावश्यकत्वात् तस्यैव ग्रहणे तात्पर्यमित्यवधेयम् ॥

नव्यास्तु भावेन भिन्न प्रतियोगिविधया सम्भिन्न भावमात्रप्रतियोगिक इति यावत् तेन स्नेहवत्त्वसमानाधिकरणस्य हिमावृत्त्यभावस्वरूपाभावस्य प्रतियोगितावच्छेदकं यद्धिमावृत्तेरभावत्वं तदवच्छिन्नप्रतियोगिताकस्य यावद्धिमावृत्त्यन्तर्गतस्य जलत्वाभावस्य साध्यासमानाधिकरणत्वेपि इदं जलं स्नेहवत्त्वादित्यत्र नाव्याप्तिः हिमावृत्तेरभावत्वस्य भाव इवाभावेऽपि सत्त्वात् तदवच्छिन्नाभावस्य भावमात्रप्रतियोगिकत्वाभावादिति जगदीशः । ननु भावमात्रप्रतियोगिकत्वं न भावेतराप्रतियोगिकत्वं साधनसमानाधिकरणस्य घटाभावस्यापि पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावप्रतियोगिकतया भावेतरप्रतियोगिकत्वाल्लक्षणघटकत्वानुपपत्तेः । किन्तु भावमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वं तथा च घटाभावस्य भावमात्रवृत्तिधर्मघटत्वावच्छिन्नप्रतियोगिकत्वाल्लक्षणलघटकत्वोपपत्तिरिति । अत्रेयमापत्तिः ननु हिमावृत्तेरभावः यदि हिमत्वस्वरूपः तदा कथमभावेऽपि सत्त्वमित्युक्तम् यद्यतिरिक्तस्तदा कथम्भावे सत्त्वम् उभयथैव हिमावृत्तेरभावत्वस्य भाव इवाभावेपि सत्त्वादित्यादिग्रन्थासङ्गतेः एवं रूपसामान्याभावप्रकारकप्रमाविशेष्यत्वाभावस्यापि भावमात्रवृत्तिविशेष्यतात्वधर्मावच्छिन्नप्रतियोगिताकतया तस्य निखिलरूपस्वरूपस्य जलत्वसामानाधिकरण्यविरहादिदं जलं स्नेहवत्त्वादित्यत्राव्याप्तिः सुदृढैवेति । यदि रूपसामान्याभावप्रकारकप्रमाविशेष्यत्वाभावो न रूपस्वरूपस्तदा द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य द्रव्यत्वानतिरिक्तत्वादिति ग्रन्थासङ्गतिरिति । अेवं हिमावृत्त्यभावत्वं हिमवृत्तियावत्पदार्थ एव कल्पनीयं तादृशव्यवहारात् तथा च हिमवृत्तिजलत्वाभावप्रतियोगिकत्वेन भावमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वाभावान्न तमादायाव्याप्तिरिति ध्येयम् ॥

यावत् यत्समानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिताकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वमिति मूलम् । साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियो-

गिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभावक-त्वमर्थः केवलान्वयिस्थले चाकाशादिरेव तथा विधोऽभावः प्रसिद्ध इति सम्प्रदाय इति दीधितिकारः । अत एव वह्निमान् धूमादित्यादावव्याप्तिः साध्यव्यापकस्य ह्रदवृत्तित्वविशिष्टद्रव्यत्वाभावस्य योऽभावो द्रव्यत्वादिस्तत्र हेतुसामानाधिकरण्यस्यैव सत्त्वादित्यस्वरसः सम्प्रदाय इत्यनेन सूचित इति जगदीश । अत्रेयमनुपपत्तिः । ह्रदवृत्तित्वविशिष्टद्रव्यत्वाभावत्वस्य साध्यव्यापकतावच्छेदकत्वमेव न सम्भवति कुतोऽव्याप्तिः ह्रदवृत्तित्वविशिष्टद्रव्यत्वाभावस्य तादृशविशिष्टद्रव्यत्वस्वरूपतया तत्प्रतियोगितावच्छेदकत्वादिति चेन्न तद्घटभिन्नं द्रव्यत्वादित्वादावतिव्याप्तिवारणाय व्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकतया ऽव्याप्तिसङ्गतेरिति । यद्यपि तद्घटभेदाभावस्य तद्घटत्वात्मकतया लक्षणघटकत्वेपि साध्यव्यापकतावच्छेदकीभूतं यद्घटाभिन्नत्वतद्घटत्वप्रकारकयत्किञ्चितजन्यज्ञानविशेष्यत्वैतदन्यतरत्वं तदवच्छिन्नाभावे साधनसामानाधिकरण्याभावासत्त्वेन तत्रातिव्याप्त्यसम्भवादिदमयुक्तम् तथापि तस्यापि कालिकादिसम्बन्धेन साध्यसमानाधिकरणतया तादृशसाध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकगगनाभावत्वावच्छिन्नाभावस्य गगनात्मकतया तादृशयावदभाव एव साधनसामानाधिकरण्याभावसत्त्वेनातिव्याप्तिभिया तन्निवेशस्यावश्यकत्वादिति । न च तथापि स्वप्रतियोगिमत्ताग्रहविरोधिताघटघटकसम्बन्धेनाभावस्य साध्यसामानाधिकरण्याभावसत्त्वेनातिव्याप्तिरिति वाच्यम् । तावतापि कालिकसम्बन्धस्य व्यावर्तयितुमशक्यत्वात् कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावाभावस्य स्वात्मकतया स्वप्रतियोगितावच्छेदकीभूतकालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावत्वावच्छिन्नवत्त्वग्रहविरोधिताघटकसम्बन्धत्वस्य कालिकेपि सत्त्वात् व्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशापेक्षया स्वप्रतियोगिमत्ताग्रहाविरोधिताघटकसम्बन्धेनाभावे वृत्तित्वनिवेशस्य गुरुतायाश्चक्रवर्त्तिलक्षणव्याख्यानप्रस्तावे स्वयमुक्तत्वाच्च । न च व्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशे संयोगाभावमादायासम्भवः स्यादिति वाच्यम् साध्यव्यापकतावच्छेदकावच्छिन्नाभावस्य व्याप्यवृत्तित्वेन विशेषणीयत्वात् । केचित्तु स-

म्प्रदायविदो मते ऽभावप्रतियोगिकाभावस्याधिकरणस्वरूपतया घटाभावभिन्नमभावत्वादित्यादावतिव्याप्तिभिया साध्याधिकरणवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकीभूतधर्मावच्छिन्नाभावे साधनसामानाधिकरण्याभावस्य विवक्षणीयतयोक्तस्थलेऽव्याप्तिसङ्गतिरित्याहुः । तन्मन्दम् घटाभावभिन्नत्वाभावस्याभावप्रतियोगिकस्य घटाद्यभावस्वरूपत्वेपि साध्यवत्त्वप्रकारकप्रमाविशेष्यत्वाभावस्याभावाप्रतियोगिकस्यातिरिक्ततया तमादायातिव्याप्तिवारणसम्भवात् तन्निवेशस्य वैयर्थ्यापत्तेरिति ध्येयम् ॥

केचित्तु तादृशयावदभावशून्यत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थः न च तादृशप्रतियोगितानवच्छेदकवन्तमेव यावत्त्वेन विशिष्य यावत्तादृशाश्रयत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थलाभादेव सामञ्जस्येऽभावद्वयोपादानमनतिप्रयोजनकमिति वाच्यम् । तादृशानां यावतामिन्धनादीनामैकाधिकरण्याप्रसिद्धेरिति शिरोमणिः । एकाधिकरणस्येति तेषां प्रत्येकाश्रयत्वप्रवेशे तु तादृशतत्तद्वह्निमत्त्वस्य धूमाव्यापकत्वादव्याप्तिरसम्भवो वेति भाव इति जगदीशः । तस्यायमाशयः साध्यताघटकसम्बन्धेन व्यापकत्वनिवेशे विषयितासम्बन्धेन घटस्य साध्यतायां तज्ज्ञानत्वादिहेतौ लक्षणगमनादव्याप्तिः । तदनिवेशे चासम्भवो बोध्यः । केचित्तु साध्याधिकरणवृत्तित्वेन तादृशानवच्छेदकवतो विशेषणीयत्वं तु शब्दवान् गगनत्वादित्याद्येकव्यक्तिवृत्तिसाध्यकस्थले लक्षणगमनादव्याप्तिः । तदनभिप्राये त्वसम्भव इत्याहुः ॥

नीलधूमत्वादेर्वारणीयत्वे तु स्वसमानाधिकरणतादृशधर्मान्तराघटितत्वेन निवेशनीयम् । सामानाधिकरण्योपादानाद्धूमप्रागभावत्वादिसङ्ग्रह इति शिरोमणिः । वस्तुतः स्वमते नीलधूमत्वमपि व्याप्तिरेवातो वारणीयत्वे त्वित्युक्तम् । द्रव्यं विशिष्टसत्त्वादित्यादौ विशिष्टसत्तात्वस्य स्वसमानाधिकरणं यद्गुणान्यत्वं धर्मान्तरं तद्घटितत्वादव्याप्तिरतस्तादृशपदम् । स्वाधिकरणवृत्तित्वं च हेतुतावच्छेदकताघटकसम्बन्धेन वृत्तित्वं बोध्यम् न तु तेनैव सम्बन्धेन तथा सति धूमत्वप्रकारकप्रमाविशेष्यत्वादेस्तथापत्तेरिति जगदीशः । स्वानवच्छिन्नप्रकारतावच्छेदकस्वसमानाधिकरणसाध्यसम्बन्धितावच्छेदकं यद्रूपं तदनवच्छिन्नप्रकारताव-

च्छेदकमिति समुदितार्थः । अथात्र वाच्यं ज्ञेयात् प्रमेयाद्वेत्यत्राव्याप्तिः । तत्र स्वानवच्छिन्नप्रकारतावच्छेदकस्वसमानाधिकरणपदेन स्वव्यापकत्वस्योक्तत्वात् तथा च ज्ञानत्वस्य प्रमेयत्वज्ञेयत्वाव्यापकतया तद्घटितत्वेपि नाव्याप्तिः । न चैवं वह्निमान् धूमवदन्याससंयुक्तत्वविशिष्टसंयुक्तप्रागभावादित्यादावव्याप्तिः । तादृशप्रागभावत्वसमानाधिकरणं तादृशं यद्धूमवदन्यासंयुक्तत्वं तद्घटितत्वादिति वाच्यम् धूमवदन्यासंयुक्तत्वस्य वाच्यत्वादिसाधारणतया तादृशत्वाभावात् संयोगादिसम्बन्धावच्छिन्नव्याप्यतायाः अवच्छेदकत्वेपि हेतुताघटकसम्बन्धावच्छिन्नव्याप्यतावच्छेदकत्वस्यैव लक्षणे निवेश्यत्वादिति । धूमप्रागभावादिहेतुकेऽव्याप्तिवारकस्वसमानाधिकरणपदव्यावृत्तेर्धूमविशिष्टरासभादावव्याप्तिवारकत्वेन स्वयमेव वक्ष्यमाणत्वादिति । न च तथापि सामानाधिकरण्यपदं व्यर्थं धूमविशिष्टरासभत्वाद स्वसमानाधिकरणतादृशधर्मान्तरधूमेन घटिततया व्याप्यतानवच्छेदकत्वादिति वाच्यम् । आदिपदेन धूमप्रागभावध्वंसत्वादेः संग्राह्यतया तत्राव्याप्तिवारकत्वेनैव तत्सार्थक्यादिति । धूमादौ धूमात्यन्ताभावाभावत्वस्वीकारमते धूमात्यन्ताभावाभावत्वस्य धूमत्वप्रकारकप्रमाविशेष्यत्ववन्नेष्यत एव व्याप्यतावच्छेदकत्वम् । अथ द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिवारणप्रयोजनकतादृशपदं व्यर्थं विशेषणतासमवायघटितसामानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्वस्यैव व्याप्यतावच्छेदकत्वादिति चेन्न द्रव्यं गुणकर्मान्यत्वविशिष्टादित्यादौ गुणकर्मान्यत्वस्य स्वसमानाधिकरणस्वानवच्छिन्नप्रकारतावच्छेदकीभूतेन गुणान्यत्वेन कर्मान्यत्वेन च घटितत्वात् । अथ स्वानवच्छिन्नप्रकारतावच्छेदकीभूतधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वं व्याप्तिरित्यत्र स्वानवच्छिन्नप्रकारतावच्छेदकधर्मनिष्ठावच्छेदकत्वं यत्सम्बन्धेन सामानाधिकरण्यं तत्सम्बन्धेन ग्राह्यम् अन्यथा धूमत्वस्यापि व्याप्यतावच्छेदकताघटकयत्किञ्चित्सम्बन्धेन स्वसमानाधिकरणत्वात् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य सर्वास्मन्नसत्त्वात् वह्निमान् धूमप्रागभावादित्यादावव्याप्तिः । तथा च वह्निमान् धूमत्वप्रकारकप्रमाविशेष्यादित्यादौ समवायेन तादृशप्रमाविशेष्यत्वसमानाधिकरणधूमत्वस्याधेयतासम्ब-

न्धेन एव स्वघटकत्वात् धूमत्वप्रकारकप्रमाविशेष्यत्वस्य व्याप्तित्वापत्तिरितिचेन्न आधेयतासम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वे व्याप्तित्वस्येष्टत्वादिति ॥

न चैवं हेतुतावच्छेदकताघटकसम्बन्धेन स्वाधिकरणवृत्तित्वोक्तौ धूमत्वप्रकारकप्रमाविशेष्यादित्यादावतिव्याप्तिरिति जगदीशग्रन्थविरोध इति वाच्यम् विषयितासम्बन्धेन धूमविशिष्टप्रमाविशेष्यत्वे व्याप्तित्वास्वीकारात् तादृशप्रमाविशेष्यत्वेऽतिव्याप्तिपरतयैव तद्ग्रन्थसङ्गतेरित्यादिकं सुधीभिरालोचनीयमिति व्यर्थत्वं च स्वसमानाधिकरणतादृशधर्मान्तरघटितघटकत्वे सति स्वसमानाधिकरणतादृशधर्मान्तराघटकत्वम् । स्वपदं व्यर्थविशेषणघटितधर्मपरं घटकत्वं च स्वावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकतत्कत्वं तत्पदं घटितपरम् ॥ ० ॥

उभयत्रैव हेतुतावच्छेदकसम्बन्धेनावर्तमानस्योक्तौ इदमेतद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तिः स्यादत आह येन येनेति जगदीशः । ननु वाच्यं तादात्म्यसम्बन्धेन प्रमेयादित्यादौ हेतुतावच्छेदकतादात्म्येन साध्याधिकरणावृत्तित्वाभावाप्रसिद्धाऽव्याप्तिसम्भवे कथमतिव्याप्तिदानमिति चेदत्र केचित् १ ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशकृतं विशेषव्याप्तिजागदीशीकोडपत्रम् ।

१ अत्र कश्चिदंशो निपतित आदर्शपुस्तकेष्विति प्रतिभाति ।

अथ व्याप्त्यनुगमजागदीश्याः
कालीशङ्करविरचितं क्रोडपत्त्रम् ।

---

प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबुद्धीनां कारणत्वं दीधितिकारसम्मतम् । तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वं यदि तादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमात्रं तदा वह्नित्वं तादृशाभावप्रतियोगितावच्छेदकं भूतलं च घटवत् इतितादृशसमूहालम्बनग्रहनिष्ठभूतलधर्मिकघटप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिनो भूतलं घटाभाववदिति ग्रहस्यापि अनुमितिकारणतापत्तिरतस्तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमेव तादृशविरोधितान्तपदेन जगदीशेन विवक्षितम् । तथा च भूतलविशेष्यित्वावच्छिन्नघटप्रकारिता न तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापिका किन्तु तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारितैव तदवच्छिन्नत्वं च न भूतलधर्मिकघटप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायामतो घटाभाववद्भूतलमिति ज्ञानस्य नानुमितिकारणत्वम् । ननु भूतलधर्मिकघटप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यताया अवच्छेदकत्वस्य तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारित्वे विरहात् तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशेऽपि भूतलं घटाभाववदिति ज्ञानवारणसम्भवात् तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नत्वनिवेशनमफलम् न च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशे हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबुद्धेरसङ्ग्रहापत्तिः तन्नि-

श्चयप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेनैवावच्छेद्यतया तत्प्रतिबध्यतावच्छेदककोटौ प्रतियोगिवैयधिकरण्यविषयताया अनिवेशादिति वाच्यम्। यतः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वावच्छिन्नताहशप्रकारितानिष्ठावच्छेदकताकत्वं न प्रतिबध्यतायां निवेश्यते किन्तु प्रतियोगिव्याधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितानिष्ठावच्छेदकताकत्वमेव तथा च नीलघटवद्भूतलमितिज्ञानीयनीलघटत्वावच्छिन्ननिरूपितप्रकारिता यथा घटत्वावच्छिन्ननिरूपितप्रकारितात्वेन घटसामान्याभाववानिति निश्चयप्रतिबध्यतावच्छेदिका अत एवोक्तमवगाहते च नीलघटवत्ताबुद्धिरपि घटत्वविशिष्टतद्वत्तामिति तथा प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेन हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति निश्चयप्रतिबध्यतावच्छेदिका इति ताहशाभावप्रतियोगितावच्छेदकत्वप्रकारितानिष्ठावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकताकत्वं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञाने ऽप्यस्तीति न तदसङ्ग्रहः तथा च जगदीशेन कुतस्ताहशप्रकारिताव्यापकत्वनिवेशनं कृतमिति।

अत्रोच्यते। प्रकारित्वं नातिरिक्तपदार्थः किन्तु स्वरूपसम्बन्धविशेष एव तथा च स्वरूपसम्बन्धात्मिका प्रतियोगिता यथा प्रतियोगिस्वरूपा तथा प्रकारिता ज्ञानस्वरूपा एव तथा च ताहशाभावप्रतियोगितावच्छेदकं भूतलं च घटवदिति समूहालम्बनज्ञानीयघटप्रकारित्वं ताहशाभावप्रतियोगितावच्छेदकत्वप्रकारित्वं च तज्ज्ञानस्वरूपमेव अत एव ज्ञानभेदेन भिन्नानां सर्वासामेव विषयितानामित्यादिग्रन्थोऽपि सङ्गच्छते तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्मकताहशज्ञानीयघटप्रकारित्वावच्छिन्नप्रतिबध्यताया अपि ताहशाभावप्रतियोगितावच्छेदकत्वप्रकारितावच्छिन्नतया तन्निरूपितप्रतिबन्धकताशालिनो भूतलं घटाभाववदितिज्ञानस्य वारणमशक्यमेव। यदि च ताहशाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वावच्छिन्नप्रकारितानिष्ठावच्छेदकताकत्वं प्र-

तिवध्यतायां निवेश्यमतो न दोषः । तथाहि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताया ज्ञानस्वरूपघटप्रकारितास्वरूपत्वेऽपि भूतलं घटाभाववदिति निश्चयनिरूपितप्रतिवध्यतायां निवेशादेव घटाभाववद्भूतलमिति ज्ञानवारणसम्भव इत्युच्यते तदा हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वमिति ज्ञानस्य तु संग्रहापत्तेः तादृशनिश्चयनिरूपितप्रतिवध्यतायाः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेन तादृशप्रकारितानवच्छिन्नत्वात् प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकत्वप्रवेशे तु भूतलधर्मिकघटप्रकारितायास्तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकत्वाविरहादेव न घटाभाववदिति ज्ञानादनुमितिप्रसङ्गः ।

वस्तुतस्तु समानप्रकारकज्ञानीयविषयिताया ऐक्यमते प्रकारिताया ज्ञानानात्मकत्वात् तन्मते प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकत्वं प्रकारितायामवश्यं निवेशनीयम् । अन्यथा प्रतियोगिव्यधिकरणमहानसीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताया अपि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वात् तादृशप्रकारित्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकताशालितादृशाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति-ज्ञानादनुमित्यापत्तिः एवं प्रकारेणैव धूमसमानाधिकरणमहानसवृत्त्यभावप्रतियोगितानवच्छेदकं वह्नित्वं धूमसमानाधिकरणघटाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादप्यनुमितिप्रसङ्गः प्रकारितायां तादृशावच्छेदकत्वप्रकारिताव्यापकत्वप्रवेशे च प्रतियोगिव्यधिकरणमहानसीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वादेर्धूमादौ महानसीयत्वाद्यनवगाहिवह्नित्वं प्रतियोगिव्यधिकरणधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति ज्ञानेऽसत्त्वान्न तादृशप्रकारित्वादेः प्रतियोगिव्यधिकरणधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकत्वं न च प्रतियोगिव्यधिकरणधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रकारतानिरूपकत्वावच्छिन्नप्र-

तिवध्यत्वनिवेशेनैव उक्तदोषवारणसम्भवे व्यापकत्वपर्यन्तानुधावनं विफलं प्रतियोगिव्यधिकरणमहानसीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वप्रकारतावच्छेदकताया अवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वस्वीकारमते महानसाद्यन्तर्भावेनैव पर्याप्तत्वादिति वाच्यम् । यतो हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वपर्याप्तावच्छेदकताकत्वस्य प्रकारितायां निवेशे ऽवृत्तिगगनादिहेतुकस्थले गगनाधिकरणाप्रसिद्ध्या गगनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्याप्रसिद्धतया तत्पर्याप्तावच्छेदकताकत्वस्य प्रकारितायां विरहात् गगनहेतुकानुमित्यनुपपत्तिरतो हेतुतावच्छेदकपर्याप्तावछेदकताकविषयतानिरूपिताधिकरणत्वपर्याप्तावच्छेदकताकविषयतानिरूपितवृत्तित्वत्वपर्याप्तावच्छेदकताकविषयतानिरूपितइत्यादिक्रमेण प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वघटकसकलपदार्थविषयतावच्छेदकतायां पर्याप्तिर्निवेशनीया तत्पर्याप्तावच्छेदकताकत्वं च जगदीशमते तत्तन्निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावविषयतायां च प्रतियोगिवैयधिकरण्यनिष्ठावच्छेदकताभिन्ना सती हेतुसामानाधिकरण्यनिष्ठावच्छेदकताभिन्ना सती अभावत्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तदनिरूपकत्वमेव निवेशनीयम् । एवं च प्रत्येकपदार्थविषयतावच्छेदकतापर्याप्तिनिवेशे महागौरवम् । अतस्तादृशप्रकारिताव्यापकत्वस्य प्रकारितायां निवेशः । ननु साध्यतावच्छेदकविशिष्यत्वावच्छिन्नप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताया समानाकारकज्ञानीयकविषयतामतेऽपि निरूपकभेदेन निरूपकतावच्छेदकभेदेन च भिन्नतया धूमत्वादिना पर्वतीयधूमावगाहिप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावगाहिज्ञाने धूमत्वादिना महानसीयधूमावगाहितादृशज्ञाने प्रतियोगिव्यधिकरणमहानसीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमितिज्ञाने च प्रतियोगिव्यधिकरणधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिरूपितैकप्रकारित्वाभावात् कस्या अपि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताया न प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभाव-

प्रतियोगितावच्छेदकत्वप्रकारितावन्निष्ठाभावप्रतियोगित्वाभावरूपव्यापकत्वं सम्भवति तादृशयत्किञ्चित्प्रकारितावन्निष्ठाभावप्रतियोगित्वाभावरूपव्यापकत्वनिवेशे च प्रतियोगिव्यधिकरणमहानसीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादप्यनुमित्यापत्तिरेव ज्ञानभेदेन विषयिताभेदाभ्युपगमे तु तादृशप्रकारितासामान्यव्यापकत्वं सुतरामेव न सम्भवति तन्मते यत्किञ्चित्प्रकारिताव्यापकत्वनिवेशे च घटाभाववद्भूतलमित्यादिज्ञानादप्यनुमित्यापत्तिरिति चेन्न। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितावन्निष्ठाभावप्रतियोगितानवच्छेदकरूपपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकताकत्वस्य प्रतिबध्यतायां निवेशान्न कोऽपि दोष । तथाहि महानसीयधूमत्वावच्छिन्नविषयतानिरूपिताधिकरणत्वावच्छिन्नविषयतानिरूपितवृत्तित्वत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितप्रतियोगितात्वावच्छिन्नविषयतानिरूपितावच्छेदकतात्वावच्छिन्नविषयतानिरूपकत्वमेव महानसीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति निश्चयनिरूपितप्रतिबध्यताया अवच्छेदकं प्रकारतानिरूपकत्वस्वरूपप्रकारित्वनिष्ठावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं च रूपं न प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकं प्रतियोगिव्यधिकरणधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञाने महानसीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वं नास्तीति प्रतीते । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकं च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वं च तयोश्च न महानसीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमितिज्ञानीयप्रतिबध्यताया यत्प्रकारितानिष्ठावच्छेदकत्वं तदवच्छेदकतापर्याप्त्यधिकरणत्वं महानसीयत्वान्तर्भावेणैव तदवच्छेदकतापर्याप्तेः निरुक्तव्यापकतावच्छेदकयोस्तयो. प्रत्येकमादाय हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वं प्रतियोगिव्यधिकरणतादृशाभावप्रतियोगि-

तानवच्छेदकं वह्नित्वमिति ज्ञानयोः संग्रहः ॥ ० ॥

अथवा साध्यतावच्छेदकविशेष्यित्वावच्छिन्नप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकत्वं प्रतिबध्यतायां निवेशनीयम् । व्यापकत्वं च स्वावच्छेदकीभूतप्रकारित्वसम्बन्धेन स्वं प्रतिबध्यत्वम् । एतल्लाभार्थमेव तादृशावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नत्वं प्रतिबध्यतायां दत्तम् । न च स्वरूपसम्बन्धावच्छिन्नतादृशप्रकारिताव्यापकत्वनिवेशेनैव घटाभाववद्भूतलमिति ज्ञानवारणसम्भवात् प्रतिबध्यतायां स्वावच्छेदकीभूतप्रकारित्वसम्बन्धावच्छिन्नतादृशव्यापकत्वनिवेशनमफलमिति वाच्यम् । प्रतिबध्यताया प्रतिबध्यीभूतज्ञानभेदेन नानात्वे कस्याश्चिदपि प्रतिबध्यतायाः स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकत्वासम्भवात् न च प्रतिबध्यतायाः प्रतिबध्यभेदेन नानात्वे तज्ज्ञानीयप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताया एव तज्ज्ञाननिष्ठप्रतिबध्यतावच्छेदकत्वं न तु ज्ञानान्तरीयप्रकारतायास्तस्यास्तत्प्रतिबध्यताव्यधिकरणत्वात् तथा च ज्ञानान्तरसाधारणप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकत्वं स्वावच्छेदकीभूतप्रकारित्वसम्बन्धेनापि प्रतिबध्यतायामप्रसिद्धमिति वाच्यं प्रतिबध्यभेदेन प्रतिबध्यताया नानात्वेऽपि प्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेनानुगतधर्मेण सर्वासामेव प्रकारितानां प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नसकलप्रतिबध्यतावच्छेदकत्वात् अत एव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकज्ञाननिष्ठाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायामवच्छेदकत्वस्यापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानीयप्रकारितायामभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेन सत्त्वात् अभावप्रतियोगितानवच्छेदकं वह्नित्वमितिज्ञानवारणाय हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेनाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादप्यनुमित्यापत्तिर्वारिता जगदी-

शेन । न च तादृशग्रन्थ प्रतिबध्यभेदेपि एकधर्मावच्छिन्नप्रतिबध्यताया ऐक्यमिति मतेनेति वाच्यम् । तथा सति प्रतिबध्यतायां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानावृत्तित्वनिवेशेनैवोपपत्तौ तादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वस्य निष्फलत्वापत्तेः न च तथापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताभिन्नप्रकारित्वानवच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेनैवाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यभावो न हेतुसमानाधिकरण इति ज्ञानवारणसम्भवः वह्नित्वधर्मिकाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायाः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताभिन्नयाऽभावप्रतियोगितावच्छेदकत्वप्रकारितयाप्यवच्छेदात् अभावधर्मिकहेतुसामानाधिकरण्यप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायाश्च तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताभिन्नया अभावो हेतुसमानाधिकरणइति ज्ञानीयहेतुसामानाधिकरण्यप्रकारितयाऽवच्छेदात् तथा च कथं तदुपेक्ष्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वं प्रतिबध्यतायां निवेशितमिति वाच्यम् सर्मानियतनानाधर्मावच्छिन्नप्रतियोगिताया ऐक्यवत् समनियतनानाधर्मावच्छिन्नप्रतिबध्यताया ऐक्यमिति मते साध्यतावच्छेदकविशेष्यत्वावच्छिन्नहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नप्रतिबध्यता तादृशप्रकारित्वभिन्नसाध्यतावच्छेदकविशेष्यित्वावच्छिन्नावच्छेदकत्वप्रकारित्वावच्छिन्नहेतुसमानाधिकरणाभावप्रतियोगित्वप्रकारित्वादिभिरप्यवच्छिन्नतया तादृशावच्छेदकत्वप्रकारिताभिन्नप्रकारित्वानवच्छिन्नप्रतिबध्यत्वाप्रसिद्धेरतस्तादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वं प्रतिबध्यतायां निवेशितम् तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमितिज्ञानीयाया कस्याश्चिदपि प्रकारिताया हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तित्वविरहात् तादृशप्रकारिताशून्यज्ञानवृत्ति अभावप्रतियोगितावच्छेदकं वह्नित्वमितिज्ञानीयप्रकारिताभिरनवच्छिन्नां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वबुद्धित्वावच्छिन्नप्रतिबध्यतामादाय तादृशाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञान-

संग्रहः ॥

ननु तथापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वत्वावच्छिन्नप्रकारितानिष्ठावच्छेदकताकत्वस्य प्रतिबध्यतायां निवेशेनैवाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानव्युदाससम्भवात् तज्ज्ञानीयाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यताया अभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेनैव प्रकारित्वावच्छिन्नत्वात् न च धूमत्वादिना वाष्पाद्यवगाहिधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानस्यापि तादृशानवच्छेदकं वह्नित्वमितिज्ञानप्रतिबध्यतया हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वत्वावच्छिन्नप्रकारितानिष्ठावच्छेदकतात्वं न तादृशप्रतिबध्यतायां सम्भवतीति वाच्यम् हेतुतावच्छेदकावच्छिन्नविषयतानिरूपिताधिकरणत्वावच्छिन्नविषयतानिरूपितवृत्तित्वत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितप्रतियोगितात्वावच्छिन्नविषयतानिरूपितावच्छेदकत्वत्वावच्छिन्नविषयतानिरूपकत्वत्वावच्छिन्नप्रकारतानिरूपकत्वरूपप्रकारितानिष्ठावच्छेदकताकत्वस्य प्रतिबध्यतायां निवेशादिति चेदत्र ब्रूमः यत्र स्थलविशेषे प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकवह्नित्वमिति ज्ञाने हेतुतावच्छेदकरूपेण न कस्यापि धर्मस्य भ्रमः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकमिति ज्ञानं च हेतुतावच्छेदकप्रकारेण पदार्थान्तरभ्रमः तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमितिज्ञानीयप्रतिबध्यतावच्छेदकता प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेनैव न तु परस्परनिरूप्यनिरूपकभावापन्नविषयतात्वेनैव हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति ज्ञानीयप्रतिबध्यतावच्छेदकता च परस्परनिरूप्यनिरूपकभावापन्नविषयतात्वेन अन्यथा तादृशभ्रमस्य प्रतिबध्यत्वानुपपत्तेः। तथा चाखण्डहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकत्वस्य निवेशे हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति ज्ञानासंग्रहः । परस्परनिरूप्यनिरूपकभावापन्नविपयतात्वावच्छिन्नावच्छेदकताकत्वस्य निवेशे तु प्रतियोगिव्य-

धिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमितिज्ञानासंग्रहः । तादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वस्य प्रतिबध्यतायां निवेशे तु तादृशस्थलविशेषेपि तदुभयोः संग्रह इति जगदीशतात्पर्यावधारणात् ॥

ननु प्रतियोगितानवच्छेदकवह्नित्वाश्रयवान् धूमादित्यादौ प्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्नधर्मिकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहस्याहार्यतया तन्निरूपितप्रतिबन्धकत्वाप्रसिद्ध्या साध्यतावच्छेदकधर्मिकतादृशविरोधित्वेनानुगमासम्भवात् अतः प्रतिबध्यीभूतज्ञाने साध्यतावच्छेदकधर्मिकत्वं परित्यज्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहप्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्नसाध्यतावच्छेदकविशेष्यिताकज्ञानत्वेन जगदीशेनानुगमः कृतः । अत्र यदि तादृशग्रहप्रतिबन्धकत्वं तादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतामात्रं तदा वह्नित्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वं च घटवदिति समूहालम्बनज्ञाननिष्ठवह्नित्वत्वावच्छिन्नधर्मिकघटप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतघटाभावप्रकारित्वावच्छिन्नवह्नित्वत्वावच्छिन्नविशेष्यताकज्ञानमादायातिप्रसङ्गः यदि च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तदा प्रतियोगिव्याधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारताशालिबुद्धित्वावच्छिन्नायाः कस्याश्चिदपि प्रतिबध्यतायाः तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकताकत्वासम्भवः। घटत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्व—तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वएतदुभयधर्मस्यैव पटत्वत्वावच्छिन्नधर्मिकतादृशाभावप्रतियोगितावच्छेदकत्वग्रहसाधारणतादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकत्वासम्भवात् यदि च यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकतादृशाभा-

वप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकताकत्वं प्रतिबध्यतायां निवेश्य घटत्वादिधर्मिकतादृशाभावप्रतियोगिताकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यता संगृहीतुं शक्यते तादृशप्रतिबध्यतानिरूपितप्रकारितानिष्ठावच्छेदकतावच्छेदकयोरुक्तधर्मयोर्घटत्वादिधर्मिकतादृशाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वव्यापकतावच्छेदकत्वादित्युच्यते तदा जातित्वसामानाधिकरण्येन घटत्वादिसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमवगाह्य जातिस्तादृशाभावप्रतियोगितानवच्छेदिकेति ज्ञानादपि जातिविशिष्टावच्छिन्नविधेयताकानुमितेरनुभवसिद्धतया तस्यापलापप्रसङ्गः। तथाहि जातित्वसामानाधिकरण्येन तादृशाभावप्रतियोगितावच्छेदकत्वग्रहस्य तादृशाभावप्रतियोगितानवच्छेदकत्वग्रहस्याप्रतिबध्यतया जातित्वव्यापकत्वविशिष्टतादृशाभावप्रतियोगितावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्न तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताशालिग्रहत्वमेव तादृशाभावप्रतियोगितानवच्छेदकत्वग्रहप्रतिबध्यतावच्छेदकं वक्तव्यं तथा च तादृशसम्बन्धावच्छिन्नत्वतादृशाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वयोर्जातित्वसामानाधिकरण्येन तादृशाभावप्रतियोगितावच्छेदकत्वग्रहसाधारणजातिस्वरूपयत्किञ्चिद्धर्मावच्छिन्नधर्मिकतादृशाभावप्रतियोगितावच्छेदकत्वग्रहत्वव्यापकतानवच्छेदात्। एतेन प्रतिबध्यीभूतज्ञाने यत्किञ्चिद्धर्मावच्छिन्नत्वमनिवेश्य तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यत्वनिष्ठावच्छेदकताकत्वमेव प्रतिबध्यतायां निवेश्यते तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नघटत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्यताया एव तादृशधर्माक्रान्ततया तमादायैवानुगमः कर्तव्यः विशेष्यतायां मुख्यत्वानिवेशे तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नप्रकारितात्मकवह्नित्वत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नवह्नित्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकवह्नित्ववदिति ज्ञानानिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालितादृशाभावप्रतियोगि-

तावच्छेदकवह्नित्वाभाववद् वह्नित्वमिति ज्ञानमादायातिप्रसङ्गः स्यादतः तन्निवेश इत्यपि निरस्तम् ॥

जातित्वसामानाधिकरण्येन तादृशाभावप्रतियोगितानवच्छेदकत्वग्रहप्रतिबध्यतावच्छेदककोटौ जातित्वव्यापकतादृशावच्छेदकत्वप्रकारिताया एव निवेशनीयतया तादृशप्रकारितात्वस्य जातित्वसामानाधिकरण्येन तादृशावच्छेदकत्वप्रकारकग्रहसाधारणतादृशप्रकारिताव्यापकतावच्छेदकत्वाभावात् । न च यत् किञ्चिद्धर्मव्यापकत्वविशिष्टतादृशावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकत्वस्य प्रकारितानिष्ठावच्छेदकतायां निवेशान्न जातित्वसामानाधिकरण्येन तादृशानवच्छेदकत्वग्रहस्यासंग्रहापत्तिरिति वाच्यम् । यत्किञ्चिद्धर्माधिकरणवृत्त्यभावप्रतियोगिनानवच्छेदकत्वव्यापकतावच्छेदकताघटकप्रतियोगितायां व्यापकतावच्छेदकतादितरोभयानवच्छिन्नत्वमवश्यं वाच्यम् । अन्यथा विशिष्टाभावादिकमादाय सर्वेषामेव धर्माणां यत्किञ्चिद्धर्माधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतया तदनवच्छेदकाप्रसिद्धेः । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वतादितरोभयधर्मानवच्छिन्नतादृशयत्किञ्चिद्धर्माधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकतादृशावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकस्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकत्वमेव प्रकारितानिष्ठावच्छेदकताया निवेशनीयम् । एवं सति तादृशावच्छेदकताकप्रतिबध्यतायां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वस्य निवेशेऽपि वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वसामान्याभावावगाहिवह्नित्वमभावप्रतियोगितानवच्छेदकमितिज्ञानमादायातिप्रसङ्गवारणं दुःशक्यमेवेति अभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नवह्नित्वत्वव्यापकताया अपि अभावप्रतियोगितावच्छेदकत्वत्वतदितरोभयधर्मानवच्छिन्नप्रतियोगिताघटिततया अभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नवह्नित्वत्वव्यापकतायाः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्ने वह्नित्वत्वव्यापकताभिन्नतया वह्नित्वत्वावच्छेदेन अभावप्र-

तियोगितावच्छेदकत्वग्रहं प्रति वह्नित्वत्वावच्छेदेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहं प्रति च पृथगेव वह्नित्वमभावप्रतियोगितानवच्छेदकमिति ग्रहस्य प्रतिबन्धकत्वं वाच्यं सामान्यधर्मावच्छिन्नव्यापकताती विशेषधर्मावच्छिन्नव्यापकताया भिन्नत्वं भट्टाचार्यस्यापि सम्मतम्। अत एव गुणत्वावच्छिन्नघटत्वव्यापकताया विशेषगुणत्वावच्छिन्नघटत्वव्यापकतातो भिन्नत्वमुक्तं सामान्यनिरुक्तौ। एवञ्च वह्नित्वत्वव्यापकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नताद्दशावच्छेदकत्वप्रकारताशालिबुद्धित्वावच्छिन्नाया अभावप्रतियोगितानवच्छेदकं वह्नित्वमितिज्ञाननिरूपितप्रतिबध्यताया अभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वस्य सत्त्वेन ताद्दशप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य अभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानेऽपि सत्त्वादिति। अत्रोच्यते स्वरूपसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपिता या हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका प्रकारिता तदवच्छिन्नप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्नसाध्यतावच्छेदकविशेष्यताकज्ञानत्वेनानुगमान्न कोऽपि दोषः। तथाहि वह्नित्वत्वसामानाधिकरण्येन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्न प्रति वह्नित्वत्वव्यापकत्वविशिष्टप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावप्रतियोगिकस्वरूपसम्बन्धेन ताद्दशावच्छेदकत्वसामान्याभावप्रकारिताशालिनिश्चयत्वेन एवं वह्नित्वत्वव्यापकत्वविशिष्टताद्दशाभावप्रतियोगितावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नताद्दशाभावप्रतियोगितावच्छेदकत्वप्रकारताशालिबुद्धित्वावच्छिन्नं प्र-

ति वह्नित्वत्वावच्छेदेन तादृशाभावप्रतियोगितानवच्छेदकत्वानिश्चयत्वेन वह्नित्वत्वसामानाधिकरण्येन तादृशाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वेन च तत्र स्वरूपसम्बन्धावच्छिन्नतादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकताकत्वं वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायामेव तन्निरूपितप्रतिबन्धकतावच्छेदकत्वञ्च वह्नित्वत्वव्यापकत्वविशिष्टतादृशावच्छेदकत्वाभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वाभावप्रकारितायामेव तदवच्छिन्ना च वह्नित्वत्वावच्छेदेन तादृशावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावनिश्चयवह्नित्वत्वावच्छेदेन तादृशाभावप्रतियोगितावच्छेदकत्वाभावनिश्चयसाधारणप्रतिबन्धकतापि तदवच्छेदकीभूता या वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावप्रकारिता तदवच्छिन्नसाध्यतावच्छेदकविशेष्यिताकज्ञानत्वस्य वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावनिश्चयेऽपि सत्त्वान्न वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावनिश्चयादनुमित्यनुपपत्तिः। अभावप्रतियोगितानवच्छेदकं वह्नित्वमितिज्ञाननिष्ठप्रतिबन्धकतानिरूपिता या वह्नित्वत्वव्यापकत्वविशिष्टतादृशावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यता सा न स्वरूपसम्बन्धेन वह्नित्वत्वव्यापकत्वावगाहिस्वरूपसम्बन्धावच्छिन्नप्रकारताशालिज्ञानसाधारणस्वरूपसम्बन्धावच्छिन्नतादृशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकताका किन्तु वह्नित्वत्वसामानाधिकरण्येन स्वरूपसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतैव तस्याश्च न हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वमिति नाभावप्रतियोगितानवच्छेदकं व-

ह्नित्वमिति ज्ञानसंग्रहः । न च प्रतियोगितानवच्छेदकवह्नित्वाश्रयवान् धूमादित्यादौ तादृशावच्छेदकत्वप्रकारकतादृशवह्नित्वत्वावच्छिन्नविशेष्यकानाहार्यज्ञानाप्रसिद्ध्या तादृशमुख्यविशेष्यित्वावच्छिन्नप्रतिबध्यता नोक्तानुगमकतावच्छेदकीभूतधर्मघटिका किन्तु तादृशावच्छेदकत्वप्रकारकघटत्वत्वावच्छिन्नविशेष्यकबुद्धित्वावाच्छिन्नप्रतिबध्यतैव तन्निरूपितप्रतिबन्धकतावच्छेदकीभूता या घटत्वत्वावच्छिन्नविशेष्यित्वावच्छिन्नतादृशावच्छेदकत्वाभावप्रकारिता तद्धर्मावच्छिन्नप्रतिबन्धकतावच्छेदकत्वमपि तादृशप्रकारितायामेव तदवच्छिन्नत्वस्य प्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्नविशेष्यितायामसत्त्वात् कथं प्रतियोगितानवच्छेदकं वह्नित्वं तादृशाभावप्रतियोगितानवच्छेदकमिति ज्ञानसंग्रह इति वाच्यम् घटत्वत्वावच्छिन्नधर्मिकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकग्रहं प्रति घटत्वत्वव्यापकत्वविशिष्टतादृशावच्छेदकत्वाभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वाभावप्रकारिताभिन्नप्रकारित्वानवच्छिन्नघटत्वत्वावच्छिन्नविशेष्यिताशालिज्ञानत्वेनैकप्रतिबन्धकता अपरा च घटत्वत्वावच्छेदेन तादृशावच्छेदकत्वप्रकारकबुद्धौ स्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वाभावप्रकारिताभिन्नप्रकारित्वानवच्छिन्नघटत्वत्वावच्छिन्नविशेष्यिताशालिज्ञानत्वेन । अत्र निरुक्तानुगमघटकमुख्यविशेष्यित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका घटत्वत्वावच्छेदेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितैव तदवच्छिन्ना या घटत्वत्वावच्छिन्नधर्मिकघटत्वत्वावच्छेदेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता तदवच्छेदकमुख्यविशेष्यितानिष्ठं यदवच्छेदकत्वं तदवच्छेदिका या अभावनिष्ठावच्छेदकता तदवच्छेदिका च यावच्छिन्नत्वानिष्ठावच्छेदकता तदवच्छेदिका या भिन्नत्वावच्छिन्नावच्छेदकता तन्निरूपिका या प्रतियोगित्वसंसर्गावच्छिन्नप्रकारितानिष्ठावच्छेदकता तादृशावच्छेदकत्वरूपपरम्परया प्रतिबन्धकतावच्छेदकत्वस्य निरुक्तानुगमे निवेशनीयतया घटत्वत्वावच्छिन्नधर्मिकतादृशाभावप्रतियोगितानवच्छेदकत्वप्रकारकानिश्चयत्वावच्छिन्नप्रतिबन्धकताया निरुक्तपरम्परयाव-

च्छेदकत्वस्यापि प्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्ननिरुक्तानवच्छेदकत्वप्रकारितायां सत्त्वेन प्रतियोगितानवच्छेदकवह्नित्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति ज्ञानसंग्रहान्न काप्यनुपपत्तिरिति ध्येयम् ॥ ० ॥

ननु वह्निमान् प्रतियोगितावच्छेदकत्वाभाववदभाववत्कालीनधूमादित्युपयुक्तायाः वह्नित्वं प्रतियोगितावच्छेदकत्वाभाववदभाववत्कालीनधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाववदितिबुद्धेरपि वह्नित्वधर्मिकप्रतियोगितावच्छेदकत्ववत्त्वाबुद्धिसामान्यं प्रति अभावावच्छेदेन प्रतियोगितावच्छेदकत्वाभावनिश्चयविशिष्टवह्नित्वधर्मिकाभावप्रकारकानिश्चयत्वावच्छिन्नं यदभाववान् प्रतियोगितावच्छेदकत्वाभाववान् अभाववद्वह्नित्वमिति ज्ञानसाधारणप्रतिबन्धकत्वं तदाक्रान्ततया तत एव तादृशबुद्ध्युत्तरं वह्नित्वं प्रतियोगितावच्छेदकत्वाभाववदभावत्कालीनधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति बुद्ध्यनुत्पादेन तादृशबुद्धिं प्रति वह्नित्वधर्मिकप्रतियोगितावच्छेदकत्वाभाववदभाववत्कालीनधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावप्रकारताकानिश्चयत्वेन प्रतिबन्धकत्वान्तरं न कल्प्यते तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यवह्नित्वमभावप्रतियोगितावच्छेदकमिति ज्ञानवृत्तिप्रकारित्वावच्छिन्नतया तादृशप्रतिबध्यतामादाय प्रतियोगितावच्छेदकत्वाभाववदभाववत्कालीनधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदक वह्नित्वमिति ज्ञानासंग्रहः। न च तत्र हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नं यत् प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारिताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वं तन्निरूपितप्रतिबध्यताशालित्वेनानुगमात् न तादृशप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानासंग्रहः। तथाहि वह्नित्वधर्मिकतादृशप्रतियोगितावच्छेदकत्वप्रकारकबुद्धिसामान्यं प्रत्यभावावच्छेदेन प्रतियोगितावच्छेदकत्वाभावनिश्चयविशिष्टवह्नित्वधर्मिकाभावप्रकारकानिश्चयत्वावच्छिन्नावश्यकल्प्यप्रतिबन्धकत्वेन वह्नित्वधर्मिकतादृशधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशालिबुद्धिं प्रति तादृशधूमसमानाधिकर-

णाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वेन प्रतिबन्धकताया दूरीकरणेपि तादृशप्रतियोगितावच्छेदकत्वाभाववद्वह्नित्वमिति ज्ञानं प्रति वह्नित्वधर्मिकतादृशावच्छेदकत्वप्रकारकनिश्चयत्वेन प्रतिबन्धकतायाः केनाप्यदूरीकरणात् तादृशप्रतिबन्धकताया एव तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नतया तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतामादायैव तादृशहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानसंग्रहादिति वाच्यम् । एवमपि भेदाभाववत्प्रतियोगितावच्छेदकत्ववत्कालीनधूमहेतुकस्थले साध्यतावच्छेदकं तादृशधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकभेदवदिति ज्ञानस्य दुःसंग्रहापत्तेः तथाहि वह्नित्वधर्मिकभेदवत्ताबुद्धिसामान्यं प्रति प्रतियोगितावच्छेदकत्वावच्छेदेन भेदसामान्याभावनिश्चयविशिष्टवह्नित्वधर्मिकप्रतियोगितावच्छेदकत्वप्रकारकनिश्चयत्वावच्छिन्नं यत् प्रतियोगितावच्छेदकत्ववद्भेदसामान्याभाववद्वह्नित्वं च प्रतियोगितावच्छेदकत्ववदितिज्ञानसाधारणावश्यकल्प्यप्रतिबन्धकत्वं तेनैव तादृशनिरुक्तहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकभेदप्रकारकबुद्धौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकताया दूरीकृततया तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकनिश्चयवृत्तिप्रतियोगितावच्छेदकत्वावच्छेदेन भेदसामान्याभावनिश्चयविशिष्टवह्नित्वधर्मिकप्रतियोगितावच्छेदकत्वप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाश्च तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वावच्छिन्नतया कामपि प्रतिबन्धकतामादाय तादृशावच्छेदकभेदवत्ताबुद्धेः संगृहीतुमशक्यत्वादिति न च तादृशहेतुकस्थले हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नं यत् तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वमक्षतमेवेति तदादायैव तादृशावच्छेदकभेदवत्ताबुद्धेः संग्रहादिति वाच्यम् । भेदाभाववदवच्छेदकत्ववत्कालीनप्रतियोगितावच्छेदकत्वाभाववद्भाववत्कालीनधूमहेतुकस्थले तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकभेदवत्साध्यतावच्छेद-

कमितिज्ञानस्य दुःसंग्रहापत्तेः । तथाहि साध्यतावच्छेदकधर्मिकप्रतियोगितावच्छेदकत्ववत्ताबुद्धिसामान्यं प्रति भेदावच्छेदेन प्रतियोगितावच्छेदकत्वाभावनिश्चयविशिष्टसाध्यतावच्छेदकधर्मिकभेदवत्तानिश्चयत्वेन यत् प्रतिबन्धकत्वं तेन तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्ववत्ताबुद्धिं प्रति तादृशप्रतियोगितावच्छेदकभेदवत्तानिश्चयत्वेन प्रतिबन्धकतायाः साध्यतावच्छेदकधर्मिकभेदवत्ताबुद्धिसामान्यं प्रति च प्रतियोगितावच्छेदकत्वावच्छेदेन भेदसामान्याभावनिश्चयविशिष्टसाध्यतावच्छेदकधर्मिकप्रतियोगितावच्छेदकत्वप्रकारकनिश्चयत्वेन यत् प्रतिबन्धकत्वं तेन च तादृशप्रतियोगितावच्छेदकत्वप्रकारकनिश्चयत्वेन प्रतिबन्धकतायाः दूरीकरणात् प्रतिबध्यतायां वा हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वस्य निवेशे तादृशहेतुकस्थले तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकभेदवत्ताबुद्धेः संग्रहस्यातिदुःशक्यत्वापत्तेः । न चैतद्दोषभिया तादृशहेतुकस्थले तादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वं प्रतिबध्यतायां प्रतिबन्धकतायां वा निवेश्य वयमनुगमं न ब्रूमहे किन्तु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावनिश्चयप्रतिबध्यतावच्छेदकस्वनिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयितासामान्यकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वेन तथा च धूमहेतुकवह्निसाध्यकस्थले वह्नित्वधर्मिकप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितत्वेऽपि तन्निरूपितप्रतिबध्यतावच्छेदकीभूतविषयितासामान्यान्तर्गतायां प्रतियोगितावच्छेदकं वह्नित्वमितिज्ञानीयप्रतियोगितावच्छेदकत्वविषयितायां धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वविरहात् अत्र स्वपदेन तत्प्रतिबन्धकता धर्तुं न शक्यते किन्तु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेद-

कत्वाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकता प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावप्रकारक निश्चयत्वावच्छिन्नप्रतिबन्धकतैव स्वनिरूपितप्रतिबध्यतावच्छेदकत्वं चावच्छेदकत्वत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतायाः साक्षादवच्छेदकत्वरूपं ग्राह्यं तेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतविषयितासामान्यान्तर्गतायां प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावाभाववद्वह्नित्वमितिज्ञानीयप्रकारितायामेवं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमितिज्ञानीयप्रतियोगिवैयधिकरण्यविषयतायां च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावनिश्चयप्रतिबन्धकतावच्छेदकत्वविरहेऽपि न प्रतियोगिवैयधिकरण्यघटितव्यापकताज्ञानासंग्रहः आद्यज्ञाननिष्ठप्रतिबध्यताया अवच्छेदकत्वप्रकारितात्वेन प्रकारित्वानवच्छेदात् द्वितीयज्ञाननिष्ठसाक्षादवच्छेदकत्वत्वावच्छिन्नप्रतिबध्यतायाः साक्षादवच्छेदकत्वस्य प्रतियोगिवैयधिकरण्यविषयतायां विरहात् प्रतियोगितावच्छेदकत्वाभाववद्भाववत्कालीनधूमहेतुकवह्न्यादिसाध्यकस्थले च वह्नित्वधर्मिकप्रतियोगितावच्छेदकत्वाभाववद्भाववत्कालीनधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतविषयितासामान्ये तादृशनिश्चयप्रतिबध्यतावच्छेदकत्वस्य सुतरां सत्त्वात् स्वपदेन तादृशप्रतिबन्धकता धर्तुं शक्यत इति न तादृशप्रतिबन्धकताशालिज्ञानासंग्रहः भेदसामान्याभाववत्प्रतियोगितावच्छेदकत्ववत्कालीनधूमहेतुकवह्न्यादिसाध्यकस्थले च तादृशहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकमितिज्ञानवृत्तिप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूततादृशावच्छेदकत्वत्वावच्छिन्नप्रकारितायां तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वस्य सत्त्वात्तादृशप्रतिबन्धकताशालिज्ञानस्यापि संग्रह इति वाच्यम् एवमपि प्रतियोगितावच्छेदकत्वाभाववद्भाववत्कालीनधूमहेतुकवह्न्यादिसाध्य-

कस्थले वह्नित्वं प्रतियोगितानवच्छेदकमिति ज्ञानस्यापि संग्रहापत्तेः तथाहि तादृशज्ञानवृत्तिवह्नित्वादिधर्मिकप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकनिश्चयत्वावच्छिन्नं यत् प्रतिबन्धकत्वं तन्निरूपितप्रतिबध्यतावच्छेदकीभूतविषयितासामान्यान्तर्गतप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानीयविषयितायामपि तादृशधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकनिश्चयविशिष्टाभावावच्छेदेन प्रतियोगितावच्छेदकत्वसामान्याभावनिश्चयविशिष्टवह्नित्वधर्मिकाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वात् स्वपदेन वह्नित्वधर्मिकप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकताया धर्तुं शक्यत्वादिति चेदत्र हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावग्रहप्रतिबन्धकतावच्छेदकीभूतस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयितासामान्यकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकीभूतप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्नसाध्यतावच्छेदकाविशेष्यिताकज्ञानत्वेनानुगमान्न प्रागुक्तदोषानामवकाशः । अत्र स्वपदं तादृशप्रकारितापरं तथा च प्रतियोगितावच्छेदकत्वाभाववदभाववत्कालीनधूमहेतुकवह्न्यादिसाध्यकस्थले वह्नित्वं तादृशहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकमितिज्ञानवृत्तिप्रकारित्वावच्छिन्नं यत्तादृशावच्छेदकत्वाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यत्वं तन्निरूपितप्रतिबन्धकतावच्छेदकीभूतविषयितासामान्ये तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावप्रकारकग्रहप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वात् स्वपदेन तादृशप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानीयप्रकारितया धर्तुं शक्यतया तादृशप्रकारिताशालिज्ञानसंग्रहः तादृशस्थले प्रतियोगितानवच्छेदकं वह्नित्वमितिज्ञानीयप्रकारिता स्वपदेन धर्तुमशक्यैव । तादृशप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयितासामान्यान्तर्गतायां वह्नित्वं प्रतियोगितावच्छेदकमितिज्ञानीयप्रकारितायां तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावग्रहप्रतिबन्धकतावच्छेदकत्वविरहात् । भे-

दाभाववत् प्रतियोगितावच्छेदकत्ववत्कालीनधूमहेतुकवह्निसाध्यकस्थले च तादृशधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकभेदवादिति ज्ञानवृत्तितादृशभेदवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयितासामान्ये तादृशावच्छेदकत्वाभावग्रहप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वात् तादृशज्ञानस्यापि संग्रहः ॥ ० ॥

हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यतायां निवेशितं जगदीशेन । तादृशनिवेशे चाभावो न हेतुसमानाधिकरणः अभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानेषु तादृशावच्छेदकत्वप्रकारिताव्यापकीभूतप्रकारित्वावच्छिन्ना या अभावधर्मिकहेतुसामानाधिकरण्यप्रकारकबुद्धित्वावच्छिन्ना प्रतिबध्यता तस्या वह्नित्वधर्मिकाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यं यदभावो हेतुसमानाधिकरणइतिज्ञानं यच्च वह्निवमभावप्रतियोगितावच्छेदकमितिज्ञानं यच्च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमितिज्ञानं तज्ज्ञानीयप्रकारताभिः प्रत्येकमवच्छिन्नतया न निरुक्तप्रतिबध्यताश्रयाणां तादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वम् । अत्रेयमापत्तिः । ननु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानानिरूपितत्वस्य तादृशप्रकारिताव्यापकीभूतप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायां निवेशे चाभावो न हेतुसमानाधिकरण इति ज्ञानत्रयाणां वारणसम्भवात् प्रतिबध्यतायां गुरुतरतादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वनिवेशनमफलमिति चेन्न प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वपदार्थत्वात् । वह्नित्वधर्मिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्ववत्ताबुद्धिं प्रति या वह्नित्वधर्मिकहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वनिश्चयत्वावच्छिन्ना प्रतिबन्धकता सैव वह्नित्वधर्मिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता कारणीभूतवह्नित्वधर्मिकतादृशावच्छेदकत्वाभावनिश्चयाभावस्य प्रति-

योगितारूपायाः प्रतिबन्धकतायाः प्रतिबध्यभेदेऽपि भेदाभावात् एकधर्मावच्छिन्नप्रतियोगिताया ऐक्यात्। तथा च वह्नित्वधर्मिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यं यद्वह्नित्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावाभाववदितिज्ञानं तदनिरूपिता न वह्नित्वधर्मिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकता भवतीति वह्नित्वं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकमितिज्ञानस्य संग्रहो न जायते अतः प्रतिबध्यतायां तादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वं निवेशितम् तथा च वह्नित्वधर्मिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यताया एव तादृशत्वात् तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतामादायैव वह्नित्वं तादृशप्रतियोगितानवच्छेदकमितिज्ञानद्वययोः संग्रहात्। न च तथापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वविषयिताशून्यज्ञानानिरूपितत्वमेव प्रतिबन्धकतायां निवेशनीयमेवं च वह्नित्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावाभाववद्धेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वञ्च वह्नित्वे इतिज्ञाननिरूपितत्वस्य वह्नित्वधर्मिकतादृशप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां सत्त्वेऽपि निरुक्तज्ञानयोर्हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वविषयिताशून्यत्वविरहात् न तादृशप्रतिबन्धकतावज्ज्ञानस्यासंग्रह इति वाच्यम्। यत्र धूमसमानाधिकरणाभावप्रतियोगितावच्छेदककालीनवह्नित्वस्य साध्यतावच्छेदकता तत्र तादृशवह्नित्वधर्मिकाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबन्धकताया अपि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वविषयिताशून्यज्ञानानिरूपितत्वात्तत्प्रतिबन्धकतावज्ज्ञानस्य संग्रहापत्तेः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिरूपितविषयितायां धर्मितावच्छेदकतानात्मकत्वविशेषणदानेन तादृशापत्तिवारणसम्भवे यत्र ज्ञेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य साध्यता ज्ञेयत्वं च हेतुस्तत्र ज्ञेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वधर्मिकाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वाव-

च्छिन्नप्रतिबन्धकताया अपि धर्मितावच्छेदकतात्मकहेतुसमाना- धिकरणाभावप्रतियोगितावच्छेदकत्वविषयिताशून्यज्ञानानिरूपित- त्वात्तदाश्रयस्याप्यनुमितिहेतुत्वापत्तिः धर्मितावच्छेदकताभिन्नत्व- स्येव विशेष्यताभिन्नत्वस्य हेतुसमानाधिकरणाभावप्रतियोगि- तावच्छेदकत्वविषयितायां निवेशे हेतुसमानाधिकरणाभाव- प्रतियोगितावच्छेदकत्वं वह्नित्वे इति ज्ञानस्यापि तादृशविषयि- ताशून्यतया तन्निरूपितैव वह्नित्वधर्मिकहेतुसमानाधिकरणाभा- वप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धक- ता न तदनिरूपितेति तादृशप्रतिबन्धकतावज्ज्ञानस्यासंग्रहाप- त्तेरिति ध्येयम् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्र- कारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वं प्रतियोगिव्यधिकरण- हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकी- भूतप्रकारित्वावच्छिन्नप्रतिबध्यतायामभावो न हेतुसमानाधिकरण इत्यादिज्ञानवारणाय निवेशितम् । ननु अभावधर्मिकहेतुसामाना- धिकरण्यप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यातया वह्नित्वधर्मिका- भावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबन्धकता- याश्च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यं यदभावो हेतुसमानाधिकरण इति ज्ञानं यश्चाभावप्रतियोगि- तावच्छेदकम् इति ज्ञानम् एतदन्यतरनिरूपिततया तादृशप्र- तिबध्यताया हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रका- रिताशून्यज्ञानानिरूपितत्वविशेषणेनैव वारणसम्भवात् तादृशप्र- तिबध्यतानिरूपितप्रतिबन्धकतामादायाभावो न हेतुसमानाधि- करणः वह्नित्वमभावप्रतियोगितानवच्छेदकमिति ज्ञानान्नानुमि- त्यापत्तिरिति कथं तादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारितान- वच्छिन्नत्वं गुरुतरं निवेशितामिति चेन्न यत्र धूमसमाना- धिकरणाभावप्रतियोगितावच्छेदककालीनवह्नित्वस्य साध्यताव- च्छेदकता तत्र धूमसमानाधिकरणाभावप्रतियोगितावच्छेदक- कालीनवह्नित्वधर्मिकाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वा- वच्छिन्नप्रतिबध्यताया अपि हेतुसमानाधिकरणाभावप्र- तियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानानिरूपिततया तत्प्र- तिबध्यतानिरूपितप्रतिबन्धकताशालिहेतुसमानाधिकरणाभावप्रति-

योगितावच्छेदककालीनवह्नित्वमभावप्रतियोगितानवच्छेदकमिति- ज्ञानादनुमित्यापत्तिरतो हेतुसमानाधिकरणाभावप्रतियोगितावच्छे- दकत्वप्रकारतायामवच्छेदकतानात्मकत्वं निवेशनीयम् । एवं च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदककालीनवह्नित्वमभाव- प्रतियोगितावच्छेदकमिति ज्ञानस्यावच्छेदकतानात्मकतादृशावच्छे- दकत्वप्रकारिताशून्यत्वेन तदनिरूपितत्वस्य तादृशावच्छेदकत्वकाली- नवह्नित्वावच्छिन्नधर्मिकाभावप्रतियोगितानवच्छेदकत्वनिश्चयत्वाव- च्छिन्नधर्मिकाभावप्रतियोगितानवच्छेदकत्वानिश्चयत्वावच्छिन्नप्रति- बन्धकतायां विरहात् न तत्प्रतिबन्धकतामादायातिप्रसङ्गः । एवं च हेतु समानाधिकरणाभावप्रतियोगितावच्छेदकवह्नित्वं प्रमेयमितिज्ञानस्यापि अवच्छेदकतानात्मकतादृशावच्छेदकत्वप्रका- रिताशून्यत्वेन तदनिरूपितत्वस्य वह्नित्वधर्मिकहेतुसमानाधिकरणा- भावप्रतियोगितानवच्छेदकत्वप्रकारकानिश्चयत्वावच्छिन्नप्रतिबन्ध- कतायामसत्त्वात् वह्नित्वं तादृशाभावप्रतियोगितानवच्छेदक- मिति ज्ञानस्याप्यसंग्रहापत्तिरतः प्रतिबध्यतायां तादृशाभाव- प्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्न- त्वनिवेशे च भेप्रतियोगिप्रकारितायाम् अवच्छेदकताना- त्मकमिव भेददानुयोगिप्रकारितायामपि अवच्छेदकतानात्मकत्व- स्य निवेशनीयतया हेतुसमानाधिकरणाभावप्रतियोगितावच्छे- दकवह्नित्वं प्रमेयमिति ज्ञानीयावच्छेदकत्वप्रकारिताया अवच्छेदक- तानात्मकत्वविरहेण अवच्छेदकतानात्मिका या ज्ञानान्तरीया प्रका- रिता तदनवच्छेदकत्वस्य वह्नित्वधर्म्मिकहेतुसमानाधिकरणाभा- वप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां स- त्त्वान्न तादृशप्रतिबध्यताया असंग्रहः । न च साध्यतावच्छे- दकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितहेतुसमाना- धिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानानिरूपितत्व- स्य प्रतिबन्धकतायां निवेशेनैव हेतुसमानाधिकरणाभाव- प्रतियोगितावच्छेदककालीनवह्नित्वाश्रयवान् इत्यत्र हेतुसमाना- धिकरणाभावप्रतियोगितावच्छेदककालीनवह्नित्वत्वावच्छिन्नधर्मि- कतादृशावच्छेदकत्वप्रकारिताशून्यं तादृशावच्छेदककालीनव- ह्नित्वम् अभावप्रतियोगितावच्छेदकमिति ज्ञानं तन्निरूपित-

प्रतिबन्धकतामादाय ताहशप्रतियोगितावच्छेदककालीनवह्नित्वम- भावप्रतियोगितानवच्छेदकमिति ज्ञानान्नानुमितिरिति वाच्य- म् एवं सति प्रतियोगितानवच्छेदकवह्नित्वाश्रयवान् धूमादि- त्यत्र प्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्नधर्मिकहेतुसमा- नाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्र- तिबध्यत्वाप्रसिद्ध्या प्रतिबध्यदिशि साध्यतावच्छेदक- मनिवेश्य पटत्वादिधर्मिकहेतुसमानाधिकरणाभावप्रतियो- गितावच्छेदकप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतामादाय तत्प्रति- बन्धकतावच्छेदकीभूतो यो निश्चयत्वघटकीभूतो भेद- स्तत्प्रतियोगिप्रकारतानिरूपितसाध्यतावच्छेदकाविशेष्यताकज्ञान- मादाय ग्रन्थकृतोऽनुगमस्यासंगत्यापत्तेः । एवं वह्नित्वत्वध- र्मिकावच्छेदकप्रकारकबुद्धित्वेन प्रतिबध्यत्वे वह्नित्वत्वघटकी- भूतवह्नीतरावृत्तित्वादेरखण्डस्य निवेशे इतरत्वप्रतियोगिनि वह्नित्वेन पदार्थान्तरावगाहिभ्रमस्यासंग्रहः अतः साध्य- तावच्छेदकताघटकपदार्थानां परस्परानिरूप्यनिरूपकभावापन्नवि- षयिताशालित्वमेव निवेशनीयम् । तथा च महागौरवमिति साध्यतावच्छेदकविषयितामनिवेश्य हेतुसमानाधिकरणाभाव- प्रतियोगितावच्छेदकत्वप्रकारिताशून्यत्वस्य ज्ञाने निवेश एव लाघवमित्यस्याधिकाविवेचनाऽस्मत्पत्रान्तरेऽनुसन्धेया इति ।

प्रतियोगिव्याधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छे- दकत्वग्रहविरोधिधूमवत्पर्वतनिश्चयत्वेन हेतुत्वे धूमसमानाधि- करणाभावप्रतियोगितानवच्छेदकं वह्नित्वं धूमवांश्च पर्व- त इति ज्ञानादप्यनुमित्यापत्तिः । यदि प्रतियोगिव्यधिकरणहेतु- समानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहप्रतिबन्धकतावच्छे- दकीभूतविषयतानिरूपिता या साध्यतावच्छेदकविषयता त- न्निरूपिता याधिकरणविषयता तन्निरूपिता या वृत्ति- त्वाविषयता तन्निरूपिता या धूमत्वावच्छिन्नविषयता तन्निरू- पितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वेन कारणत्वो- पगमात् न ताहशसमूहालम्बनज्ञानादनुमित्यापत्तिः ताहशसमूहा- लम्बनज्ञाने ताहशनिरूप्यनिरूपकभावापन्नविषयताकत्वविरहात् । न च धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकेन तद्भिन्नेन

वावच्छिन्नत्वेनावच्छिन्नसमानाधिकरणधूमवानितिविशेषणतावच्छेदकांशे संशयाकारे विशेष्ये विशेषणमिति रीत्या ज्ञानेऽपि सत्त्वात् तज्ज्ञानमादायानुमित्यापत्तिरितिवाच्यं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधितावच्छेदकीभूतविषयताभिन्नविषयत्वानिरूपितसाध्यतावच्छेदकविषयतानिरूपिताया विषयता तन्निरूपिताधिकरणविषयता इत्यादिक्रमेणानुगमे प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावात्मकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाववता वह्नित्वेनावच्छिन्नसमानाधिकरणधूमवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिः तादृशज्ञानीयहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वविषयतायाः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाववत्तावच्छिन्नतया प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहप्रतिबन्धकतावच्छेदकत्वेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावत्वावच्छिन्नविषयितायाः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावाभावत्वावच्छिन्नाया अपरकोटितायाश्च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावप्रकारतात्वेन तादृशप्रतिबन्धकतावच्छेदकत्वेन तादृशसंसर्गीयप्रकारताया अपि न तादृशप्रतिबन्धकतावच्छेदकविषयताभिन्नत्वम् अपि तु उदासीनविषयतायामेव तदनिरूपितत्वस्य तादृशविषयतायां सत्त्वात् । एवं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्नसमानाधिकरणधूमाभावात्मकहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्नसमानाधिकरणधूमवान् हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्नसमानाधिकरणधूमाभावात्मकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वत्वावच्छिन्नसमानाधिकरणधूमवान् वा इति संशयीयविषयताद्वयोरपि न तादृशविरोधितावच्छेदकीभूतविषयतानिरूपितसाध्यतावच्छेदकविषयतानिरूपितसाध्याविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितहेतुतावच्छेदकावच्छि-

न्नविषयताभिन्नत्वम् अपि तु उदासीनविषयतायामेव त-
दनिरूपितत्वस्य तादृशसंशयीयपक्षतावच्छेदकावच्छिन्नविषय-
तायां सत्त्वात् तस्मादनुमित्यापत्तिः अधिकं त्वित्यादिन्यायेन
यथा महानसीयवह्निसामान्याभाववान् पर्वत इति संशयो भव-
ति तथा महानसीयवह्निमान् प्रमेयात्मकवह्निसामान्याभाववान्
इति संशयोऽपि प्रतियोग्यंशेऽभावांशेऽधिकमवगाह्य जायते तत्तु-
ल्यन्यायेन तथा उक्तसंशयेऽपि विवादाभाव इति हेतुस-
मानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनिश्चयप्रतियोगिव्य-
धिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनिश्च-
यसाधारणैकनिश्चयत्वं सम्भवति इति पृथक् पृथक् निश्च-
यत्वप्रवेशेनानुगतरूपेण न सम्भवति इति दोषः इदन्तु चिन्त्यते
इत्यादिना जगदीशेनोक्तः । ननु घटत्वत्वावच्छेदेन हेतु-
समानाधिकरणाभावप्रतियोगितावच्छेदकत्ववत्ताबुद्धिं प्रति घ-
टत्वत्वधर्मितावच्छेदकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेद-
कत्वाभावप्रकारकनिश्चयत्वेन घटत्वत्वसामानाधिकरण्येन ता-
दृशाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकानिश्चयघटत्वत्वाव-
च्छेदेन तादृशावच्छेदकत्वाभावप्रकारकनिश्चययोः प्रतिबन्धकत्वं
न सम्भवति तथाहि घटत्वत्वावच्छेदेन तादृशावच्छेदकत्वा-
भावप्रकारकनिश्चयसत्त्वे हेतुसमानाधिकरणाभावप्रतियोगिता-
वच्छेदकं घटत्वमिति बुद्ध्युत्पादात् घटत्वत्वावच्छेदेन हेतुस-
मानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावाभाववति ताद-
शावच्छेदकत्वाभावप्रकारकमित्यप्रामाण्यज्ञानाभाववैशिष्ट्यं ता-
दृशप्रतिबन्धकतावच्छेदककोटौ अवश्यं निवेशनीयम् ।
एवं च घटत्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वा-
भावनिश्चये तादृशाप्रामाण्यग्रहसत्त्वे घटत्वत्वावच्छेदेन ताद-
शावच्छेदकत्वबुद्ध्युत्पादापत्तिरतो घटत्वत्वावच्छेदेन तादृशाप्रा-
माण्यज्ञानाभावविशिष्टघटत्वत्वावच्छेदेन तादृशावच्छेदकत्वाभा-
ववत्तानिश्चयत्वेन प्रतिबन्धकत्वम् अपरं च घटत्वत्वसामाना-
धिकरण्येन तादृशावच्छेदकत्वाभावाभाववति घटत्वत्वसामाना-
धिकरण्येन तादृशावच्छेदकत्वाभावप्रकारकनिश्चयत्वेन तथा चा-
वच्छेदावच्छेदेन तादृशावच्छेदकत्वाभावप्रकारकनिश्चयत्वावच्छि-

न्ना या प्रतिबन्धकता तत्प्रतिबन्धकतावच्छेदकीभूता या अवच्छेदावच्छेदेन तादृशावच्छेदकत्वाभावप्रकारता तदवच्छिन्नप्रतिबन्धकतावच्छेदकत्वं सामानाधिकरण्येन तादृशाभावप्रकारतायां न सम्भवतीति कथं जातित्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावग्रहात् जातित्वावच्छिन्नावच्छेदकताकविधेयताकानुमित्युत्पादः इति चेन्न निरुक्तावच्छेदकत्वग्रहप्रतिबन्धकतावच्छेदकीभूता या प्रकारता तदवच्छिन्ना या प्रतिबध्यता तदवच्छेदकीभूतविषयत्वावच्छिन्ना या प्रतिबन्धकता तदवच्छेदकीभूतप्रकारित्वावच्छिन्नसाध्यतावच्छेदकविशेष्यिताकज्ञानत्वेनानुगमान्न दोषः तथा चावच्छेदावच्छेदेन सामानाधिकरण्येन साधारणतादृशावच्छेदकत्वाभावप्रकारकनिश्चयत्वेनाप्रामाण्यज्ञानव्यक्तीनां विशिष्य उत्तेजकत्वानुरोधेन एकप्रतिबन्धकत्वासम्भवेऽपि अवच्छेदावच्छेदेन सामानाधिकरण्येन साधारणतादृशावच्छेकत्वाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां प्रतिबध्यतावच्छेदककोटावप्रामाण्यज्ञानाद्यभावस्यानिवेशात् ऐक्यसम्भवेनावच्छेदावच्छेदेन तादृशावच्छेदकत्वाभावप्रकारित्वावच्छिन्ना याऽवच्छेदावच्छेदेन सामानाधिकरण्येन तादृशावच्छेदकत्वाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतावच्छेदिका या सामानाधिकरण्येन तादृशावच्छेदकत्वाभावविषयिता तदवच्छिन्ना सामानाधिकरण्येन तादृशावच्छेदकत्वाभावप्रकारकानिश्चयत्वावच्छिन्ना प्रतिबन्धकता निश्चयत्वावच्छिन्नभेदप्रतियोगिविधया तदवच्छेदिका या प्रकारिता तदवच्छिन्नत्वं साध्यतावच्छेदकविषयितायां वर्तत इत्यपरानुगमपन्थाः ।

यत्समानाधिकरणा यावन्तो धर्माः साध्यसमानाधिकरणास्तत्त्वम् । अत्र यावत्त्वस्य व्यापकत्वं विना दुर्वचत्वात् यत्सामानाधिकरण्यवन्निष्ठाभावप्रतियोगितानवच्छेदकं साध्यसामानाधिकरण्यत्वं तत्त्वमेव व्याप्तिः । अत्र यदधिकरणनिरूपितवृत्तित्ववत्त्वं निरवच्छिन्नविशेषणताविशेषसम्बन्धेन वक्तव्यम् अन्यथा वह्निमान् धूमादित्यादौ धूमसामानाधिकरण्यवति घटाभावे वह्न्यनधिकरणावच्छेदेन वह्निसामानाधिकरण्याभावसत्त्वात् वह्निसामानाधिकरण्येऽपि धूमसामानाधिकरण्यव्यापकत्वानुपपत्तिः ।

किन्तु वाच्यं ज्ञेयत्वादित्यत्रैव लक्षणसमन्वयः सम्भवति वाच्यत्वानधिकरणदेशाप्रसिद्ध्या वाच्यत्वसामानाधिकरण्याभावस्याव्याप्यवृत्तित्वासम्भवात् एवं च वह्निमान् धूमादित्यत्र घटाभावेऽपि धूमसामानाधिकरण्यस्याव्याप्यवृत्तितया घटाभावेऽपि निरवच्छिन्नविशेषणतासम्बन्धेन हेतुसामानाधिकरण्यवत्ताप्रसिद्धिः पर्वतनिष्ठतत्तद्व्यक्तित्वादावपि कालिकसंबन्धेन यत्तद्व्यक्त्यधिकरणं सृष्टिकालादि तदवच्छेदेन धूमाधिकरणनिरूपितत्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभावसत्त्वात् तद्व्यक्तित्वे हेत्वधिकरणनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य निरवच्छिन्नविशेषणताविशेषणाधिकरणत्वाप्रसिद्धिः अतः साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकं हेतुसामानाधिकरण्याभावत्वे विवक्षितम् अत्र साध्यसामानाधिकरण्याभाववत्त्वं निरवच्छिन्नविशेषणताविशेषेण वक्तव्यम् अन्यथा वह्न्यनधिकरणदेशावच्छेदेन वह्निसामानाधिकरण्याभाववति घटाभावे धूमसामानाधिकरण्याभावसत्त्वात् अव्याप्तितादवस्थ्यापत्तेः अतः पूर्वलक्षणेऽपि व्यापकताघटकहेतुसामानाधिकरण्यवद्वृत्तित्वं निरवच्छिन्नविशेषणताविशेषेणोच्यते तदा धूमसामानाधिकरण्यवति घटाभावे निरवच्छिन्नविशेषणतासम्बन्धेन वह्निसामानाधिकरण्याभावस्यासत्त्वात् नाव्याप्तिरितिगुरुतरलक्षणारम्भेत्यर्थः । अत्राभावत्वरूपव्याप्यावृत्तिसाधारणरूपेण यद्यव्याप्यवृत्तेः वह्निसामानाधिकरण्याभावस्यापि व्याप्यवृत्तित्वं तदा वह्निसामानाधिकरण्याभावोऽपि अभावत्वेन घटा रभावे निरवच्छिन्नवृत्तिको भवति इत्यव्याप्तिवारणं न जायते अत एव हेत्वधिकरणे निरवच्छिन्नवृत्तिकाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैव, कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिवारणसम्भवे हेतुसामानाधिकरण्यव्यापकत्वस्य साध्यसामानाधिकरण्येऽनुसरणं दीधितिकृतो विरुध्येत तत्रापि अभावत्वेन कपिसंयोगाभावस्य वृक्षे निरवच्छिन्नवृत्तिकत्वसम्भावनयैव तादृशलक्षणं परित्यक्तम्। वस्तुतस्तु गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे प्रमेयधूमत्वावच्छिन्नसामानाधिकरण्यत्वे व्यापकतावच्छेदकत्वापत्तिः अतः साध्याधिकरणवृत्तयो यावत्यो व्यक्तयः तत्तद्व्यक्तिभेदकूटव्यापकता-

वच्छेदकत्वं हेतुसमानाधिकरणतत्तद्व्यक्तिभेदकूटत्वे निवेशनीयम् एवमेव प्रकारोऽवच्छेदकत्वनिरुक्तिशेषे जगदीशेन प्रपञ्चितः । इदं तु बोध्यम् । सामानाधिकरण्यस्याव्याप्यवृत्तित्वेऽपि सामानाधिकरण्यत्वस्य व्याप्यवृत्तितया हेतुसामानाधिकरण्यत्वव्यापकत्वस्य साध्यसामानाधिकरण्यत्वे विवक्षायां सामानाधिकरण्यस्याव्याप्यवृत्तित्वनिबन्धनो जगदीशोक्तदोषो न सङ्गच्छते किंतु गुरुधर्मस्यानवच्छेदकत्वे प्रमेयधूमवान् वह्नेरित्यत्रातिव्याप्तिरिति ध्येयम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचिता व्याप्त्यनुगमजागदीशीपत्रिका सम्पूर्णा ।

# अथ तर्कजागदीशीक्रोडपत्रम्।



स्वारसिकापादकवत्तायास्तर्ककारणीभूतेनापादकाभावव्याप्या-पाद्याभाववत्तानिश्चयेनापादकव्यापकतया गृहीतस्यापाद्यस्या-भाववत्तानिश्चयेनापादकवत्ताज्ञानसम्पादकतद्बाधनिश्चयेनैव वा प्र-तिबन्धादाहार्यापादकवत्ताशङ्कायाः प्रतिबन्ध एव फलं भवति अनि-ष्टप्रदर्शनेनापादकवत्ताबोधेच्छाया विच्छेद इति कारणाभावादा-हार्यशङ्काया अनुत्पाद इति च मिश्रादिसम्मतः प्राचीनः पन्था इति जगदीशः। अथापादकाभावव्याप्यापाद्याभाववत्तानिश्चयस्य तर्कका-रणत्वमेवासिद्धं पक्षे आपाद्यव्याप्यापादकवत्तानिश्चयबाधनिश्च-ययोरेव हेतुत्वात् न च सत्प्रतिपक्षमुद्रयाहार्यापादकवत्ताज्ञान-सम्पादकतयैव तस्य हेतुत्वमिति वाच्यम् आहार्यापादकव-त्ताज्ञानसम्पादकतद्बाधनिश्चयेनैवेत्यनेनापादकाभाववत्तानिश्चयस्यै-वाहार्यसम्पादकत्वेनाभिधानात्। न च वस्तुगत्याहार्यसम्पाद-कं तत्र वर्तत एवेति तत्र सम्पादकतया तर्ककारणमपि तत्र वर्तत इति वाच्यम् आहार्यापादकवत्ताज्ञानसम्पादकत्वेऽपि तर्ककारणत्वासम्भवादन्यथा तत्सम्पादकेच्छादेरपि तत्कारणत्वा-पत्तेः। न च तर्ककारणीभूतेत्यनेनाहार्यापादकनिश्चयस्य तर्क-कारणत्वं ग्रन्थकृदभिमतं न विरुध्येतेति वाच्यम्। तेन स-मं तस्यान्वयस्यैवासिद्धेस्तृतीयान्तदलेनैवान्वयादिति चेन्न एतन्मते विपर्ययानुमित्यर्थमापादकाभावव्याप्यापाद्याभाववत्तानि-श्चयस्यावश्यकत्वेन कारणत्वसम्भवात्। न च विपर्ययानुमि-त्यर्थं तस्यावश्यकत्वेऽपि कुतस्तर्कं प्रति तस्य हेतुत्वमिति वा-च्यम् तर्कं प्रति तस्याहेतुत्वे तर्कोत्तरविपर्ययानुमितेरवश्यस-म्भवात्। न च तर्कोत्तरमापादकाभावव्याप्यापाद्याभाववत्ता-निश्चयेनोत्पन्नेन विपर्ययानुमितिसम्भवात् तदर्थं तर्कं

प्रति तस्य हेतुत्वमनुपयुक्तमिति वाच्यं तथा सत्यसति बाधके तर्काव्यवहितोत्तरमनुत्पन्नायास्तादृशानुमितेस्तर्कफलत्वासम्भवात् । न हि यदा कदाचिदुत्तरमुत्पन्नव्यक्तेस्तत्फलता तान्त्रिकाणां तथासिद्धान्तविरहात् न चैतत्पूर्वम् आपादकवत्त्वांशे आहार्यापाद्यव्याप्यवत्तानिश्चयबाधनिश्चययोरेव तर्कहेतुत्वेनोपादानासङ्गतिरिति वाच्यं नव्यमते तयोरेव हेतुत्वात् । न च तर्कोत्तरमापादकाभावानुमित्यनुपपत्तिरिति वाच्यं क्षतिविरहात् । न च विपर्ययानुमितेस्तर्कफलत्वमनुपपन्नमिति वाच्यम् । तस्यैवाप्रसिद्धेः । न च विपर्यये तत्कोटिमात्रपर्यवसायिनः तर्कस्येति दीधितिकृतो ग्रन्थविरोध इति वाच्यं तद्ग्रन्थेन विपर्ययानुमितेस्तर्कफलत्वाप्रतिपादनात् ग्रन्थकृतापि दीधितिग्रन्थस्य तथैव व्याख्याततत्वात् तथाहि विपर्यये स्वविपक्षकापादकाभाववत्त्वानुमाने तत्कोटिमात्रपर्यवसायिनस्तन्मात्रविधेयताकस्येत्यर्थः तथा च विपर्ययानुमितिस्तर्कपक्षतावच्छेदकावच्छिन्ने यदा भविष्यति तदा यद्धर्मावच्छिन्नविधेयता तद्धर्मावच्छिन्नाभावकोटिकशङ्कानिवर्तकत्वं तर्कस्य न तु तर्काव्यवहितोत्तरं तदनुमितिरपेक्षणीया इति नव्यानामाशय इति तदभिप्रायेण दीधितिकृता विपर्यये इत्याभिहितमिति । अथाहार्यापादकवत्ताज्ञानसम्पादकतद्बाधनिश्चयस्य तर्कोत्पत्तिसमये नाशात् कथं तस्य शङ्काप्रतिबन्धकत्वसम्भवः । न च तर्कद्वारा तस्य प्रतिबन्धकतायामुपयोगितामात्रं न साक्षात्प्रतिबन्धकत्वमिति वाच्यं तथा सति विवक्षितविवेकेन तर्कोपपादकतया तस्य प्रतिबन्धकतायामुपयोगित्वे सिद्धे आपाद्यव्याप्यापादकवत्ताज्ञानस्योपेक्षायां निर्बीजत्वापत्तेः । न चापेक्षाबुद्ध्यात्मकस्याहार्यसम्पादकत्वं वक्तव्यमिति वाच्यम् सर्वत्र तथात्वे प्रमाणाभावात् । न च समूहालम्बनरूपबाधनिश्चयात्मकमापादकवत्ताज्ञानं तर्कसम्पादकमिति वाच्यं नियतसमूहालम्बनस्यैवासिद्धेरिति चेन्न आपादकाभाववान् धूम आपाद्यव्याप्यापादकवानित्याकारकाहार्यपरामर्शस्यैव तर्कजनकत्वोपगमात् न चापादकावच्छिन्नपक्षतावच्छेदकावच्छिन्ने आपाद्यव्याप्यापादकवत्तापरामर्शात् कथं शुद्धपक्षतावच्छेदकावच्छिन्ने आपत्तिः न हि नीलपर्वतो

वह्निव्याप्यवानिति परामर्शात् पर्वतो वह्निमानिति वह्न्यनुमितिरिति वाच्यम् अनुमितेस्तथात्वासम्भवेऽप्यापत्तेः सर्वथैव तथानियमात् । केचित्तु आपादकाभाववत्पक्षनिश्चयोत्तरमुत्पन्नापाद्यव्याप्यापादकवत्तानिश्चयादप्यापत्तेरनुभवसिद्धतया आपादकाभावावच्छिन्नपक्षविशेष्यकापाद्यव्याप्यापादकवत्तानिश्चयत्वेनापत्तिहेतुत्वात् अपि त्वापाद्यव्याप्यापादकवत्तानिश्चयत्वेन न चापाद्यव्याप्यापादकवत्तानिश्चयत्वेन हेतुत्वोक्तौ कथमनाहार्यव्यावर्तनमिति वाच्यम् इच्छाप्रयोज्यत्वनिवेशेनैव तदुपपत्तेः न चाहार्यापादकवत्ताज्ञानसम्पादकतद्बाधनिश्चयेन शङ्काप्रतिबन्धादित्यस्यासङ्गतिरापत्तिसमये तस्यासत्त्वादिति वाच्यम् एतत्कल्पे ग्रन्थकृतोऽनिर्भरात् अत एव तत्सूचनाय तद्बाधनिश्चयेनैव वेत्यनेन वाकार उपदर्शित इति व्याचक्षुस्तदसत् । आपादकविषयतायामिच्छाप्रयोज्यत्वनिवेशापेक्षया आपादकाभावावच्छिन्नपक्षविशेष्यकत्वान्तर्भावेन कारणत्वकल्पनादापादकविषयतायामिच्छाप्रयोज्यत्वनिवेशो विरोधिज्ञानान्तरसमवधानदशायामुत्पन्नापाद्यव्याप्यापादकवत्तानिश्चयादप्यापत्त्यापत्तेः । न चेष्टापत्तिरिति वाच्यम् आपादकाभावव्याप्यापाद्याभाववत्तानिश्चयस्यापि सत्प्रतिपक्षमुद्रयाहार्यसम्पादकत्वसम्भवे तत्र तदनभिधायाहार्यापादकवत्ताज्ञानसम्पादकतद्बाधनिश्चयेनैव इत्यनेन विशेषाभिधानात् । अथ यद्यनिष्टप्रदर्शनेनेच्छाविच्छेदात् कारणाभावादाहार्यशङ्काया अनुत्पादस्तदापादकाभावव्याप्यापाद्याभाववत्त्वनिश्चयादेः कथं शङ्काप्रतिबन्धकत्वं प्रतिबन्धकतायामनुपयोगित्वात्तादृशशङ्काया आहार्यत्वेनाप्रतिबध्यत्वाच्च । मैवम् इच्छाविच्छेदोपयोगितयैव तेषामुपयोगित्वसम्भव इति ह्यनिष्टप्रदर्शनेनेत्यादिना तथैव विवरणात् न चापाद्यव्याप्यापादकवत्तानिश्चयस्याप्यनिष्टप्रदर्शनोपयोगित्वसम्भवात्तदुपेक्षायां निर्बीजत्वापत्तिरितिवाच्यम् आहार्यापादकवत्ताज्ञानसम्पादकतद्बाधनिश्चयेनेत्यभिधानादनाहार्यापादकवत्ताशङ्कायाश्छलतो निरासात् आपाद्यव्याप्यापादकवत्तानिश्चयत्वेनेत्यभिधाने एतदसम्भवात्तस्याहार्यत्वात् । यस्तावत्तादृशबाधनिश्चयेनानिष्टप्रदर्शनद्वारेच्छानिवृत्त्याहार्यशङ्कानिवृत्तिरिति तर्कानन्तरं शङ्कामात्रं नोत्पद्यते । न चाहार्यशङ्कायां फलत्वं नाभिहितमिति वाच्यम् तत्र शङ्कानधीनत्वेऽपि तत्प्रयोजकबाध-

निश्चयाधीनत्वादिति सम्प्रदायः । नव्यास्तु स्वारसिकशङ्काया इत्यस्यानाहार्यशङ्काया इत्यर्थकत्वात् तत्र तु स्मृतिप्रतिबन्धादेतत् पर्यन्तमेवैको ग्रन्थस्तथा चानिष्टप्रदर्शनेनेच्छानिवृत्त्याहार्यशङ्कानिवृत्तिस्तु तत्प्रतिबन्धादेवेति शेषं पूर्ववदितिप्राञ्चः । नन्वापादकाभावनिश्चयस्तर्कोत्पत्तिक्षणे यदा वर्तते तदा तदुत्तरं विपर्ययानुमानं न स्यात् तदव्यवहितपूर्वे सिद्धिसत्त्वात् ज्ञानेच्छयोरयौगपद्येनानुमितिपूर्वमिच्छाया असम्भवात्तर्कोत्तरम् इच्छोत्पत्तिसम्भवेऽपि तदानीं परामर्शानुपस्थितेः। न च तदनन्तरं परामर्शोत्पत्त्या अनुमितिरितिवाच्यम्। आपत्तेरुत्तरं परामर्शोत्पत्त्यैवानुमितिसम्भवेऽन्तरा इच्छाकल्पनस्यानर्थक्यापत्तेः न च तदेवास्त्विति वाच्यम् आपत्तिफलत्वानुपपत्तेरापादकाभावव्याप्यापाद्याभाववत्त्वनिश्चयस्य तर्ककारणत्वानुपपत्तिश्च आपत्त्यव्यवहितोत्तर विपर्ययानुमित्यर्थमेव तस्य कारणत्वस्वीकारादिति चेन्नाहार्यापादकवत्ताज्ञानसम्पादकेच्छाया एवानुमितिविषयत्वोपगमात् न चेच्छाया अपि आपत्तिसमये विनाशात् कथं तदनन्तरमनुमितिरिति वाच्यं तदानीमपि इच्छाया असत्त्वेऽपि इच्छाया योग्यतासत्त्वादिच्छायोग्यताया अनुमितिहेतुत्वस्य मिश्रैरुपगमात् अत एव तदभिप्रायेण मिश्रादिसम्मतः प्राचीनः पन्था इति ग्रन्थकृताऽभिहितमिति संक्षेपः ॥

स चायं तर्कः पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गभेदादित्याचार्याः । तत्र स्वापेक्षापादकप्रसङ्ग· आत्माश्रयः अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ चेति तत्राद्या यथा एतद्घटज्ञानं यदि एतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यात् । द्वितीया यथा एतद्घटो यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यात् । तृतीया यथा एतद्घटो यद्येतद्घटवृत्तिः स्यात्तथात्वेनोपलभ्येतेति जगदीशः। नन्वत्र स्वापेक्षापादकप्रसङ्ग इत्यस्य स्वस्मिन्नपेक्षा यस्य स स्वापेक्षः स एव आपादको यस्य स उदाहरणं यत्र तादात्म्यसम्बन्धेनापादकता इत्यर्थश्च न सम्भवति तादृशार्थे जनकतादिरूपस्यापेक्षापदार्थस्य प्रागुक्ततया एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यात् इत्यादिना जन्यताया ए·

वापेक्षापदार्थत्वकथनस्याभुक्तवान्ततापत्तेः । न च स्वस्यापेक्षा यस्येति वहुब्रीहिरितिवाच्यम् तथा सत्यप्यन्योन्याश्रयादौ स्वापेक्षापेक्षितत्वनिबन्धनकथनेनापेक्षाया एवापादकताप्राप्तेः संदर्भविरोधापत्तेरित्ति चेन्न स्वस्यापेक्षा इति तत्पुरुषस्यैव तत्र वृत्तित्वात् । सर्वत्र स्वापेक्षाया एवापादकत्वात् अपेक्षात्वं तु ज्ञप्तिस्थाने स्वज्ञानजन्यज्ञानविषयत्वम् उत्पत्तिस्थाने स्वनिष्ठजनतानिरूपितजन्यतात्वं स्थितिस्थाने च स्वनिष्ठाधिकरणतानिरूपितवृत्तितात्वं न चैतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति तर्कस्यात्माश्रयत्वानुपपत्तिस्तस्यैतादृशापेक्षापादककत्वाभावादिति वाच्यं स्वविषयताशालिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकाविषयतावत् स्वविषयत्वावच्छिन्नजनकतानिरूपितजन्यताया अपि अपेक्षा तुल्ययुक्तेः तथा चैतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतदघटज्ञानभिन्नं स्यादिति तर्कस्यापेक्षा पादकत्वं तथाहि एतद्घटज्ञानाभिन्नत्वव्याप्यैतद्घटज्ञानजन्यत्ववदेतद्घटज्ञानमिति परामर्शे एतद्घटज्ञानत्वावच्छेदेन एतद्घटज्ञानजन्यत्वावगाहित्वेनैतद्घटज्ञानजन्यतायाम् एतद्घटविषयित्वावच्छिन्नत्वं भासत इति तादृशतर्कस्य स्वापेक्षापादकत्वं सुलभमेव न च तर्हि एतद्घटो यद्येतद्घटज्ञानजन्यज्ञानाविषयः स्यादेतद्घटविषयः स्यात् एतद्घटभिन्नः स्यादित्यस्यापि स्वापेक्षापादकत्वमस्त्विति इति वाच्यम् इष्टापत्तेः न च जनकताया एतादृशापेक्षत्वाभावादेतद्घटज्ञानं यद्येतद्घटज्ञानजनकं स्यादेतद्घटज्ञानभिन्नं स्यादिति तर्कस्यात्माश्रयानुपपत्तिरिष्टत्वान्न चैवं तर्कस्य पञ्चविषयत्वानुपपत्तिः जनकतापादककतर्कस्याधिक्यादिति वाच्यम् अन्यथासिद्धीनां पञ्चमे चरितार्थत्ववदस्यापि पञ्चविधत्वोपपत्तेः अन्यथा चक्रकस्थल इवात्माश्रयस्थले साक्षात्परम्परासाधारणापेक्षयैवान्योन्याश्रयचक्रकयोरात्माश्रयान्तर्गतत्वापत्तेः । वस्तुतस्तु आपादकाभावव्याप्यापाद्याभाववत्त्वनिश्चयस्य विषयपरिशोधकतर्कं प्रति हेतुत्वोपगमेन तादृशतर्कोत्तरं विषयस्यापादकाभावस्य सिद्धिसम्भवात् । तादृशतर्कस्यैव विषयपरिशोधकत्वं तर्कान्तरानां तु आपादकाभावव्याप्यापाद्याभाववत्त्वनिश्चयत्वेनैव हेतुत्वोपगमात् न सम्भवत्येव विषयपरिशो-

धकत्वम् अत एव मिश्रादीनां तर्कमात्रे प्रत्यापादकाभावव्याप्या-पाद्याभाववत्त्वनिश्चयत्वेनैव हेतुतायामस्वरसमूचनाय मिश्रादिसंम्मतः प्राचीनः पन्था इत्यभिधानमपि सङ्गच्छते तथा चान्योन्याश्रयादिकं प्रति आपादकाभावव्याप्यापाद्याभाववत्त्वनिश्चयत्वेन हेतुतानुपगमेन न विषयस्यापादकाभाववत्त्वस्य सिद्ध्युपपादकत्वम् आत्माश्रयादितर्कस्य न शङ्कास्पदत्वमपि न चापाद्यव्याप्यापादकवत्त्वपरामर्शकाले सन्निकर्षादिवशादापादकाभावव्याप्यापाद्याभाववत्त्वज्ञानं तादृशसमूहालम्बनपरामर्शादुत्पन्ने आत्माश्रयातिरिक्तप्रमाणबाधितार्थकत्वं स्यात्तस्य विषयपरिशोधकत्वादिति वाच्यं कुत्रचित्तर्के विषयपरिशोधकत्वेऽपि सर्वत्रातथात्वात् विभागव्याघातानुपपत्तेः न चैतत्तर्के आपादकाभावव्याप्यापाद्याभाववत्त्वनिश्चयस्य हेतुत्वोपगमे आपादकवत्त्वांशे आहार्यापाद्यव्याप्यापादकवत्तानिश्चयापाद्याभाववत्त्वनिश्चययोरेव हेतुत्वकथनं विरुध्येतेति वाच्यं तर्कसामान्ये यत्र यत्र हेतुत्वं तत्कथनेन तद्ग्रन्थविरोधाभावात्। न च घटो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादिति तर्कस्यापि आत्माश्रयत्वापत्तिः वह्निजन्यत्वस्य वह्न्यपेक्षत्वेन तदापादककत्वात्तादृशतर्कस्येति वाच्यं स्वपदस्य तर्कपक्षबोधकत्वात् तथा च तादृशतर्कस्य पक्षतया तदपेक्षापादककत्वविरहान्नात्माश्रयत्वं न च तथा सति एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यात् एतद्घटज्ञानभिन्नं स्यादिति तर्कस्यात्माश्रयत्वानुपपत्तिः तादृशतर्कपक्षस्य स्वप्रतिपाद्यत्वाभावात्। न च तथात्वेऽपि क्षतिविरह इति वाच्यम् एतद्घटज्ञाने एतद्घटज्ञानजन्यत्वसत्त्वेन स्वानपेक्षितत्वसम्भवात् ज्ञानद्वयमादायैव तदुपपत्तेः। न चैतद्घटज्ञानत्वावच्छेदेन पक्षतास्थल एवात्माश्रयप्रसङ्ग इति वाच्यं तत्र भिन्नज्ञानमादाय स्वापेक्षितत्वविरहसम्भवादेतत्पदवैयर्थ्यप्रसङ्गाच्च न चैतत्पदं ज्ञानविशेषसंग्राहकमिति वाच्यं तथा सति अयं घटो यद्येतद्घटजन्य इत्यनेन सामान्यात् ज्ञप्तिस्थलीयोदाहरणत्वेन पृथगभिधानस्योन्मत्तप्रलपितत्वापत्तेरिति चेन्न एतद्घटो यद्येतद्घटज्ञानजन्यज्ञानविषयः स्यात् एतद्घटज्ञानाविषयः स्यादित्यत्र तादृशस्य तात्पर्यापादकतर्कवत्तथा विषयजन्यत्वापादकस्यापि प्रमाणबाधिता

र्थत्वोपगमादिति सम्प्रदायविदः । नव्यास्तु स्वज्ञानपक्षकस्वज्ञानजन्यत्वपरामर्शत्वपक्षकस्य जन्यत्वपरामर्शादितर्काणामात्माश्रयत्वं स्वज्ञानजनकत्वस्वज्ञानविषयत्वस्वाधिकरणत्वापादककापत्तेरप्यात्माश्रयत्वस्यानुभवासिद्धतया तेषां परामर्शोऽपि अन्यतमशरीरे निवेशनीयः इत्थं च विषयपरिशोधकतर्कं प्रति आपादकाभावव्याप्यापाद्याभाववत्तानिश्चयस्यापेक्षागौरवमपि नेति प्राहुः। अथ सम्प्रदायमते ज्ञप्तिस्थले ज्ञानजन्यज्ञानविषयत्वस्यैवापेक्षापदार्थतया एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यजन्यं स्यादिति तर्कस्यान्योन्याश्रयत्वानुपपत्तिः स्वापेक्षापेक्षितत्वापादकत्वविरहात् प्रत्युत एतद्घटो यद्येतद्घटज्ञानजन्यज्ञानविषयज्ञानजन्यज्ञानविषयः स्यादेतद्घटभिन्नः स्यादित्यस्य तथात्वापत्तिरिति चेन्न यतः स्वापेक्षाशब्देनैव स्वस्मिन् स्वापेक्षाबोधनात् ज्ञप्तिस्थले स्वपक्षकस्वज्ञानजन्यज्ञानविषयत्वापादककतर्कस्यैवात्माश्रयत्वम् । स्वापेक्षापेक्षितत्वशब्देन तु स्वस्मिन् स्वापेक्षापेक्षित्वं बोध्यते तदन्तर्गतस्वापेक्षा तु स्वस्मिन् स्वज्ञानजन्यज्ञानविषयत्वं तदाश्रयज्ञानजन्यज्ञानविषयत्वमेव अपेक्षितत्वं तदापादककतर्कस्यैवान्योन्याश्रयत्वम् अत्रैवैतद्घटज्ञानं यद्येतद्घटज्ञानजन्यजन्यं स्यादेतद्घटज्ञानभिन्नं स्यात् इत्यस्यापि तात्पर्यं चक्रकस्थलेऽपि स्वापेक्षापेक्षितस्वापेक्षितत्वशब्दः स्वस्मिन् सापेक्षापेक्षि नस्वापेक्षत्वं शेषयति। अथ सापेक्षापादककत्वं किं तावत् न स्वापेक्षापादिका यत्र प्रसङ्गे स एव आत्माश्रयप्रसङ्ग इति वाच्यं तथा सत्यपि तत्र स्वपदार्थस्य प्रवेशात् प्रकृतासङ्गतेरिति चेन्न स्वापेक्षापादिका आपाद्यव्याप्यतया स्वस्मिन् प्रकारा यत्र इति बहुव्रीहिणा स्वनिष्ठविशेष्यतानिरूपितस्वापेक्षानिष्ठापाद्यव्याप्यत्वावच्छिन्नप्रकारतानिरूपकपरामर्शो लभ्यते तदनन्तरं पञ्चमीतत्पुरुषादरबलात् न च सम्प्रदायमते एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानविषयः स्यादेतद्घटभिन्नः स्यात् इत्यर्थतात्पर्यकत्वेन तत्रेत्यर्थसङ्गतिसम्भवेऽपि नव्यमते तत्तद्घटज्ञानधर्मिकैतद्घटज्ञानजन्यत्वापादककपरामर्शजन्यापत्तेरेवात्माश्रयत्वोपगमेन तत्रैतादृशार्थासङ्गतिः एतद्घटज्ञानधर्मिकैतद्घटज्ञानत्ववत्त्वापरामर्शस्य स्वनिष्ठविशेष्यतानिरूपितस्वापेक्षानिष्ठापाद्यव्याप्यत्वावच्छिन्नप्रकार-

ताकत्वविरहादिति वाच्यं तन्मते बहुव्रीहिसम्पादकव्यासघटकस्य स्वधर्मिणीत्यस्य स्वापेक्षा इत्यस्य घटकस्वज्ञानस्यैव बोधकत्वेन स्वज्ञाननिष्ठविशेष्यतानिरूपितस्वज्ञानजन्यत्वरूपस्वापेक्षानिष्ठापाद्यव्याप्यत्वावच्छिन्नप्रकारकत्वस्यात्माश्रयजनकीभूतपरामर्शाक्षतत्वात् अन्योन्याश्रयादिस्थलेऽपि एवं रीत्या परिष्कार्यमिति सङ्क्षेपः ॥

अथैतद्घटविशिष्टबुद्धौ एतद्घटज्ञानजन्यत्वस्य सत्त्वेन पुनर्व्यभिचारः एतद्घटज्ञानभिन्नत्वरूपापाद्यविरहादिति चेन्न आपाद्यघटकैतद्घटज्ञानपदस्य एतद्घटमुख्यविशेष्यताकज्ञानपरत्वात् तथा चैतद्घटविशिष्टबुद्धौ एतद्घटमुख्यविशेष्यताकज्ञानभिन्नत्वरूपापाद्यस्यापि सत्त्वान्न व्यभिचार इति न चैतद्घटवद्भूतलम् एतद्घटश्चेति समूहालम्बनज्ञानेऽपि एतद्घटज्ञानजन्यत्वसत्त्वात् तत्र एतद्घटमुख्यविशेष्यताकज्ञानभिन्नत्वस्यासत्त्वाद्व्यभिचारतादवस्थ्यमेवेति वाच्यम् एतद्घटमुख्यविशेष्यताकत्वस्य एतद्घटमात्रमुख्यविशेष्यताकान्यार्थत्वात् न चैतद्घटवान् एतद्घट एतद्घटीय इति समूहालम्बनज्ञाने व्यभिचारतादवस्थ्यमेव तत्रैतद्घटमात्रमुख्यविशेष्यताकत्वसत्त्वादिति वाच्यम् किञ्चिदवाच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वे सतीत्यनेन विशेषणीयत्वात् न चैतद्घटवान् एतद्घटीयश्चेति निर्धर्मितावच्छेदकैतद्घटप्रकारकज्ञाने व्यभिचारस्तत्र किञ्चिदवच्छिन्नमुख्यविशेष्यतानिरूपकत्वस्य तद्घटमात्रमुख्यविशेष्यकत्वस्य च सत्त्वादिति वाच्यं किञ्चिदवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वे सतीत्यपहाय मुख्यविशेष्यताद्वयानिरूपकत्वे सतीत्यनेनैव विशेषणीयत्वात् इति । नन्वत्र भागासिद्धिः एतद्घटनिर्विकल्पकज्ञाने एतादृशापादकासत्त्वात् न च सामानाधिकरण्येन पक्षत्वाद् भागासिद्धिर्न दोषायेति वाच्यं सामानाधिकरण्येन पक्षत्वे विशिष्टबुद्धौ विभागापत्तिसम्भवात् इति चेन्न आपत्तौ स्वरूपासिद्धेरेव प्रतिकूलत्वात् न चापाद्याभावेनापादकाभावानुमाने सिद्धसाधनमिति वाच्यम् । अवच्छेदावच्छेदेन पक्षतास्थलेऽशतः सिद्धसाधनस्यादोषत्वादवच्छेदावच्छेदेनानुमितौ अवच्छेदावच्छेदेन सिद्धेरेव प्रतिबन्धकत्वात् । एतेनैतद्घटज्ञानत्वेन एतद्घटनिर्विकल्पकस्यैव पक्षत्वान्नेष्टापत्तिसम्भव इति कस्यचित् प्रलपितमप्यपास्तम् तत्र स्वरूपा-

सिद्धेरदोषत्वेऽपि आपाद्याभावेनापादकाभावसाधने सिद्धसाधनापत्तेः । अप्रामाणिकानन्त्यप्रवाहमूलकप्रसङ्गोऽनवस्था प्रामाणिकं कार्यकारणभावग्राहकप्रमाणसिद्धं तदन्यत्वं अप्रामाणिकत्वमनन्तं विश्रान्तिरहितत्वमिति वाच्यं प्रमाणागम्यवस्त्वप्रसिद्धेः न च घटं प्रति दण्डस्य कारणतायां कथं नानवस्था घटं प्रति कपालं हेतु तं प्रति तदवयव इत्यादिक्रमेण प्रवाहस्य तत्र सम्भवादिति वाच्यं यथाश्रुतप्रवाहसत्त्वेऽपि तत्प्रवाहस्य परमाणौ विश्रामात् विश्रान्तिरहितत्वरूपस्यानन्त्यस्य तादृशप्रवाहविरहात् सजातीयानां क्रमिकानेकरूपप्रवाहत्वस्य तादृशकारणपरम्परायामसत्त्वाच्च न च सजातीयानां क्रमिकानेकत्वं यदि प्रवाहत्वं तदा व्याप्तिग्रहं प्रति तर्कस्य हेतुत्वे कथमनवस्था व्याप्तिग्रहतर्कयोर्द्वयोरेकरूपेण तदुपपादकतया सजातीयानां क्रमिकानेकरूपप्रवाहत्वस्य तत्रापि सम्भवात् न चाप्रामाणिकप्रवाहमूलकप्रसङ्ग एवास्त्वनवस्था अनन्तत्वनिवेशो व्यर्थः घटकारणपरम्परायाः सजातीयक्रमिकत्वरूपप्रवाहत्वाविरहादिति वाच्यं तथा सति घटत्वं यदि कियद्घटहेतुवृत्ति स्याद्घटाजनकवृत्ति न स्यादित्यादेरपि अनवस्थापत्तेः । अथ घटत्वं यदि यावद्घटहेतुवृत्ति स्यात् घटाजनकवृत्तिर्न स्यादित्यादौ यावद्घटहेतुवृत्तित्वं मेयत्वादौ व्यभिचारीति । न च समवायसम्बन्धेन वृत्तित्वं वाच्यं तथा सत्यपि द्रव्यत्वादौ व्यभिचारस्य दुर्वारत्वापत्तेरिति चेन्न तन्मात्रवृत्तित्वस्य विवक्षितत्वादिति ध्येयम् । व्यभिचारशङ्कानिवर्तकतर्को यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यात् इत्येतत्कारणीभूतवह्निजन्यत्वाभावव्याप्यवह्निव्यभिचारित्ववानिति निश्चयप्रतिबन्धकं यत् व्यभिचारज्ञानं तन्निवर्तकतर्को यथा वह्निव्यभिचारित्वं यदि वह्निजन्यत्वाभावव्यभिचारि स्यात् तदा वह्निव्याप्यपदार्थवृत्ति स्यादिति एतत्तर्ककारणीभूतव्याप्तिनिश्चयप्रतिबन्धकव्यभिचारशङ्कानिवर्तकतर्को यथा वह्निजन्यत्वाभावव्यभिचारित्वं यदि वह्निव्याप्यपदार्थवृत्तित्वव्यभिचारि स्यात्तदा वह्निव्याप्यपदार्थवृत्तिधर्मावृत्ति स्यादित्येतत्तर्ककारणीभूतव्याप्तिनिश्चयप्रतिबन्धकव्यभिचारशङ्कानिवर्तकतर्को यथा वह्निव्याप्यपदार्थवृत्ति-

धर्मावृत्तित्वव्यभिचारि स्यात्तदा वह्निव्याप्यपदार्थवृत्तिधर्मावृत्ति न स्यादित्यादिसर्वत्र प्रथमहेतुः पक्षः आपाद्यव्यभिचारित्वमापादकम् आपाद्यं च यथायोग्यमूहनीयमिति ध्येयम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
तर्कजागदीशीक्रोडपत्रं समाप्तम् ।



# अथ सामान्यलक्षणाजागदीशीक्रोडपत्रम् ।

अत्र बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वं च नियामकमिति शिरोमणिः । न च लौकिकसन्निकर्षस्य नानात्वात् संयोगाद्येकतरानिवेशेऽन्यतो ज्ञायमानप्रत्यक्षस्थले व्यभिचार इति वाच्यम् चक्षुर्लौकिकचाक्षुषजनकताघटकसम्बन्धत्वेन चक्षुर्लौकिकसान्निकर्षमात्रस्यैव प्रविष्टत्वादिति जगदीशः । न च चक्षुर्निष्ठचाक्षुषजनकताघटकसम्बन्धत्वेन निवेशेनैव सामञ्जस्ये कृतं लौकिकत्वनिवेशेनेति वाच्यम् कालिकसम्बन्धेन चक्षुःप्रकारकघटादिविषयकचाक्षुषोत्तरं कालिकसम्बन्धेन चक्षुर्निखिलाश्रयचाक्षुषोपपादनायेन्द्रियसम्बद्धविशेष्यकचाक्षुषप्रकारतापन्नचक्षुषोऽपि कालिकेन चक्षुःप्रकारकचाक्षुषं प्रति कालिकसम्बन्धेन हेतुतया चक्षुःसंयोगविगमेऽपि चक्षुर्निष्ठचाक्षुषजनकताघटकचक्षुर्निरूपितकालिकसम्बन्धमादाय चाक्षुषापत्तेरिति । केचित्तु कालिकसम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति कालिकसम्बन्धेन चक्षुष्ट्वेन सामान्यकारणतया कालिकस्यापि चक्षुर्निष्ठचाक्षुषजनकताघटकसम्बन्धतया तमादाय चक्षुःसंयोगविगमेऽपि चाक्षुषापत्तिरतः लौकिकेति लौकिकविषयत्वघटितधर्मावच्छिन्नजन्यतालाभाय । न च चक्षुर्निष्ठलौकिकविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताघटकेत्यस्य सामञ्जस्ये चाक्षुषपदं व्यर्थमिति वाच्यम् लौकिकविषयताकप्रत्यक्षं प्रति तादात्म्येन विषयत्वेन हेतुतया तादात्म्यस्यापि निरुक्तसम्बन्धत्वात् द्रव्यत्वप्रकारकसामान्यलक्षणाजन्यचाक्षुषोत्तरं चक्षुःसंयोगनाशेऽपि द्रव्यत्वप्रकारकचाक्षुषापत्तेः । चक्षुर्निरूपितनिरुक्तजनकताघटकतादात्म्यसम्बन्धाश्रयचक्षुर्विशेष्यकचाक्षुषप्रकारतापन्नद्रव्यत्वस्य सत्त्वादतश्चाक्षुषपदं चाक्षुषत्वावच्छिन्नार्थकमित्याहुः । अत्रैवमपि चक्षुर्निष्ठेति व्यर्थं लौकिकचाक्षुषजनकताघटकसम्बन्धेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगादेः समवायेन हेतुतया द्रव्यत्वप्रकारकसामान्यलक्षणाजन्यचाक्षुषान्निमिलितनय-

नस्यापि द्रव्यत्वप्रकारकचाक्षुषापत्तेः । चक्षुर्निरूपितलौकिकचाक्षुषजनकताघटकसमवायसम्बन्धाश्रयचक्षुरवयवविशेष्यकचाक्षुषप्रकारतापन्नद्रव्यत्वस्य सत्त्वात् न च तथापि संयुक्तसमवायस्य तथात्वेन तस्य च साक्षाच्चक्षुर्निरूपितत्वसत्त्वेन स्वावयवे चक्षुषस्तादृशसन्निकर्षमादायोक्तदोषतादवस्थ्यमिति वाच्यं चक्षुःसन्निकृष्टधर्मिकेत्यनेन तादृशजनकताघटकसम्बन्धेन चक्षुर्विशिष्टेत्यस्य वाच्यत्वात् तथा च येन रूपेण जनकताघटकसंसर्गता तेन रूपेण चक्षुर्वैशिष्ट्यं निवेशितं तेन तस्य चक्षुर्निरूपितसंसर्गतालाभः अतो न पूर्वानुपपत्तिः एवं संयोगत्वेन सामान्यतो जनकताघटकसंसर्गतया वाच्यादिसंयोगमादायापि नातिप्रसङ्गः। न चैवं चक्षुर्निष्ठत्वं चाक्षुषनिरूपितत्वं च द्वयमपि जनकतायामनिवेश्य चक्षुष्ट्वावच्छिन्नलौकिकविषयत्वावच्छिन्नजन्यतानिरूपितजनकत्वमेव निवेश्यते तदैव नोक्तदोष इति वाच्यं प्रकारान्तरस्य प्रकारान्तरादूषकत्वात् । अथवा तदेव निवेश्यं चाक्षुषनिरूपितत्वादिकं च उपलक्षणीयम् यदि च विनश्यदवस्थचक्षुःसंयोगाश्रयघटादिविशेष्यकद्रव्यत्वसामान्यलक्षणाजन्यचाक्षुषोत्तरं गगनादौ चक्षुःसंयोगस्तदानीमपि चक्षुःसन्निकृष्टगगनादिविशेष्यकचाक्षुषप्रकारतापन्नद्रव्यत्वस्य सत्त्वात् तदुत्तरं द्रव्यत्वप्रकारकचाक्षुषापत्तिरतस्तद्वारणाय चक्षुःसन्निकृष्टायोग्यत्वं निवेश्यं तथा च चक्षुरवयवस्यायोग्यत्वात्तद्विशेष्यकचाक्षुषसत्त्वेऽपि तत एव निमीलितनयनस्य नोक्तस्थले चाक्षुषापत्तिरित्युच्यते तदा समवायस्यैक्यमते चक्षुर्निरूपितसमवायसम्बन्धस्य घटादावपि सत्त्वेन तद्विशेष्यकचाक्षुषमादाय निमीलितनयनस्य उक्तस्थले चाक्षुषापत्तिरतस्तद्वारणाय चक्षुर्निष्ठेत्यस्य सार्थक्यं कथंचित् समर्थनीयमिति तु विभावनीयम्॥

एवं चानुत्वेन यत्किञ्चिदनुपस्थितावपि सकलानुगोचरो मानसो बोध इति शिरोमणिः । वहिःपर्यन्तस्य फलमाह एव चानुत्वेनेत्यादि जगदीशः । अत्र लौकिकसन्निकर्षापेक्षायामनुत्वस्य मानवलौकिकसन्निकृष्टविशेष्यकज्ञानाप्रकारकत्वात्तत्प्रत्यासत्त्या सकलानुगोचरो मानसो बोधो न स्यादिति भावः । अत्र केचिदनुत्वेनेति सावसाधारणम् अन्यथानुत्वेन यत्किञ्चिदनुपस्थि-

तावपि द्रव्यत्वेन सकलानुपस्थितिसम्भवात् सकलानुगोचरमानसबोधोपपत्तिरिति वदन्ति । तन्न यत्किञ्चिदनुपस्थितावित्यस्यान्वन्तरानुपस्थितिकालीनयत्किञ्चिदनूपस्थितिपर्यवसानात् यत्किञ्चिदनुमात्रोपस्थितिपरताया आवश्यकत्वेन द्रव्यत्वेन सकलानूपस्थितिदशायां सावधारणत्वासम्भवादन्यथानुत्वेन सकलानुपस्थितावित्यर्थकतायाः सर्वजनानुभवसिद्धत्वेन द्रव्यत्वेन सकलानूपस्थितिमादाय तद्दोषतादवस्थ्यभयेनावधारणपरत्वमावश्यकमिति वाच्यम् यत्किञ्चिदनूपस्थितावित्यस्यान्वन्तरानुपस्थितिकालीनतदनुव्यक्त्युपस्थित्यर्थकतायाः सर्वानुभवसिद्धत्वात्तत्रैवमुपस्थितावणुत्वेन इत्यस्याणुत्वप्रकारकत्वस्यान्वयादिति भावः ।

बहिरिन्द्रियस्य स्वायोग्यमात्रनिष्ठमुख्यविशेष्यताकज्ञानाजनकत्वादिति जागदीशी । अथात्र स्वायोग्यमात्रनिष्ठत्वं स्वयोग्यावृत्तित्वे सति स्वायोग्यवृत्तित्वं तच्च सौरभमात्रविशेष्यकसौरभमित्यादिज्ञाने सम्भवति अतस्तदजनकत्वनियमोऽपि बाहिरिन्द्रियस्येति । अथैवं सति प्रमेयत्वसामान्यप्रयोज्यविशेष्यताया नानात्वेन तज्जन्यसौरभमुख्यविशेष्यकं प्रमेयमित्याकारकज्ञानमपि न स्यात्तस्यापि स्वायोग्यमुख्यविशेष्यकत्वादिति । न चेष्टापत्तिः स्वायोग्यमात्रनिष्ठेत्यादौ मात्रपदस्य व्यर्थतापत्तेः । न चेष्टापत्तिः । न च स्वायोग्यानिष्ठमुख्यविशेष्यत्वानिरूपितत्वस्वायोग्यनिष्ठमुख्य विशेष्यतानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टप्रकारताशालिज्ञानाजनकत्वस्यैव नियमः स्वं चक्षुरादि अतो न प्रमेयत्वसामान्यलक्षणाजन्यप्रत्यक्षस्य बाध इति वाच्यं तथा सति सौरभत्वादिरूपेण चन्दनविशेष्यकभ्रमकाले सौरभत्वादिरूपेण सौरभमुख्यविशेष्यकमपि चाक्षुषं स्यात् प्रकारतायाः प्रकारस्वरूपेणैक्यात् न स्याच्च प्रमेयरूपेण प्रमेयप्रकारकसामान्यलक्षणाजन्यप्रत्यक्षं तदीयतादृशप्रताया नानात्वात् विशेष्यताया भेदेन प्रकारताभेदस्वीकारे तु प्रमेयत्व सामान्यलक्षणाजन्य प्रत्यक्षस्यैवासंग्रहापत्तिः तथा प्रमेयत्वसामान्यलक्षणाजन्यस्य जातित्वरूपेण यत्किञ्चिज्जात्युपस्थित्यनन्तरं सौरभाद्यंशे तादृशजातेर्भ्रमात्मकोपनीतभानात्मकनिखिलप्रमे-

यविशेष्यकप्रमेयत्वप्रकारकसमूहालम्बनप्रत्यक्षस्यानुदयप्रसङ्गाश्चेति चेन्न स्वयोग्येतरनिष्ठमुख्यविशेष्यताकज्ञानाजनकत्वमिति फलितार्थः स्वयोग्येतरनिष्ठमुख्यविशेष्यत्वञ्च स्वयोग्यवृत्तिविशेष्यताप्रयोजकीभूतालौकिकसन्निकर्षाप्रयोज्यं ग्राह्यं तेन प्रमेयत्वसामान्यलक्षणजन्यप्रत्यक्षस्य नासंग्रहः सौरभादिनिष्ठलौकिकालौकिकमुख्यविशेष्यताकसौरभत्वप्रकारकचाक्षुषादेश्च नासंग्रहः । अथवा लाघवात् स्वयोग्येतरनिष्ठत्वस्वयोग्यवृत्तिमुख्यविशेष्यताप्रयोजकालौकिकसन्निकर्षाप्रयोज्यत्वोभयसम्बन्धेन स्वाविशिष्टमुख्यविशेष्यताकज्ञानाजनकत्वं स्वस्येति अयमेकफलितार्थो वाच्य इति विभावनीयम् । केचित्तु स्वयोग्यवृत्तिविषयतावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रकारतानिरूपितसामान्यलक्षणासंसर्गावच्छिन्नकारणत्वाभाववत्त्वमेव वहिरिन्द्रिये स्वाग्यमात्रनिष्ठमुख्यविशेष्यताकज्ञानाजनकत्वं तथा च सामान्यलक्षणज्ञानलक्षणादिसम्बन्धेन चक्षुरादेरेव जनकत्वं तस्य तेषामलौकिकसन्निकर्यत्वात् सामान्यलक्षणादेस्तादृशकारणतावच्छेदकसंसर्गत्वञ्च स्वजन्यचाक्षुषादिसामग्रीकालीनसामान्यविषयकज्ञानसम्बन्धेन तादृशज्ञानस्य विषयनिष्ठत्वञ्च यथोक्तसम्बन्धेन वाच्यमतो न काप्यनुपपत्तिरित्याहुस्तच्चिन्त्यं यत्तु स्वयोग्यवृत्तिविशेष्यताप्रयोजकालौकिकसन्निकर्षाप्रयोज्यत्वस्वयोग्यमात्रवृत्तिधर्मनिष्ठप्रकारतान्यतरवत्स्वयोग्योत्तरनिष्ठमुख्यविशेष्यताशालिज्ञानाजनकत्वमिति फलितम् । तेन प्रमेयत्वसामान्यसौरभत्वाद्युपनीतभानात्मकप्रमेयं सौरभमित्याकारकसौरभमुख्यविशेष्यताकप्रत्यक्षप्रसङ्गः स्यादिति परास्तम् । तन्न सामान्याविषयकज्ञानस्यैतन्मते प्रत्यासत्तित्वात्तदानीं सौरभत्वसामान्यलक्षणायाः सत्त्वेन तस्या एव विशेष्यतान्तरप्रयोजकत्वेन पूर्वकल्पेऽस्यैव सम्यक्त्वात् न तादृशविशेष्यतायां स्वायोग्यमात्रवृत्तिधर्मप्रकारतानिरूपितत्वानिवेश इति न काप्यनुपपत्तिरिति सुधीभिर्भाव्यम् । वस्तुतस्तु प्रमेयत्वसामान्यलक्षणाप्रयोज्यविशेष्यताया ऐक्याभिप्रायेणेदमभिहितं तादृशविशेष्यताया नानात्वस्वीकारे तु, सौरभत्वादिनिर्विकल्पकचाक्षुषमिव वस्तुत इति कल्पेनैवाग्रे तादृशतादृशरूपेण प्रतिबन्धकताकल्पनया वारणीयमिति भावः ।

धूलीपटले धूमत्वभ्रमे तत्र च वह्निव्याप्तिग्रहे तत्रासता धूमत्वेन धूमेषु व्याप्त्यग्रहाद् धूमदर्शनात् वह्न्यनुमितिर्न स्यात् इति शिरोमणिः । अत्र तु विशेषणपदस्य धर्मार्थककत्वे दोषमाह धूलीपटलेत्यादि जागदीशी । अत्रेयमाशङ्का धूलीपटले धूमत्वभ्रमदशायां धूमत्वेन सकलधूमानुपस्थितावपि न क्षतिः । तदानीं धूमव्यापकवह्निसामानाधिकरण्यस्य चक्षुःसन्निकृष्टतया तद्वृत्तितादृशसामानाधिकरण्यत्वप्रत्यासत्त्यैव तादृशसामानाधिकरण्यरूपसकलव्यक्त्युपस्थितौ बाधकाभावेन कालान्तरे पर्वते धूमदर्शनात्तादृशव्याप्तिस्मृतिसम्भवेन परामर्शस्याप्यनुपपत्त्यसम्भवात् । न च गुञ्जापुञ्जे वह्नित्वभ्रमकालीनतत्समानाधिकरणधूलीपटलधर्मिकधूमत्वभ्रमदशायां तादृशसामानाधिकरण्यत्वप्रत्यासत्त्यापि व्याप्त्युपस्थित्यसम्भवस्तत्रैव दीधितिकृता दोषप्रदानादिति वाच्यं तथासति धूमत्वभ्रमपर्यन्तानुधावनवैयर्थ्यापत्तेः वह्निसामानाधिकरण्यस्यैवासन्निकृष्टतया व्याप्तिग्रहासम्भवात् । अत्र केचित् । धूमव्यापकवह्निसामानाधिकरण्यत्वस्य चक्षुःसन्निकृष्टवृत्तितया तद्रूपेण सकलव्याप्त्युपस्थितावपि तादृशभ्रमदशायां स्थलान्तरे धूमदर्शनात् व्याप्तिस्मृतावपि न तत्र व्याप्तिग्रहसम्भवः यो यत्र विशिष्य पूर्वं गृहीतः स एव तत्र संस्कारवशात् अयथार्थप्रत्यक्षे भासत इति नियमादिति तदानीं धूमोपस्थित्यर्थं [illegible] पर्यन्तनिवेश इत्याहुः । तच्चिन्त्यं विशिष्टधूमत्वस्मृतेरसम्भवेऽपि व्याप्तिविशेष्यकस्मरणानन्तरं तादृशस्मरणरूपज्ञानलक्षणया व्याप्त्यंशेऽलौकिकपरामर्शसम्भवात् । वस्तुतो धूमधर्मिकव्याप्तिप्रत्यक्षे न व्याप्त्यंशे लौकिकविषयता तद्घटकयावत्पदार्थेषु लौकिकसन्निकर्षासम्भवात् किं तु तदंशेऽलौकिकविषयतैव तत्र व्याप्तिघटकधूमातिरिक्तयावत्पदार्थोपस्थितौ धूलीपटले धूमत्वभ्रमदशायां धूमोपस्थित्यभावे तदानीं तद्घटितव्याप्तिग्रहासम्भवेन कालान्तरे धूमदर्शनात् धूमघटितव्याप्तिस्मरणाभावेन परामर्शस्यासम्भव एव दोषो दीधितिकृतामाशयः । न च बहिरिन्द्रियजन्यप्रत्यक्ष एव लौकिकसन्निकर्षाश्रयवृत्तित्वापेक्षणात् धूमत्वभ्रमानन्तरं धूमत्वरूपेण यावद्धूमविषयकमानसबोधे बाधकाभावात्

२८

तत एव तदानीं धूमघटितव्याप्तिग्रहस्यासम्भवात् इति वाच्यं यत्र तादृशभ्रमानन्तरं त्रिचतुरादिक्षणपर्यन्तं चाक्षुषसामग्रीविगमो न जातः जातो वा पदार्थान्तरश्रवणादिसामग्री सर्वापेक्षया मानससामग्र्या दुर्बलत्वेन तत्र तदानीं मानसस्यापि व्याप्तिग्रहस्यासम्भवादिति । न च तादृशभ्रमदशायां धूमोपस्थितावपि तद्घटितव्याप्तिग्रहो मानसात्मक एव इति सिद्धिर्दुर्वारैवेति वाच्यं धूलीपटलांशे ऽलौकिकविषयताशालिनस्तदंशे लौकिकविषयताशालिनश्चाक्षुषस्यैव सम्भवात् ॥

धूलीपटले धूमत्वभ्रम इत्यादिदीधितिः । तथा च चक्षुःसन्निकृष्टधूलीपटलवृत्तित्वस्य धूमत्वेऽसत्त्वात् यावद्धूमत्वाश्रयप्रत्यक्षासम्भवेन व्याप्तिग्रहस्य तादृशसामान्याश्रयधूमधर्मिकत्वाभावात् पर्वतीयधूमदर्शनात् वह्न्यनुमितिर्न स्यात् धूलीपटलविशेष्यकव्याप्तिस्मरणेऽपि तस्य तादृशव्याप्तिप्रकारेण पर्वतीयधूमविशेष्यकत्वाभावात् अभ्रान्तपुरुषस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शासम्भवादनुपपत्तेराशङ्केति भावः । अथात्र वह्निव्याप्यो धूम इति धूलीपटलविशेष्यकव्याप्तिग्रहकाले व्याप्तित्वसामान्यलक्षणया निखिलधूमादिग्रहो भविष्यत्येव तत एव धूलीपटलविशेष्यकनिखिलव्याप्तिप्रकारकानुभवसम्भवात् । पर्वतीयधूमदर्शनोत्तरं तन्मूलकसंस्कारतो जायमाननिखिलव्याप्तिप्रकारकस्मरणात् स्मरणद्वितीयक्षणे धूमो वह्निव्याप्य इति पर्वतीयधूमविशेष्यकव्याप्त्युपनीतभावसम्भवेन तदुत्तरक्षणेऽभ्रान्तस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शसम्भवान्नानुपपत्तिः क्षणविलम्बस्य सपथनिर्णेतव्यत्वादिति चेन्न धूलीपटलविशेष्यकव्याप्तिस्मरणद्वितीयक्षणे घटादिविधेयकानुमितिसामाग्री तत्क्षणे विशेषणज्ञानमूलकधूमविशेष्यकवह्निव्याप्यो धूम इति ज्ञानसम्भवेऽपि तत्र भिन्नविषयकानुमितिसामग्रीत्वेन प्रतिबन्धकत्वात्तदुत्तरक्षणे विशिष्टपरामर्शासम्भवेनानुमित्युत्पादापत्तेरिति अस्माकं तु सामग्र्युत्तरक्षणे तादृशपरामर्शे बाधकाभावान्नानुपपत्तिरिति । वस्तुतस्तु हेतुविशेषिताधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य व्याप्तित्वेन तदानींधूमत्वसामान्यलक्षणया धूमज्ञानस्यासम्भवेन तद्घटिततादृशवि-

शिष्टव्याप्तिज्ञानस्याप्यसम्भवात्तादृशज्ञानमूलकस्मरणादितोऽनुमित्युत्पत्तेरयोग इत्यवधेयम् ॥

तथा च तत्पुरुषीयघटत्वादिप्रकारकचाक्षुषं प्रति तत्पुरुषीयचक्षुःसन्निकृष्टविशेष्यकतदीयघटत्वादिप्रकारकचाक्षुषत्वेन हेतुत्वमत्रापि कार्यस्यालौकिकमुख्यविशेष्यत्वं कारणस्य तु स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यत्वं प्रत्यासत्तिरिति जगदीशः। अथ द्रव्यत्वप्रकारकाविशिष्टबुद्ध्यात्मकघटत्वनिर्विकल्पकोत्तरं जायमाने घटांशे लौकिकघटत्वप्रकारकद्रव्यत्वसामान्यलक्षणाजन्यज्ञाने व्यभिचारस्तादृशघटत्वप्रकारकचाक्षुषस्यैवालौकिकमुख्यविशेष्यतासम्बन्धेन पटादावपि सत्त्वेन तत्रोक्तसम्बन्धेन घटत्वप्रकारकचाक्षुषात्मकहेतोरसत्त्वादिति घटत्वाश्रयनिष्ठालौकिकमुख्यविशेष्यत्वस्य कार्यताघटकसंसर्गोक्तावपि उक्तव्यभिचारो दुर्वारः तादृशसम्बन्धेनाप्युक्तज्ञानस्य घटादावेवोत्पत्त्या तत्र घटत्वप्रकारकचाक्षुषस्यासत्त्वात्। न च कार्यतावच्छेदककोटौ प्रकारतायामलौकिकत्वनिवेशान्नैष दोष इति वाच्यं तथाप्युक्तरीत्या उपनयमर्यादया घटत्वप्रकारकद्रव्यत्वसामान्यलक्षणाजन्यज्ञाने व्यभिचारापत्तेरिति मैवं घटत्वप्रकारतानिरूपितघटत्वाश्रयनिष्ठालौकिकविशेष्यत्वस्य कार्यतावच्छेदकसम्बन्धत्वादेवोक्तदोषाणामनवकाशादिति ध्येयम् ॥

तथा च स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन तत्प्रकारकप्रत्यक्षं प्रति स्वविषयीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन तद्विषयकज्ञानत्वेन हेतुत्वं न तु चक्षुरादीन्द्रियभेदेन द्विधा तत्पुरुषीयत्वनिवेशेन कार्यकारणभावो गौरवात् न च निर्विकल्पकोत्तरं घट इति प्रत्यक्षस्य यावद्घटमुख्यविशेष्यकत्वापत्तिरिति वाच्यम् इष्टत्वात्। न च तद्विषयकत्वतत्प्रकारकत्वयोः समशरीरतया तद्विषयकत्वेनैव हेतुत्वमिति विनिगमकाभाव इति वाच्यं प्राथमिके विशिष्टप्रत्यक्षे सौरभादिमुख्यविशेष्यकज्ञानोत्तरं जायमाने सुरभिचन्दनमित्यादिप्रत्यक्षे च व्यभिचारादेव तत्प्रकारकज्ञानत्वेन हेतुत्वासम्भवादिति जगदीशः। अथात्र कार्यकारणभावे तत्पुरुषीयत्वानिवेशात् यस्य कस्यचित् पुरुषस्यान्ततः ईश्वरस्य च घटत्वसौरभादिप्रकारकज्ञानसत्त्वात् कथं व्यभिचार इति

न च तत्पुरुषीयत्वानिवेशे एकपुरुषस्य घटत्वादिप्रकारकज्ञानदशायां पुरुषान्तरस्य घटे चक्षुःसंयोगदशायामपि सामान्यलक्षणाजन्यप्रत्यक्षापत्तिरिति वाच्यं समवायघटितसामानाधिकरण्यप्रत्यासत्त्या विशिष्टबुद्धिं प्रति विशेषणज्ञानत्वेन हेतुतया तदापत्तिविरहादिति चेन्न समवायेन घटत्वप्रकारकज्ञानदशायां कालिकेन पुरुषान्तरस्य घटत्वप्रकारकज्ञानं तत्र समवायेन घटत्वप्रकारकज्ञानवतः पुरुषस्य कालिकसम्बन्धेन तदाश्रयप्रत्यक्षापत्तिस्तदानीं कालिकेतरसम्बन्धावच्छिन्न[illegible]विषयताशालिपुमन्तरीयज्ञानसत्त्वादतो नव्यमतेऽपि कार्यकारणोभयांशे तत्पुरुषीयत्वनिवेशस्यावश्यकत्वात्तत्प्रकारकत्वेन हेतुत्वे चन्दने सौरभमित्यादिज्ञानोत्तरं जायमाने सुरभिचन्दनमित्यादिप्रत्यक्षे व्यभिचारो दुर्वार इति तत्परित्यज्य तद्विषयताशालिज्ञानत्वेन हेतुत्वमुक्तमिति न च समवायघटितसामानाधिकरण्यप्रत्यासत्त्या कथं कार्यकारणभावः परित्यक्त इति वाच्यं समवायघटितसामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभावे यावदाश्रयभानस्य कारणानियम्यतया यावदाश्रयभानस्य कारणनियम्यानुरोधेन तत्परित्यज्य तादृशसम्बन्धेन कार्यकारणभावस्योक्तत्वादिति भावः। केचित्तु प्रत्यक्षविषयतायाः कारणतावच्छेदकसम्बन्धेन सन्निकर्षस्य व्याप्यत्वमिति नियमात् सन्निकर्षस्य विषयप्रत्यासन्नस्यैव हेतुत्वमिति मतमभ्युपेत्य समवायसम्बन्धेन कार्यकारणभावः परित्यक्तः। न च विषयत्वस्य घटत्वेऽपि सत्त्वात् तत्र सन्निकर्षाभावात् कथं व्यापकत्वमिति वाच्यं स्वप्रयोज्यप्रत्यक्षस्य विषयत्वस्य सन्निकर्षव्याप्यत्वनियमात्। न च समवायेन ज्ञानलक्षणायाः कार्यकारणभावस्य निर्वाच्यत्वेन तन्नियमो ग्रन्थकृतामनभिप्रेत इति वाच्यं तत्रापि प्रकारतासम्बन्धेन तत्पुरुषीयप्रत्यक्षं प्रति विषयतासम्बन्धेन तत्पुरुषीयज्ञानत्वेन हेतुत्वस्य ग्रन्थकृतोऽभिप्रेतत्वादित्याहुः। यद्यपि स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन तदीयप्रत्यक्षं प्रति स्वविषयीभूतसामान्याश्रयनिष्ठविषयतासम्बन्धेन तदीयज्ञानत्वेन हेतुत्वेनैवोपपत्तौ कार्यतावच्छेदके घटत्वादिप्रकारकत्वस्य कारणतावच्छेदके घटत्वादिविषयकत्वस्य च निवेशो व्यर्थः। न चैवं समवायेन घटत्वप्रकारकज्ञानात् कालि-

कसम्बन्धेन घटत्वप्रकारकप्रत्यक्षापत्तिरिति वाच्यं तत्सम्बन्धावच्छिन्नस्वप्रकारताश्रयं यत्सामान्यं तदाश्रयनिष्ठविशेष्यतासम्बन्धेन प्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नस्वविषयताश्रयं यत्सामान्यं तदाश्रयनिष्ठविषयतासम्बन्धेन ज्ञानत्वेन हेतुत्वस्य वक्तव्यत्वात्तथापि सम्बन्धघटकत्वेन सम्बन्धभानानङ्गीकर्तृनये समवायसम्बन्धावच्छिन्नप्रकारताश्रयवन्निष्ठविशेष्यत्वादेः कार्यतावच्छेदकसम्बन्धत्वाभावेन कार्यतावच्छेदकादौ घटत्वप्रकारकत्वादिनिवेशनमावश्यकमिति विभावनीयम् ॥

वस्तुतस्तुक्तकल्पे तद्विषयकज्ञानत्वेन हेतुत्वे समवायेन घटत्वप्रकारकज्ञानात् कालिकेन तदाश्रयस्य कालादेः प्रत्यक्षापत्त्या तत्सम्बन्धावच्छिन्नतत्प्रकारकतदाश्रयत्वं प्रति तदितरसम्बन्धानवच्छिन्नतन्निष्ठविषयताशालिज्ञानत्वेन हेतुत्वमुक्त जगदीशेन । अत्र कल्पे प्राथमिकघटत्वविशिष्टबुद्ध्युत्तरं घटत्व जानामीत्यनुव्यवसाये व्यभिचारः तदनुव्यवसायस्य विषयतासम्बन्धेन सामान्यलक्षणास्थले तादृशसम्बन्धेन घटत्वप्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नत्वमनिवेश्य घटत्वविषयताशालिज्ञानत्वेनैव हेतुत्वस्य वक्तव्यत्वादिति ध्येयम् ॥

न चैवं घटवदित्युपनीतचाक्षुषस्यापि घटादिमुख्यविशेष्यकत्वापत्तिः उक्तकार्यकारणभावस्यापादकत्वादिष्टापत्तौ च उपनीत विशेषणतयैव भासत इत्यस्य विरोध इति वाच्यं मुख्यविशेष्यतया द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुरादिलौकिकसन्निकर्षाभावविशिष्टज्ञानत्वेन विषयतया प्रतिबन्धकत्वादत एव सत्यपि भूतलादिविषयकज्ञाने लौकिकसन्निकर्षदशायां तन्मुख्यविशेष्यकलौकिकप्रत्यक्षमिति ध्येयमिति जगदीशः । ननु मुख्यविशेष्यतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रत्येव तादृशप्रतिबन्धकत्वं कल्पयितुमुचितं तावतैव घटाद्युपनीतचाक्षुषस्य घटादिमुख्यविशेष्यकत्वापत्तिवारणसम्भवात् किं द्रव्यपदोपादानेनेति गुणाद्युपनीतचाक्षुषस्य गुणादिमुख्याविशेष्यकत्वापत्तिरतो मुख्यविशेष्यतासम्बन्धेन गुणादिचाक्षुषादिकं प्रति प्रतिबन्धकत्वान्तरकल्पनमप्यपास्तं न च प्रतिबन्धकतायां चक्षुर्लौकिकसन्निकर्षस्य नानात्वेन संयोगत्वेन संयोगस्योत्तेजकत्वे गुणप्रकारकज्ञानोत्तरं

गुणादौ लौकिकसन्निकर्षात् गुणमुख्यविशेष्यकचाक्षुषं न स्यात् तत्र चक्षुःसंयोगाभावविशिष्टज्ञानस्य सत्त्वादतो लौकिकसन्निकर्षस्य उत्तेजकत्वानुरोधेन द्रव्यगुणाद्यन्तर्भावेनैव पृथक् प्रतिबन्धकत्वं युक्तमिति वाच्यं स्वरूपसमवायान्यतरसम्बन्धेन चक्षुर्निष्ठलौकिकचाक्षुषजनकताघटकसम्बन्धत्वस्वरूपसंयोगसंयुक्तसमवायादिसाधारणरूपेणैवाभावस्य निवेशनीयत्वात् इति चेन्न यत्र घटत्वप्रकारकघटज्ञानं घटेऽपि लौकिकसन्निकर्षः नालोकसमवधानं भूतलादौ लौकिकसन्निकर्ष आलोकसंयोगश्च तदुत्तरं भूतलं घटवदिति घटोपनीतचाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तिस्तत्र लौकिकसन्निकर्षाभावे विशिष्टज्ञानाभावसत्त्वात् न चेष्टापत्तिः उपनीतं विशेषणतयैव भासते इति नियमभङ्गप्रसङ्गात् न च तत्र लौकिकसन्निकर्षमर्यादयैव घटमुख्यविशेष्यकत्वमिति वाच्यं लौकिकविषयतासम्बन्धेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति आलोकसंयोगस्य हेतुतया घटादौ तदानीं तद्विरहात् तस्माल्लौकिकसन्निकर्षालोकसंयोगोभयाभावविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्व वाच्यम् एवं सति द्रव्यपदानुक्तौ गुणमुख्यविशेष्यकप्रत्यक्षानुत्पादप्रसङ्गः। गुणादौ आलोकसंयोगाभावादेवोभयाभावविशिष्टज्ञानसत्त्वात् द्रव्यपदोपादाने च मुख्यविशेष्यतासम्बन्धेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकचक्षुःसंयोगालोकसंयोगोभयाभावविशिष्टज्ञानत्वेन प्रतिबन्धकमिति विशिष्यैव पृथक् पृथक् प्रतिबन्धकत्वकल्पनान्नानुपपत्तिरिति न च तथापि स्वरूपसमवायान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकचक्षुर्निष्ठलौकिकचाक्षुषजनकताघटकसंसर्गालोकनिष्ठचाक्षुषजनकताघटकसंसर्गे एतदुभयाभावविशिष्टज्ञानत्वेन विषयतासम्बन्धेन चाक्षुषं प्रति प्रतिबन्धकत्वोपगमेनैव गुणमुख्यविशेष्यकचाक्षुषोत्पादसम्भवाद्व्यर्थं द्रव्यपदोपादानमिति वाच्यं यत्र कपालादौ चक्षुःसंयोगादिदशायां घटोत्पत्तिद्वितीयक्षणे घटवत् कपालमित्याद्युपनीतचाक्षुषोत्पादस्तत्र तादृशचाक्षुषस्य घटमुख्यविशेष्यकत्वापत्तेः तादृशान्यतरसम्बन्धेन चक्षुर्निष्ठलौकिकचाक्षुषजनकताघटकचक्षुःसंयुक्तसमवायादेः घटादौ सत्त्वेन तादृशोभयाभावविशिष्टज्ञानस्यासत्त्वा-

दित्यवधेयम्। चक्षुर्लौकिकसन्निकर्षाभाववैशिष्ट्यं च चक्षुर्योग्यवृत्तिलौकिकसन्निकर्षाभाववैशिष्ट्यरूपं ग्राह्यम् अन्यथा यत्र परमाणौ सन्निकर्षस्तस्य ज्ञानं च घटादौ च सन्निकर्षस्तदुत्तरं परमाणुकालीनो घट इति घटमुख्यविशेष्यकपरमाणुमुख्यविशेष्यकत्वापत्तिः परमाणौ लौकिकसन्निकर्षाभावविशिष्टज्ञानाभावस्य सत्त्वात् न चेष्टापत्तिरुपनीतं विशेषणतयैव भासत इति नियमभङ्गप्रसङ्गात् न च लौकिकसन्निकर्षमर्यादयैव तस्य परमाणुमुख्यविशेष्यकत्वं लौकिकविषयतया द्रव्यचाक्षुषत्वावच्छिन्नं प्रति महत्त्वादेर्हेतुतया परमाणौ तद्विरहादिति ॥

अथैवमुक्तप्रतिबध्यप्रतिबन्धकभावे सामान्यलक्षणाजन्यचाक्षुषाद्युत्तरं तज्जन्यचाक्षुषधारानुपपत्तिः इष्टापत्तौ च अपेक्षणीयं चेत्यादिना दीधितिकारेण तदिन्द्रियकरणकतदर्थवत्त्वबोधसामग्र्याः सहकारित्वकल्पनवैयर्थ्यमुक्तप्रतिबन्धकबलादेवान्धतमसे सौदामिनीसंपातजनितद्रव्यप्रत्यक्षोत्तरनिखिलद्रव्यसाक्षात्कारासम्भवात् न च विनश्यदवस्थसौदामिनीसंपातजनितनिर्विकल्पकोत्तरमन्धतमसेऽपि निखिलद्रव्यचाक्षुषापत्तिर्निरुक्तप्रतिबन्धकीभूतज्ञानस्य तदानीं घटादावसत्त्वात् अतस्तद्वारणायैव लौकिकप्रत्यक्षसामग्र्याः सहकारित्वकल्पनमिति वाच्यम् एवमपि चरमं चाक्षुषो न निखिलद्रव्यसाक्षात्कारसन्तान इत्यत्र सन्तानत्वोत्कीर्तनस्य वैफल्यापत्तेरिति चेदत्र केचित्। उक्तप्रतिबन्धकतावच्छेदककोटौ लौकिकसन्निकर्षनिष्ठकारणताघटकसम्बन्धेन लौकिकसन्निकर्षाभावो न निवेश्यते किं तु स्वसमानाधिकरणविषयत्वानिरूपितप्रकारत्वानिरूपितविषयतासम्बन्धेनैव एवं च सामान्यलक्षणाजन्यचाक्षुषाद्युत्तरं यत्किञ्चिद्घटनिष्ठचक्षुःसन्निकर्षस्योक्तपरम्परासम्बन्धेन निखिलघट एव सत्त्वात् तादृशसम्बन्धावच्छिन्नप्रतियोगिताकलौकिकसन्निकर्षाभावविशिष्टज्ञानस्य घटादावसत्त्वेन तदानीं न तादृशचाक्षुषधारानुपपत्तिरित्याहुः। तन्न समीचीनम्। एतावता सामान्यलक्षणाजन्यचाक्षुषोत्तरं चाक्षुषधारोपपादनेऽपि दीधितिकारीयसन्तानोत्कीर्तनस्यानर्थक्यमेवान्धतमसे आलोकाभावादेवोक्तसम्बन्धावच्छिन्नसन्निकर्षघटितोभयाभावविशिष्टज्ञानात्मकप्रतिबन्धकसत्त्वेन चाक्षुषसन्तानास-

म्भवात् इति ध्येयम् ॥

केचित्तु घटत्वपटत्वादीनां तद्विषयकज्ञानानां वा बहूनां प्रत्यासत्तित्वे कार्यकारणभावानन्त्यप्रसङ्गात् सर्वत्र नित्यज्ञानव्यक्तेरेव प्रत्यासत्तित्वं तस्याः स्वाश्रयविशेष्यकप्रत्यक्षं प्रति तद्बुद्धिव्यक्तित्वेनैव हेतुत्वं नित्यज्ञानव्यक्तेः सर्वदा सत्त्वात् स्वाश्रयाविषयकहेतुयत्किञ्चित्सन्निकर्षदशायां जगद्गोचरनिर्विकल्पकोत्तरं सार्वज्ञ्यापत्तिरतः स्वाश्रयविशेष्यकत्वानुसरणम् । स्वाश्रयस्तु विषयतया ग्राह्य इति जगदीशः । अथ स्वाश्रयत्वं न कार्यतावच्छेदकं प्रयोजनविरहात् किं तु विशेष्यतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति विषयतासम्बन्धेन नित्यज्ञानव्यक्तेर्हेतुत्वमित्यस्य लाभाय स्वाश्रय इत्युक्तम् । अत्र समवायसम्बन्धेन घटत्वादिप्रकारकज्ञानसत्त्वे कालिकसम्बन्धेन तदाश्रयस्य तेन सम्बन्धेन घटत्वादिप्रकारकप्रत्यक्षोत्पत्तिस्वीकारः सिद्धान्तविरुद्धः केचिदित्युक्त्या सूचितः ॥

अत एव सुरभिचन्दनमित्यादौ सौरभत्वादेरपि भानमिति शिरोमणिः । इत्यादावित्यादिपदेन भ्रमान्तरस्य तदनुव्यवसायस्य च परिग्रह इति जगदीशः । सौरभत्वेन चन्दनमहं जानामीत्यनुव्यवसायस्येत्यर्थः । अथ सौरभत्वभानार्थं ज्ञानलक्षणायाः प्रत्यासत्तिस्वीकारोऽनुचितः सामान्यलक्षणया सौरभत्वप्रकारेण सौरभभानस्वीकारेणैवोपपत्तेः सौरभमुख्यविशेष्यकमानसे तादात्म्येन सौरभस्याप्रतिबन्धकत्वात् । न च तत्रापि चन्दनांशे सौरभत्वप्रकारताप्रयोजिका ज्ञानलक्षणैवेति वाच्यं तथा सति न हि तत्र सुरभिगन्धस्य भानसम्भव इति जगदीशग्रन्थानुत्थितिप्रसङ्गात् तत्रापि सौरभस्य भानसत्त्वेऽपि चन्दनांशे सौरभत्वप्रकारताप्रयोजकत्वेन ज्ञानलक्षणायाः प्रत्यासत्तित्वस्यावश्यकत्वादिति सिद्धान्तोऽत्रानुसन्धातव्यः ॥

न चैवं निर्विकल्पकस्य प्रत्यासत्तित्वे स्वविषयीभूतघटत्वाद्युपधानेन तस्य प्रत्यक्षापत्तिर्विषयानुपधानेन ज्ञानादिप्रत्यक्षस्यालीकतया विषयोपनायकविरहादेव मनःसन्निकृष्टस्य तस्यातीन्द्रियत्वोपगमात् इति वाच्यं सत्यपि सन्निकर्षे प्रत्यक्षसामान्यं प्रत्येवादृष्टत्वेनैव निर्विकल्पकत्वकल्पनेनापि तादात्म्येन विरोधित्वकल्पनादेव निर्विकल्पकस्याप्रत्यक्षत्वादिति जगदीशः । अथात्र प्रत्यक्षसामान्यं प्रति

तादात्म्येन निर्विकल्पकमात्रस्य यदि प्रतिबन्धकत्वं तदा द्रव्यं घटघटत्वे इति निर्विकल्पकोत्तरं द्रव्यत्वेनेदं जानामीत्यनुव्यवसायो न स्यादुक्तप्रतिबन्धकसत्त्वात् न च प्रकारत्वानिरूपकत्वं निर्विकल्पके देयमिति वाच्यं तदा तादृशज्ञानस्य घटत्वेनेदं जानामीत्यनुव्यवसायापत्तेरिति चेन्न विषयत्वसम्बन्धावच्छिन्नघटत्वादिप्रकारताकप्रत्यक्षत्वावच्छिन्नं प्रति घटत्वादिनिर्विकल्पकत्वेन प्रतिबन्धकत्वमिति विशिष्यैव प्रतिबन्धकत्वकल्पनान्न कोऽपि दोषः घटत्वादिनिर्विकल्पकत्वं च सांसर्गिकविषयतानिरूपितघटत्वादिनिष्ठविषयत्वानिरूपकत्वे सति घटत्वादिविषयकज्ञानत्वम् । केचित्तु विषयत्वानिरूपितविषयतानिष्ठविषयतानिरूपितलौकिकविषयतासम्बन्धेन प्रत्यक्षसामान्यं प्रत्येव तादात्म्येन निर्विकल्पकत्वेन प्रतिबन्धकत्वकल्पनान्न दोषः । तादृशविषयतानिरूपितलौकिकविषयताप्रसिद्धिस्तु उपनयमर्यादया निर्विकल्पकीयविषयत्वप्रकारेण घटादिलौकिकप्रत्यक्ष एवेति । न च निर्विकल्पकज्ञानीयविषयतासम्बन्धेन घटत्वाद्युपरागेण निर्विकल्पकस्य भ्रमात्मकप्रत्यक्षापत्तिरिति वाच्यम् भ्रमस्य दोषजन्यतया तत्र दोषस्यैवाकल्पनादित्याहुः । तच्चिन्त्यम् । यत्तु घटादिप्रकारकप्रत्यक्षं प्रत्येव घटादिज्ञानत्वेन हेतुत्वे घटादिविशेष्यकघटो द्रव्यमित्याकारकमानसोपनीतभानं न स्यादिति तन्न घटादिधर्मिकद्रव्यत्वाद्यसंसर्गाग्रहादिवशेनैव मानसधियो घटादिविशेष्यकत्वसम्भवात् । घट इत्येतावन्मात्राकारस्य बाधनिर्णयाप्रतिबध्यमानसप्रत्यक्षस्यासत्त्वेऽपि क्षत्यभावात् ॥

न चैवं घटादेरनुपस्थितिदशायां तद्विशेष्यकं मानसं प्रत्यक्षं स्यात् तद्धर्मिकासंसर्गाग्रहस्य तदानीमपि सत्त्वादिति वाच्यम् घटप्रकारकप्रत्यक्षत्वस्य घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकतया तदवच्छिन्नं प्रति हेतुभूतस्य घटादिज्ञानस्य विरहादेवानुपस्थितघटादेर्विशेष्यविधया मानसग्रहसम्भवात् इति जागदीशी । यद्यप्यत्र सामान्यलक्षणाप्रत्यासत्त्यैव घटविशेष्यकमानसप्रत्यक्षसम्भवादिदमसङ्गतं तथापि सामान्यलक्षणायाः तत्सम्बन्धेन तत्प्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतन्निष्ठविषयताकज्ञानहेतुतया यत्र

कालिकेन घटत्वद्रव्यत्वप्रकारकज्ञानोत्तरं जायमानं समवायेन घटत्वद्रव्यत्वप्रकारकं घटो द्रव्यमित्याकारकमानसोपनीतभानं तस्य सामान्यलक्षणानधीनत्वेन तत्रैवानुत्पादनीयत्वान्नासङ्गतिः न च सामान्यलक्षणायाः कार्यकारणभावे व्यभिचार इति वाच्यं सामान्यलक्षणायाः कार्यदिशि तत्तन्मानसोपनीतभानान्यत्वस्य निवेशनीयत्वादिति ध्येयम् ॥

अथ घटप्रकारकप्रत्यक्षत्वस्य घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षत्वव्यापकत्वमभिहितं जगदीशेन तत्कथं सङ्गच्छते सामान्यलक्षणाजन्यघटत्वादिप्रकारकचाक्षुषादिप्रत्यक्षे तादृशव्यापकताभङ्गादिति। न च घटनिष्ठालौकिकविशेष्यताकप्रत्यक्षपदेन तादृशमानसस्य विवक्षितत्वान्न दोषः अत एव तादृशव्यापकत्वसङ्गमने घटो द्रव्यमिति भानस्य घटं जानामीत्याकारकत्वनियम इत्यनेन ग्रन्थकृता मानसमात्रान्तर्भावेन तथा व्यापकत्वसम्पादनेन तथार्थ एव व्यक्तीकृत इति वाच्यम् अनुपस्थितघटनिष्ठालौकिकविशेष्यताकसामान्यलक्षणाजन्यमानसेऽनुपस्थितस्य घटप्रकारकत्वाभावेन तत्रापि व्यापकत्वाभावात्। यत्तु सामान्यतो घटप्रकारकप्रत्यक्षत्वस्य घटनिष्ठालौकिकविशेष्यताकमानसत्वव्यापकत्वमेव विवक्षितं न तु तद्घटप्रकारकत्वस्य तद्घटनिष्ठालौकिकविशेष्यताकमानसत्वव्यापकत्वम् एवं च सामायलक्षणाजन्यमानसेऽपि उपस्थितयत्किञ्चिद्घटप्रकारकत्वनियमेन तदादायैव उक्तप्रकारतानिर्वाह इति तत्त्वसामान्यलक्षणाजन्यमानसवत् घटो द्रव्यमित्युपनीतमानसेऽपि उपस्थितयत्किञ्चिद्घटप्रकारकत्वमादायैवोक्तव्यापकतानिर्वाहेनानुपस्थितघटविशेष्यकत्वस्याशक्यवारणतया तथाविधव्यापकत्वाभिधानस्य प्रकृतानुपयोगित्वादिति चेदत्राहुः घटनिष्ठालौकिकविशेष्यतापदेन सामान्यप्रत्यासत्त्यप्रयोज्यघटनिष्ठालौकिकविशेष्यताया विवक्षितत्वात्तादृशविशेष्यताकप्रत्यक्षत्वव्यापकत्वं च घटप्रकारकप्रत्यक्षत्वस्याक्षतमेवेति न काप्यनुपपत्तिरिति ध्येयम्। ननु प्रत्यक्षे बाधाभावबलात् सन्निकर्षाप्रयोज्यस्यापि विषयत्वस्योपगमे घटत्वद्रव्यत्वादिज्ञानोत्तरं बाधाभावबलेन घटो द्रव्यमित्यसन्निकृष्टघटादिविशेष्यकचाक्षुषात्मकमुपनीतभानमपि कथं न स्यादिति इष्टापत्तौ च उपनीतं

विशेषणतयैव भासत इत्यस्य विरोध इति चेन्न घटादि-प्रकारकप्रत्यक्षत्वस्य सामान्यप्रत्यासत्त्यप्रयोज्यघटनिष्ठालौकिक-विशेष्यताकप्रत्यक्षत्वस्योक्तत्वेन उक्तव्यापकधर्मावच्छिन्नकारणी-भूतघटादिज्ञानविरहादेवोक्तापत्त्यसम्भवात् पूर्वं घटादिज्ञान-सत्त्वे तु मुख्यविशेष्यतया द्रव्यचाक्षुषादिकं प्रति चक्षुर्लौकिकसन्निकर्षाभावविशिष्टज्ञानमात्रस्य विषयतया प्रतिब-न्धकत्वादेवासन्निकृष्टघटविशेष्यकचाक्षुषासम्भव इत्यवधेयम् ॥

एतेनास्तु विशेष्यज्ञानमपि कारणं जन्यतां च निर्विकल्पकमपि सामान्यलक्षणया इति दीधितिकारः । ननु सामान्यलक्षणाजन्य ज्ञाने ऽसन्निकृष्टघटान्तरस्यापि विशेष्यत्वात्तस्य च प्रागनुपस्थित-तत्वेन विशेष्यज्ञानस्य हेतुत्वं दुर्घटमत आह जन्यतां चेति । घटत्वादिसामान्यस्य च स्वेतरप्रकारत्वानिरूपितविषयतास-म्बन्धेनैव घटत्वप्रकारकप्रत्यक्षं प्रति हेतुत्वं वाच्यमतो विनापि घटत्वज्ञानं द्रव्यत्वादिसामान्यज्ञानात् घटस्य प्रत्यक्षोत्पादेऽपि न व्यभिचार इति जगदीशः । अत्र कालिकसम्बन्धेन घटत्वप्र-कारकज्ञानात् समवायेन घटत्वप्रकारकप्रत्यक्षापत्तिरतस्तत्सम्ब-न्धेन घटत्वप्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतद्विष-यताकज्ञानत्वेन हेतुत्वं वाच्यं कार्यस्य स्वेतरप्रकारत्वानिरूपित-विषयत्वं कारणस्य तु स्वविषयीभूतसामान्याश्रयानिष्ठविषयत्वं प्रत्यासत्तिः । अत्र कार्यतावच्छेदकसम्बन्धेन स्वाश्रयनिष्ठत्वमपि वाच्यम् । अन्यथा यत्र घटत्वज्ञानं पटत्वज्ञानं च तदुत्तरमुभयज्ञाना-ज्जायमानस्य उपस्थितघटांशे घटत्वप्रकारकस्यानुपस्थितघटांशे घटत्वाप्रकारकस्य उपस्थितपटे पटत्वप्रकारकस्यानुपस्थितपटे पटत्वाप्रकारकस्य प्रत्यक्षस्य स्वेतरप्रकारत्वानिरूपिताविषयतास-म्बन्धेनानुपस्थितपटेऽप्युत्पन्नतया स्वविषयीभूतघटत्वात्मकसामा-न्याश्रयनिष्ठविषयतासम्बन्धेन घटत्वस्य ज्ञानस्य तत्र विरहेण व्यभिचारापत्तेः विषयत्वं चालौकिकं ग्राह्यं तेन कालिकसम्बन्धेन घटत्वप्रकारकज्ञानलक्षणालौकिकसन्निकर्षाभ्यां जायमाने समवाय-सम्बन्धावच्छिन्नघटत्वप्रकारकप्रत्यक्षे न व्यभिचारः । एवं यत्र स्वरूपेण घटत्वज्ञानं घटे चालौकिकसन्निकर्षः तदुत्तरं पटधार्मिक-समवायेन घटत्वभ्रमात्मकघटघटत्वे इत्याकारकनिर्विकल्पकात्मक-

समूहालम्बनं तत्र न व्यभिचारः। न च स्वेतरप्रकारत्वानिरूपितत्वविशेषणं व्यर्थमिति वाच्यं यत्र यत्किञ्चिद्घटे लौकिकसन्निकर्षः कालिकसम्बन्धेन घटत्वप्रकारकज्ञानं समवायसम्बन्धेन द्रव्यत्वप्रकारकद्रव्यविशेष्यकज्ञानं च तदुत्तरं लौकिकसन्निकर्षमर्यादया जायमानस्य घटत्वज्ञानलक्षणया समवायेन घटत्वप्रकारकस्य घटो द्रव्यत्वसामान्यलक्षणया च द्रव्यं चेत्याकारकसमूहालम्बनप्रत्यक्षस्य घटत्वाश्रयनिष्ठद्रव्यत्वप्रकारतानिरूपितालौकिकविषयतासम्बन्धेन घटादावुत्पन्नतया तत्र समवायातिरिक्तसम्बन्धावच्छिन्नघटत्वविषयताकज्ञानस्य विरहेण व्यभिचारापत्तेः सत्यपि स्वेतरप्रकारत्वानिरूपितत्वविशेषणे घटत्वाश्रयनिष्ठालौकिकविषयतायां घटत्वेतरप्रकारत्वानिरूपितत्वविरहेण तादृशविषयतायां घटत्वसामान्यलक्षणाकार्यतावच्छेदकसंसर्गत्वविरहादेव न व्यभिचारः। नन्वेवं यत्र घटत्वप्रकारकज्ञानं द्रव्यत्वप्रकारकज्ञानं च तदुत्तरं द्रव्यत्वसामान्यलक्षणया घटत्वधर्मितावच्छेदककद्रव्यत्वप्रकारकयावद्घटमुख्यविशेष्यकं घटो द्रव्यमित्याकारक प्रत्यक्षं न स्यात् द्रव्यत्वसामान्यलक्षणाप्रयोज्यद्रव्यत्वाश्रयीभूत घटनिष्ठालौकिकविषयतायाः घटत्वप्रकारतानिरूपितत्वेन द्रव्यत्वेतरप्रकारत्वानिरूपितत्वाभावादिति चेन्न सामान्यलक्षणाजन्यतादृशज्ञानानुपगमादुपगमे तु स्वेतरप्रकारत्वानिरूपितविषयतापदेन स्वनिष्ठप्रकारत्वानिरूपिता या स्वेतरनिष्ठप्रकारतानिरूपितविषयता तदन्याविषयत्वं विवक्षणीयम्। यद्यपि यत्र कालिकसम्बन्धेन घटत्वप्रकारकज्ञानोत्तरं लौकिकसन्निकर्षमर्यादया समवायेन घटत्वप्रकारिका घटः द्रव्यत्वसामान्यलक्षणया च द्रव्यं द्रव्यद्रव्यत्वे चेत्याकारकसमूहालम्बनद्रव्यनिर्विकल्पकात्मकघटत्वप्राथमिकविशिष्टधीर्जायते तत्र तद्बुद्धेरसन्निकृष्टघटेऽपि घटत्वेतरनिष्ठप्रकारत्वानिरूपितविषयतासम्बन्धेन सत्त्वेन व्यभिचारो दुर्वारः तादृशनिर्विकल्पकीयविषयतायाः स्वेतरप्रकारतानिरूपितत्वाभावात् पूर्वं समवायेतरसम्बन्धानवच्छिन्नघटत्वविषयताकज्ञानस्य चासत्त्वात् तथापि कालिकसम्बन्धेन घटत्वप्रकारकज्ञानोत्तरं समवायेनालौकिकविशेष्यताशालिघटत्वप्रकारकोपनीतभाने व्यभिचारवारणाय यथा तत्तदुपनीत-

भानान्यत्वं निवेश्यते तथात्रापि तत्तज्ज्ञानान्यत्वनिवेशेनैवोक्तव्यभिचारवारणसम्भवादिति भावः । केचित्तु उक्तस्थले व्यभिचारवारणाय स्वेतरप्रकारत्वानिरूपितत्वमपहाय स्वेतरविषयत्वाप्रयोज्यविषयतासम्बन्धेन तत्सम्बन्धावच्छिन्नघटत्वादिप्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नघटत्वादिविषयताशालिज्ञानत्वेन हेतुत्वं वाच्यम् तथा च तादृशनिर्विकल्पकविषयताया घटत्वेतरप्रकारत्वानिरूपितत्वेऽपि घटत्वेतरद्रव्यत्वनिष्ठविषयताप्रयोज्यत्वसत्त्वान्न व्यभिचारः । न च तत्प्रकारकत्वदलवैयर्थ्यमिति वाच्यं लौकिकसन्निकर्षजन्ये प्राथमिकनिर्विकल्पके व्यभिचारवारणाय तत्सार्थक्यात् न च कालिकेन घटत्वप्रकारकज्ञानलौकिकसन्निकर्षाभ्यां जायमाने समवायेन घटत्वप्रकारकप्रत्यक्षे व्यभिचार इति वाच्यं तत्तज्ज्ञानान्यत्वेन कार्यस्य विशेषणीयत्वादित्याहुस्तच्चिन्त्यम् । अभावलौकिकप्रत्यक्षं प्रति प्रतियोगिज्ञानस्याहेतुत्वे घटाज्ञानदशायामिन्द्रियसम्बद्धविशेषणतया नेत्याकारकस्याभावलौकिकप्रत्यक्षस्य प्रसङ्गो दुर्वारः अभावप्रत्यक्षं प्रति विशिष्टप्रतियोगिज्ञानस्य हेतुत्वे तु प्रागुपस्थितस्य विशिष्टप्रतियोगिनोऽभावांशे विशेषणीभूय भाने बाधकाभावात् न तादृशप्रत्यक्षम् ॥

न च घटाभावस्यैव पटत्वावच्छिन्नाभावत्वेन प्रात्यक्षिकभ्रमे घटज्ञानाजन्ये व्यभिचारात् प्रतियोगिज्ञानस्य हेतुत्वं दुर्वचं घटत्वावच्छिन्नाभावत्वेन प्रत्यक्षं प्रत्येव घटत्वादिप्रकारकज्ञानत्वेन हेतुत्वे तु घटाज्ञानदशायामिन्द्रियसम्बद्धविशेषणतया नेत्याकारकप्रत्यक्षं दुर्वारमिति वाच्यं घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावविशिष्टलौकिकविषयताकप्रत्यक्षं प्रत्येव घटत्वादिप्रकारकज्ञानत्वेन हेतुत्वात्तस्य च भ्रमप्रमानिर्विकल्पकसाधारण्यात् प्रकारत्वं तु प्रतियोगित्वसम्बन्धावच्छिन्नं ग्राह्यमतो घटो नास्तीति प्रत्यक्षस्य स्वरूपसम्बन्धेनाभावत्वप्रकारकत्वेऽपि नासंग्रह इति जगदीशः । अत्रेयमापत्तिः अथ इन्द्रियसम्बन्धविशेषणतया जायमाने अयमित्याकारकप्रत्यक्षे इदमिदं द्वे इत्याकारकनिर्विकल्पकप्रत्यक्षे च घटज्ञानाजन्ये व्यभिचारापत्तिस्तस्यापि कार्यतावच्छेदका-

क्रान्तत्वादिति चेन्न प्रतियोगित्वसंसर्गावच्छिन्नप्रकारत्वानिरूपितत्वाभावत्वप्रकारत्वानिरूपितत्वे एतदुभयाभाववत्त्वस्य तादृशाभावनिष्ठलौकिकविषयतायां निवेशेनैव तत्र व्यभिचारवारणात् । तथाहि अयमित्यादिनिरुक्तप्रत्यक्षीयाभावनिष्ठलौकिकविषयतायां घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितत्वसत्त्वेऽपि तादृशोभयाभावासत्त्वान्न व्यभिचारः । तथा च घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितत्वे सति प्रतियोगित्वसंसर्गावच्छिन्नप्रकारत्वानिरूपितत्वाभावत्वप्रकारत्वानिरूपितत्वैतदुभयाभावविशिष्टा या ऽभावनिष्ठलौकिकविषयता तन्निरूपकप्रत्यक्षं प्रति घटत्वप्रकारकज्ञानत्वेन हेतुत्वं वाच्यमिति समुदितार्थः। न च सत्यन्तदलवैयर्थ्यमिति वाच्यम् घटज्ञानसत्त्वेऽपि घटो नास्तीति प्रत्यक्षानुपपत्तेः तस्य घटपटादितावज्ज्ञानस्य कार्यतावच्छेदकाक्रान्तत्वात् । घटज्ञानं विना घटीयप्रमेय इत्याकारकाभावप्रत्यक्षवारणाय उभयाभावप्रतियोगिकोटौ प्रतियोगित्वसंसर्गावच्छिन्नप्रकारत्वानिरूपितत्वदलं तथा चोक्तप्रत्यक्षीयाभावनिष्ठतादृशलौकिकविषयतायाम् अभावत्वप्रकारत्वानिरूपितत्वसत्त्वेऽपि प्रतियोगित्वसंसर्गावच्छिन्नप्रकारत्वानिरूपितत्वविरहादेव तादृशोभयाभावसत्त्वात् घटज्ञानं विना न तादृशप्रत्यक्षापत्तिरिति भावः । यदि च घटीयः प्रमेय इत्यादिप्रत्यक्षस्य विशिष्टवैशिष्ट्यावगाहितया विशेषणतावच्छेदकप्रकारकज्ञानविरहादेव घटाज्ञानदशायां न तस्यापत्तिरित्युच्यते तदा तन्नोपादेयमिति । न चाभावत्वप्रकारत्वानिरूपितत्वदलवैयर्थ्यमिति वाच्यम् नेत्याकारकप्रत्यक्षापत्तेः तादृशाभावनिष्ठविषयतायां प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारत्वानिरूपितत्वसत्त्वेन कार्यतावच्छेदकानाक्रान्तत्वात्तन्निवेशे च तत्राभावत्वप्रकारत्वानिरूपितत्वविरहादेव तादृशोभयाभावसत्त्वान्न तादृशप्रत्यक्षापत्तिरिति भावः । न च घटज्ञानं विना एकत्र द्वयमिति रीत्या घटाभावः पटीय इत्याकारकप्रत्यक्षापत्तिः तादृशाभावनिष्ठविषयतायां निरुक्तोभयाभावसत्त्वेऽपि घटत्वावच्छिन्नपटत्वावच्छिन्नप्रकारतानिरूपितत्वेन तादृशप्रकारत्वानिरूपितत्वविरहेण कार्यतावच्छेदकानाक्रान्तत्वादिति वाच्यं सत्यन्तदलघटकीभूतान्यप्रकारतापदेन

घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिरूपितप्रकारताया विवक्षणेनैवोक्तदोषवारणसम्भवात् तथा च तादृशविषयताया-घटत्वावच्छिन्नप्रकारतानिरूपिता याभावत्वावच्छिन्नविशेष्यता-तदन्यनिरूपिता या प्रतियोगित्वसंसर्गावच्छिन्नप्रकारता तदनिरूपितत्वेन घटज्ञानं विना न तादृशप्रत्यक्षापत्तिस्तस्यापि कार्यतावच्छेदकाक्रान्तत्वादिति भावः । न च प्रकारतायां प्रतियोगित्वसंसर्गावच्छिन्नत्वानिवेशो व्यर्थ इति वाच्यं नेत्याकारकप्रत्यक्षस्य कार्यतावच्छेदकाक्रान्तत्वलाभायैव तन्निवेशात् यद्यप्येवमपि घटादिज्ञानं विना जायमानेऽयमित्याकारकप्रत्यक्षे इदन्त्वादिनोपस्थिते तमसि भावत्वाभावत्वकोटिकसंशये च व्यभिचारो दुर्वारस्तस्यापि कार्यतावच्छेदकाक्रान्तत्वात्तथाप्युभयाभावप्रतियोगिकुक्षौ अभावत्वप्रकारत्वानिरूपितत्वपदेनाभावत्वप्रकारताभिन्नप्रकारतानिरूपितत्वस्य विवक्षितत्वान्न कोऽपि दोषः उक्तप्रत्यक्षस्याभावत्वप्रकारताभिन्नप्रकारतानिरूपितत्वघटितोभयाभावघटितकार्यतावच्छेदकानाक्रान्तत्वात् । एतेन प्रागुक्तोभयाभावस्य कार्यतावच्छेदककोटौ निवेशेऽभावाभावत्वे इत्याकारकनिर्विकल्पकापत्तिस्तादृशनिर्विकल्पकस्य प्रागुक्तोभयाभावघटितकार्यतावच्छेदकानाक्रान्तत्वादित्यपि परास्तम् । न चैवमिदमिदन्त्वे इत्याकारकप्रत्यक्षे व्यभिचारस्तस्य निरुक्तोभयाभावघटितकार्यतावच्छेदकाक्रान्तत्वादिति वाच्यं तादृशनिर्विकल्पकानभ्युपगमात् अभ्युपगमे तु अभावाभावत्वैतदन्यतरावृत्तिनिर्विकल्पकीयविषयत्वानिरूपकत्वेन कार्यस्य विशेषणीयतया उक्तनिर्विकल्पकस्य इदन्त्ववृत्तिविषयतानिरूपकत्वेन कार्यतावच्छेदकानाक्रान्तत्वान्न व्यभिचारः निर्विकल्पकविषयत्वं च विषयत्वानिरूपितविषयत्वमिति न चाभावाभावत्वे इदमिदन्त्वे इत्याकारकसमूहालम्बननिर्विकल्पकापत्तिरिष्टत्वादिति संक्षेपः । परे तु घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारत्वान्यत्वे सति स्वरूपसम्बन्धावच्छिन्नाभावत्वप्रकारताभिन्ना या प्रकारता तादृशप्रकारतानिरूपिताभावनिष्ठलौकिकविषताकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वान्नोक्तदोषणामवकाशः । अभावत्वं नास्तीति प्रत्यक्षस्य घटादिज्ञानस्य कार्यताव-

च्छेदकाक्रान्तत्ववारणाय भावत्वप्रकारतायां स्वरूपसम्बन्धावच्छिन्नत्वविशेषणम् । इदमिदन्त्वे अभावाभावत्वे इत्याकारकप्रत्यन्तुमाभ्युपेयतेः तदाह भावनिष्ठविषयतायां विषयतानिरूपितत्वमपि देयमिति प्राहुः । यद्यपि विशिष्टप्रतियोगिज्ञानस्य हेतुत्वपक्षेऽप्यभावो न घटीय इत्यभावे प्रतियोगितासम्बन्धावच्छिन्नघटाभावानिश्चयदशायामिन्द्रियसम्बन्धविशेषणता बलान्नेत्याकारकप्रत्यक्षस्य दुर्वारत्वमिति जगदीशः । अत्रेदमवधेयं तादृशप्रतिबन्धकसत्त्वेऽपि प्रतियोगितासम्बन्धेन घटवत्यभावत्वप्रकारकघटीयोऽभाव इत्याकारकज्ञानस्य सम्भवेन नेत्याकारकप्रत्यक्षापादनमसङ्गतमिति चेन्न प्रतियोगितासम्बन्धेन घटविशिष्टे ऽभावत्ववदवृत्तिधर्मवत्त्वनिर्णयरूपस्य तादृशज्ञानप्रतिबन्धकस्यापि प्राक् स्थापितत्वात् । न च तथाप्येकत्रद्वयमितिरीत्या प्रतियोगितासम्बन्धेन भावत्वस्य च भावसम्भवेन नेत्याकारप्रत्यापादनमसङ्गतमिति वाच्यं तादृशज्ञानस्य प्रतियोगिप्रकारतानिरूपितावच्छेदकतानापन्नाभावत्वप्रकारकतया नेत्याकारकप्रत्यक्षतुल्यत्वादेकत्र द्वयमितिरीत्या तादृशज्ञानानभ्युपगमाच्चेति ध्येयम् । घटीयप्रागभावव्याप्यत्वेन कपालद्वयसंयोगरूपचरमकारणवत्त्वे लौकिकप्रत्यक्षस्य प्रागभावप्रत्यक्षहेतुत्वे तस्यानुमितिरेव स्यात् समानविषये लौकिकप्रत्यक्षसामग्र्या बलवत्त्वेऽपि तावत् कालं प्रागभावात्मकाविषयस्यासत्त्वेन तस्य प्रत्यक्षायोगः अतोऽव्यवहितपूर्वत्वसम्बन्धेन घटवत्स्वरूपफलोपधायकत्वेन चरमकारणलौकिकप्रत्यक्षस्य प्रागभावे हेतुत्वमुक्तं जगदीशेन तन्न सङ्गच्छते फलोपधायकत्वेन चरमकारणत्वलौकिकप्रत्यक्षस्य प्रागभाववत्त्वरञ्जकत्वमभ्युपेत्यानुमित्यापत्तिवारणेऽपि प्रागप्रत्यक्षस्यासम्भावितत्वात् फलोपधायकत्वेन चरमकारणलौकिकप्रत्यक्षदशायां प्रागभावात्मकाविषयस्यासत्त्वादिति चेन्न चरमत्वस्य विवक्षणीयतया कार्योपधायकत्वेन यस्य कस्य चित् लौकिकप्रत्यक्षस्यैव प्रागभावरञ्जकत्वेन दशकपालीयघटस्थले कतिपयकपालसंयोगानन्तरं चरमकारणोत्पत्तिकाले तत्पूर्वं वा दोषविशेषजन्यफलोपधायकत्वेन चरमकारणलौकिकप्रत्यक्ष सम्भवेन तदुत्तरं प्रागभाव प्रत्यक्षसम्भवात् पूर्वं विषयस्य सत्त्वात् न चैवं प्रागभाव-

व्याप्यत्वेन चरमकारणज्ञानस्यापि हेतुत्वं सुष्ठुतरमिति वाच्यं न तु प्रागभावव्याप्यचरमसामग्रीमत्त्वज्ञानमेव प्रागभावहेतुरित्यादिना ग्रन्थकृतैवाग्रे तस्योक्तत्वात् । अत एवान्यत्र समानविषयप्रत्यक्षसामग्र्या बलवत्त्वेप्यत्र तदकल्पनात् प्रागभावस्यानुमितिरेव जायतामित्यग्रिमग्रन्थोऽपि सङ्गच्छते अन्यथा चरमसामग्रीज्ञानकालपर्यन्तं विषयस्यासत्त्वादेव तस्य प्रत्यक्षासम्भवेनानुमितिसम्भवात् समानविषये प्रत्यक्षसामग्र्या विरोधित्वसङ्कोचकल्पनानौचित्यापत्तेः । एतेन प्रागभावस्य प्रतियोगिनाश्यत्वाभिप्रायेण चरमकारणलौकिकप्रत्यक्षस्य हेतुत्वं युक्तमिति परास्तम् । प्रतियोगितदभावयोरेकक्षणावृत्तित्वादित्युत्तरग्रन्थविरोधादिति ध्येयम् । चरमकारणवत्तालौकिकप्रत्यक्षमित्यस्य चरमकारणस्य लौकिकप्रत्यक्षं यस्या इति व्युत्पत्त्या चरमकारणलौकिकप्रत्यक्षसामग्री लक्ष्यते सैव प्रागभावव्यञ्जिकेत्यपि वदन्ति । यदपि प्रसिद्धानामभावलौकिकप्रत्यक्षाणां विशिष्टवैशिष्ट्यावगाहित्वनियमाद्विशेषणतावच्छेदकप्रकारकज्ञानविरहादेव तेषां नापत्तिरतिरिक्तस्य नेत्याकारकप्रत्यक्षस्यालीकतया नापत्तिसम्भावनापि पारमार्थिककार्यव्यक्तीनां सामग्र्या एव कार्योत्पत्तिव्याप्यत्वोपगमात् तथा च घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावप्रत्यक्षत्वादिनानाधर्माणामिन्द्रियसम्बन्धविशेषणतायाः प्रतियोगिज्ञानस्य वा कार्यतावच्छेदकत्वविरहेऽपि न क्षतिरिति तदसत् । यत्र पटाभावे घटत्वावच्छिन्नप्रतियोगिताकत्वभ्रमस्य सामग्री नास्ति तत्र इन्द्रियसम्बद्धविशेषणताबलाज्जायमानस्य पारमार्थिकस्यैव घटो नास्तीति प्रत्यक्षस्य घटाभाव इव पटाभावे लौकिकविषयतासम्बन्धेनोत्पत्तेर्दुर्वारत्वात् । तस्य च पटाभावांशे विशिष्टबुद्धिसामग्रीविरहान्नेत्याकारकताया अर्थवशसम्पादनीयत्वादिति तर्कालङ्काराः । ननु पटाभावनिष्ठलौकिकविषयतासम्बन्धेन तादृशप्रत्यक्षरूपापाद्यस्यालीकतया आपत्तेरयोगात् अत एवोक्तं जगदीशेन तन्तुपटकार्यकारणभावस्थले चापाद्यस्य पुनरुत्पादस्याप्रसिद्धिरिति । न च तादृशसम्बन्धेन तादृशप्रत्यक्षस्योत्पत्तेरलीकत्वेन तादृशप्रत्यक्षापत्तेरसम्भवेऽपि तादृशप्रत्यक्षं पटाभावे लौकिकविषय-

तानिरूपकं स्यादित्यापत्तिः सम्भवतीति वाच्यं तादृश-प्रत्यक्षे पटाभावनिष्ठलौकिकविषयतानिरूपकत्वरूपापाद्यस्यापादकस्याप्रसिद्ध्या तादृशविषयतानिरूपकत्वस्यापत्तेरयोगात् यदि च पटाभावो यदि लौकिकविषयतासम्बन्धावच्छिन्नतद्-व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकीभूतधर्मावच्छिन्नाभाववान्न स्यात्तदा पटाभावः लौकिकविषयत्वसम्बन्धावच्छिन्नतद्-व्यक्तिमान्न स्यादित्येवापादनीयमतो न कश्चिद्दोष इत्युच्यते तदापि विषयतासम्बन्धेन तद्व्यक्तिविषयकतत्प्रत्यक्षं प्रति तादात्म्येन तद्व्यक्तेर्हेतुत्वाद् घटाभावविषयकप्रत्यक्षव्यक्तेर्विषयतासम्बन्धेन पटाभावेऽपि निरुक्तापत्तिर्न सम्भवति घटाभावरूपविषयस्य पटाभावे विरहादेव पटाभावे तादृशप्रत्यक्षसामग्रीविरहात् । पटाभावे तादृशावच्छेदकाप्रसिद्धेः न चाभावनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकीभूतधर्मावच्छिन्नाभाववान्न स्यात् पटाभावो विषयतासम्बन्धेन प्रत्यक्षवान् स्यादित्यापत्तिरिति वाच्यं प्रतियोगितासम्बन्धेन घटाभावस्य बाधनिश्चयकालेऽपि विषयतासम्बन्धेन तादृशप्रत्यक्षत्वावच्छिन्नस्य सामग्र्या वृत्तित्वात् जगदीशोक्तापत्तिर्दुर्घटा इति ध्येयम् ॥

ननु चरमकारणरूपसामाग्रीव्यङ्ग्यः प्रागभावो वाच्य इति दीधितिः । ननु कपालादौ घटप्रागभावव्याप्यसामग्र्याः परामर्शोत्तरमपि घटप्रागभावस्य नानुमितिः समानविषये लौकिकप्रत्यक्षसामग्र्या बलवत्त्वादत आह यावत्कालमिति । सामग्र्यां प्रागभावादिव्याप्त्यादिग्रहपर्यन्तमित्यर्थः । न च यत्र चरमकारणोत्पत्तिक्षणे प्रागभावव्याप्यतया चरमसामग्र्याः परामर्शस्तत्रोत्तरकालं प्रागभावप्रत्यक्षे बाधकाभावः पूर्वं प्रागभावात्मकस्य सत्त्वादिति वाच्यम् प्रागभावव्याप्यचरमकारणवत्तायाः स्मृत्यादिसाधारणनिर्णयमात्रातिप्रसक्तत्वात् तल्लौकिकनिर्णयस्यैव हेतुतया पूर्वं तदसम्भवादिति भावः । यादृशकारणकलापानन्तरं कार्योत्पादो दृष्टस्तद्बुद्धेरेव प्रागभावव्यञ्जकत्वात् । तथा च कार्योपधायकत्वेन चरमकारणवत्तालौकिकप्रत्यक्षमेव प्रागभावव्यञ्जकमतः स्वरूपतस्तदनुभवकार्योपधायकतद्वत्तास्मरणे

वा न प्रागभावप्रत्यक्षमिति तदभिप्रेत्यैव कार्योत्पाद इष्ट इत्युक्तमिति जगदीशव्याख्या । अत्रेयमापत्तिः । ननु चरमकारणस्य कार्योपधायकत्वेन लौकिकप्रत्यक्षं यदि प्रागभावव्यञ्जकं तदा कपालद्वयसंयोगात्मकस्य चरमकारणस्य लौकिकप्रत्यक्षं प्रतियोग्युत्पत्तिक्षण एव तदनन्तरं प्रागभावस्य कुतः प्रत्यक्षं प्रागभावात्मकस्य विषयस्य पूर्वमसत्त्वात् प्रागभावस्य सामग्रीनाश्यत्त्वेन पूर्वकल्प एवाभिहितत्वात् । अत्रेदं समाधानं पूर्वं प्रागभावस्य सामग्रीनाश्यतया न चेत्यादिपूर्वपक्षाभिधानम् अधुना प्रतियोगिनाश्यतया समाधानम् । अथैतन्मतालम्बने पूर्वकल्पस्यापि परिष्कारसम्भवे तत्परित्यागानौचित्यमिति चेन्न प्रागभावव्याप्यचरमकारणज्ञानस्य प्रागभावप्रत्यक्षहेतुतामते प्रत्यक्षसामग्रीकालेऽनुमितिसामग्र्या आवश्यकत्वात्तस्यानुमितिरेव जायते न तु प्रत्यक्षं किमनुरोधेन तस्य प्रतियोगिनाश्यत्वमभ्युपेत्य कार्यकालावस्थायित्वं स्वीकरणीयम् । न च प्रागभावव्याप्यकारणव्याप्यवत्तालौकिकप्रत्यक्षानन्तरं प्रागभावज्ञानस्य प्रत्यक्षमनुभवसिद्धमिति प्रागभावप्रत्यक्षानुरोधेन प्रागभावस्य कार्यकालावस्थायित्वं स्वीकरणीयमिति वाच्यं तदनन्तरं प्रागभावज्ञानस्य उभयवादिसिद्धत्वेपि तादृशज्ञानस्य प्रत्यक्षं नोभयवादिसिद्धमिति तदनुरोधेन प्रागभावस्य कार्यकालावस्थायित्वस्य स्वीकार्यत्वात्तद्व्याप्यवत्ताज्ञानेनैव प्रागभावस्यानुमित्या प्रागभावस्य ज्ञानविरहात् कार्योपधायकतया ज्ञानस्य हेतुतामतेऽनुमितिसामग्र्या अभावेन ज्ञानस्यान्यथानुपपत्त्या तदुत्तरज्ञानस्य प्रत्यक्षत्वं स्वीकरणीयं तदनुरोधेनैव प्रागभावस्य कार्यकालावस्थायित्वमङ्गीक्रियते । न च पूर्वकल्पे प्रागभावस्य प्रतियोगिनाश्यत्वमेव कुतो नाङ्गीकार्यं विनिगमकाभावादिति वाच्यं प्रतियोगिनाश्यत्वकल्पने कार्यस्य पुनरुत्पादवारणाय तस्य प्रतिबन्धकत्वकल्पने गौरवात् न चैतन्मतेऽपि गौरवान्न तत्सम्भवतीति वाच्यम् एतन्मते प्रागभावज्ञानस्यान्यथानुपपत्त्या गौरवस्याकिञ्चित्करत्वादिति कृतं पल्लवितेन ॥

अवच्छेदकत्वं च यत्किञ्चिद्धर्मानवच्छिन्नं समवायसम्बन्धावच्छिन्नं ग्राह्यं तेन न तद्दोषतादवस्थ्यमिति जगदीशः । ननुक्तरीत्या गोरूपादौ यत्किञ्चिद्धर्मावच्छिन्नगोनि ष्ठ-

भेदप्रतियोगितावच्छेदकत्वाभाववत्तासत्त्वेन तत्र गोपदशक्यतावच्छेदकत्वरूपसाध्यविरहेण व्यभिचारो दुर्वार इति चेन्न प्रागुक्तयुक्त्या तत्तद्व्यक्तेरपि स्वरूपतो भानाङ्गीकारेण गोरूपादेश्चालनीन्यायेन तत्तद्व्यक्तिमात्रेतिप्रतीतिसिद्धभेदप्रतियोगितानिरूपितकिञ्चिद्धर्मानवच्छिन्नावच्छेदकतावत्त्वेन तच्छून्यत्वविरहान्न व्यभिचार इति ग्रन्थकृतोऽभिप्रायः । अथवा गवेतरासमवेतत्वव्यापकभेदप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकतावत्त्वमर्थः । न च गोनिष्ठभेदप्रतियोगितानवच्छेदकत्वदलं व्यर्थम् उक्तगवेतरावृत्तित्वदलेनैव गोरूपादौ व्यभिचारवारणसम्भवादिति वाच्यं वृषत्ववैजात्ययोर्निरुक्तगवेतरासमवेतत्वदलसत्त्वेन व्यभिचारस्य दुर्वारत्वादतस्तद्वारणाय गोनिष्ठभेदप्रतियोगितानवच्छेदकत्वदलमिति भावः । केचित्तु गवेतरासमवेतत्वे सति गोनिष्ठभेदप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकताशून्यत्वे सति निरवच्छिन्नप्रकारताश्रयत्वे सति समवेतत्वं गोपदशक्यतावच्छेदकत्वव्याप्यं नातो गोरूपादौ व्यभिचारः । अत एव द्रव्यत्वादौ व्यभिचारवारणाय गवेतरासमवेतत्ववैजात्ययोर्व्यभिचारवारणाय गोनिष्ठभेदप्रतियोगितानवच्छेदकत्वदलं स्वरूपासिद्धिवारणाय अनवच्छेदकत्वघटकनिरवच्छिन्नत्वदलं गोरूपादौ व्यभिचारवारणाय निरवच्छिन्नप्रकारताश्रयत्वदलं कालिकादिसम्बन्धेन शक्यतावच्छेदकतावारणाय समवेतत्वदलमित्याहुः । परेतु गवेतरासमवेतत्वे सति गोनिष्ठभेदप्रतियोगितानिरूपितानिरवच्छिन्नावच्छेदकताशून्यत्वे सति जातिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वं गोपदशक्यतावच्छेदकत्वव्याप्यमिति गोरूपादौ उक्तदलसत्त्वेन व्यभिचारतादवस्थ्यमतस्तद्वारणाय जातिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वदलमिति उक्तदलद्वयव्यावृत्तिः पूर्ववद्बोध्या इत्याहुः ॥

तत्त्वज्ञानिनः शुकादेः सत्यामपि विहितानिषिद्धक्रियायां धर्माधर्मयोरनुत्पादात्तज्जनकतया प्रागभावः सिद्ध्यति न च उत्पन्नेऽपि तत्त्वज्ञाने तादृशज्ञानोत्तरप्रागभावसत्त्वात् धर्माधर्मयोरुत्पादप्रसङ्ग इति वाच्यम् एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तत्त्वज्ञानाभावविशिष्टतत्त्वज्ञानप्रागभावो हेतुरिति जगदीशः । अत्रेदमवधेयम् । तत्त्व-

ज्ञानाभाव एव हेतुर्वाच्य इति न तदनुरोधात् प्रागभावसिद्धिरिति पूर्वपक्षः । न च तत्त्वज्ञानाभावस्य हेतुत्वे सत्यपि तत्त्वज्ञाने घटाद्यवच्छेदेन तदभावसत्त्वात् धर्माद्युत्पत्तिप्रसङ्ग इति वाच्यं निरवच्छिन्नविशेषणताविशेषेण हेतुतायाः प्रविष्टत्वादिति चेदत्र वदन्ति निर्वाणमुक्तस्य तत्त्वज्ञानाभावसत्त्वात्तस्य धर्माद्युत्पत्तिप्रसङ्गः न च क्रियात्वेनापि हेतुतया निर्वाणमुक्तस्य क्रियाभावात् कथं धर्माद्युत्पत्तिरिति वाच्यम् पुत्रादावेव क्रियासत्त्वात् पित्रादेरदृष्टं प्रति पुत्रादिक्रियाया अपि हेतुता कथमन्यथा पुत्रादिवृषोत्सर्गादिना पित्रादेः स्वर्ग इति न कश्चिद्दोषमावहति ॥

घटोत्पत्तिक्षणे सामग्रीक्षणो नष्ट इत्यादि प्रतीत्या विनश्यदवस्थक्रियायाः क्षणत्वमुक्त्वा घटपूर्वं तत्सामग्रीक्षणो जायते इत्यादिप्रतीत्या उत्पत्त्यवच्छिन्नक्रियायाः क्षणत्वमाह स्वस्वपूर्ववृत्तियावत्पदार्थेति न च स्वोत्तरवृत्तियावत्पदार्थविशिष्टसमयत्वमेव निवेश्यतां पूर्वत्वापेक्षया स्वोत्तरत्वप्रवेशलाघवेनान्त्यक्षणावच्छिन्नक्रियादेरेव क्षणत्वमिति वाच्यम् प्रलयक्षणेऽव्याप्तिप्रसङ्गादिति जगदीशेनोक्तम् अत्रेदमवधेयम् । स्वोत्तरत्वप्रवेशे उत्पत्त्यवच्छिन्नक्रियादेः क्षणत्वं कथमायातं यदि चान्त्यक्षणावच्छिन्नक्रियादेरेव क्षणत्वं स्यात्तदा घटपूर्वं तत्सामग्रीक्षणे जायते इति प्रतीतेः का गतिरिति अत्र समाधानं यदि लाघववशादन्त्यक्षणावच्छिन्नक्रियादेः क्षणत्वमायातं तदा तादृशप्रतीतिरसिद्धैवेति ध्येयम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
सामान्यलक्षणाजागदीशी-
क्रोडपत्रम् ।

अथ पक्षताजागदीश्याः क्रोडपत्रम् ।

---

यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्चयत्वेन यत्संशयं प्रति निवर्तकत्वं स सन्देहस्तत्पक्षकतत्साध्यकानुमितौ हेतुभूतपक्षतेत्यर्थ इति जगदीशः । अत्रायं साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारता-निरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्न-प्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशयः पक्षतेति निष्कर्षः । अत्रेयमनुपपत्तिः । साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप-क्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्र-तिबध्यताशालिसंशयः पक्षतेत्युक्तावप्यनुगमसम्भवे तादृशानि श्चयत्वपर्यन्तानुधावनं व्यर्थमिति । न च वह्निमानित्यनुमितौ महानसीयवह्निमान्नवेति संशयस्य पक्षतात्वापत्तिः साध्यतावच्छे-दकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनि-ष्ठावच्छेदकताकमहानसीयवह्निमत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकता निरूपितप्रतिबध्यतायास्तत्र सत्त्वादिति वाच्यं साध्यतावच्छे-दकपर्याप्त्यवच्छेदकताकप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न-विशेष्यत्वनिष्ठावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य वक्तव्यत्वादिति चेदत्र केचित् पर्वतो वह्निमानित्यनुमितौ पर्वतो वह्निविशिष्टघटवान्नवेतिसंशयस्य पक्षतात्वापत्तिः । साध्यसंशयस्यापि भिन्नविषयकानुमितिसामग्रीविधया तत्प्रतिबन्धकत्वात् पक्षतापरामर्शयोरेव प्रतिबन्धकत्वं युक्तं लाघवात् तथाहि वह्नि-विशिष्टघटादिविषयकानुमित्यतिरिक्तज्ञानत्वावच्छिन्नं प्रति तत्त-दिच्छाविरहविशिष्टवह्निव्याप्यवत्तानिश्चयविशिष्टवह्न्यादिविषयक-संशयत्वेन तद्विशिष्टनिश्चयत्वेन वा प्रतिबन्धकत्वं तथा च वह्न्यादिविशिष्टघटवान्नवेतिसंशयप्रतिबन्धकत्वस्यापि निरुक्त-विशेष्यत्वावच्छेद्यत्वात् तत्रातिव्याप्तिः न चैवं वह्न्याद्यनुमिति, सामग्रीदशायां घटविषयकशाब्दप्रत्यक्षयोः सामग्रीदशायां च भूतले घटविषयकशाब्दज्ञानं जायतामितीच्छायां घटस्य शा-

ब्दज्ञानमेव जायते न तु प्रत्यक्षादिरिति तदनुरोधेन तादृशप्रत्यक्षत्वावच्छिन्नं प्रति तादृशप्रत्यक्षादीच्छाविरहविशिष्टपरामर्शविशिष्टपक्षतात्वेन प्रतिबन्धकत्वं वाच्यं तथा च साध्यतावच्छेदकावच्छिन्नविषयताकज्ञानत्वावच्छिन्नप्रतिबध्यतानिवेशेनैव प्रागुक्तदोषवारणं सम्भवतीति वाच्यम् लौकिकसामग्र्यपेक्षयापि शाब्दादीच्छाघटितसामग्र्या बलवत्त्वात् तादृशभिन्नविषयकानुमितिसामग्रीविरहस्थले तादृशसामग्र्याः प्रतिबन्धकत्वस्यावश्यकत्वात् तत एव दोषवारणसम्भवात् लाघवादनुमित्यतिरिक्तज्ञानत्वावच्छिन्नं प्रति तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वस्य वक्तव्यत्वादित्याहुः तन्न । वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेत्याकारकसंशयपक्षतादशायामपि घटादिप्रत्यक्षानुदयात् वह्निमत्तानिश्चयनिर्वर्त्यत्वेनानुगतरूपेणैव कारणत्वस्येव प्रतिबन्धकत्वस्यापि कल्पनीयतया साध्यप्रकारकत्वपक्षविशेष्यकत्वादेः तादृशप्रतिबन्धतानवच्छेदकत्वेन तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतामादायातिव्याप्तेः शङ्कितुमशक्यत्वात् । न च तथापि यत्र स्थलविशेषे साध्यप्रकारकसंशयादेवानुमितिरनुभवसिद्धा तत्र साध्यतदभावोभयप्रकारकसंशयत्वमात्रेणैव तत्साध्यकानुमितिसामग्र्याः प्रतिबन्धकत्वं कल्प्यते लाघवात् । तथा च तत्स्थलीयपक्षतालक्षणस्य साध्यविशिष्टघटवान्नवेति संशयेऽतिव्याप्तिस्तत्संशयीयप्रतिबन्धकतायाः साध्यप्रकारकत्वादिनैवावच्छेदादितिवाच्यम् तादृशस्थले कारणत्वस्यापि साध्यप्रकारकसंशयत्वेनैव कल्पनीयत्वेन साध्यवत्तानिश्चयत्वेन कारणत्वस्याकल्पनात् तदाशङ्कातिव्याप्तिदानस्य सन्दर्भविरोधापत्तेरिति ध्येयम् । यदि च घटादिसंशयं प्रति वह्न्यनुमितिसामग्र्या वह्निमत्तानिश्चयप्रतिबध्यसंशयविशिष्टवह्निव्याप्यधूमवत्तानिश्चयत्वेन प्रतिबन्धकत्वेऽपि तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिवह्निव्याप्यो घटवान्नवेत्यादिसंशये वह्निव्याप्यधूमसाध्यकपक्षतालक्षणस्यातिव्याप्तिरित्युच्यते तदा तद्वारणाय प्रतिबन्धकतायां तादृशनिश्चयत्वव्यापकतानिवेशे निश्चयत्वोपादानव्यावृत्तिः सम्यगेवेति ध्येयम् । अन्ये तु प-

र्वतपक्षकवह्निसाध्यकस्थले पर्वतो वह्निविशिष्टघटवान्न वा वह्निघटो-भयवान्न वेत्यादिसंशयस्य पक्षतात्ववारणाय निश्चयत्वम् अन्यथा तादृशसंशयस्यापि पर्वतो वह्निघटवानित्याकारकसाध्यवत्तानिश्चयनिवर्त्यतया तन्निवर्तकतायाश्च साध्यप्रकारकविशेष्यत्वावच्छिन्नत्वात् पक्षतात्वापत्तिर्दुर्वारा स्यात् । न चैवं साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वस्य प्रतिबन्धकतायां निवेशेनैव उक्तसंशयानां पक्षतात्वं वारयितुं शक्यते तादृशप्रतिबन्धकतायाः घटत्वावच्छिन्नप्रकारतानिरूपितत्वे सति वह्नित्वावच्छिन्नप्रकारतानिरूपिता या पर्वतत्वावच्छिन्नविशेष्यता तच्छालिज्ञानत्वेनैवावच्छिन्नत्वात्तादृशविशेष्यतायाश्च घटत्वावच्छिन्नप्रकारतानिरूपितत्वेनोक्तरूपस्याभावात् इति वाच्यं तादृशार्थलाभायैव निश्चयपदोपादानात् जगदीशमते तदन्यप्रकारत्वानिरूपिततत्प्रकारतानिरूपितविशेष्यताशालिज्ञानस्यैव निश्चयत्वादित्याहुः । तच्चिन्त्यं जगदीशमते संशयातिरिक्ते एकत्र द्वयमिति ज्ञाने उभयप्रकारतानिरूपितैकविशेष्यताया अनभ्युपगमेन दूषणसमाधानयोरनुचितत्वादिति । नव्यास्तु वह्निमत्पर्वतवान्न वेति संशयस्य पर्वतपक्षकवह्निसाध्यकानुमितौ पक्षतात्वापत्तिः वह्निमत्पर्वतवानिति निश्चयनिष्ठायाः उक्तसंशयप्रतिबन्धकताया अपि वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वादतो निश्चयत्वदलमिति । न च साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रतिबन्धकतानिवेशेनैव तद्वारणं सम्भवति इति वाच्यम् एवमपि वह्निमत्पर्वतो देशवृत्तिर्न वा इत्यादिसंशयस्य पक्षतात्वापत्तेः वह्निमत्पर्वतो देशवृत्तिरिति निश्चयनिष्ठप्रतिबन्धकतायास्तादृशमुख्यविशेष्यत्वावच्छिन्नत्वात् न चावच्छेदकतानात्मकसाध्यतावच्छेदकावच्छिन्नप्रकारताकपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशेनैव तद्वारणं सम्भवतीति वाच्यम् एवमपि पर्वतत्ववान् वह्निमान् पर्वतत्ववच्च भूतलमितिज्ञाननिष्ठवह्नित्वावच्छिन्नतादृशप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छि-

ज्ञप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य भूतलं वह्निमान्नवेति-संशये सत्त्वात्तादृशसंशयादपि पर्वतो वह्निमानित्यनुमित्यापत्तेः न च ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशेनैव तद्दोषवारणं सम्भवतीति वाच्यम् अवच्छेदकतानात्मकत्वज्ञानवैशिष्ट्यानच्छिन्नत्वाद्यपेक्षया निश्चयत्वप्रवेशे गौरवानवकाशादित्याहुः । वस्तुतस्तु वह्निर्महानसीयवह्निमानित्यादौ महानसीयवह्निर्वह्निमान्न वेति संशयेतिव्याप्तिवारणाय प्रतिबन्धकतायां तादृशनिश्चयत्वावच्छिन्नत्वनिवेशस्यावश्यकत्वमिति । न च तन्निवेशेऽपि पर्वतत्ववान् वह्निमान् पर्वतत्ववच्च भूतलमिति ज्ञाननिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताया भूतलं वह्निमान्नवेतिसंशयेऽपि सत्त्वात् तादृशसंशयादपि पर्वतो वह्निमानित्यनुमित्यापत्तिर्दुर्वारैवेति वाच्यं तादृशसाध्यवत्त्वनिश्चयत्वपर्याप्तावच्छेदकताकप्रतिबन्धकत्वस्य निवेशेनैव तद्दोषवारणसम्भवात् । न च तादृशनिश्चयत्वपर्याप्तावच्छेदकताकप्रतिबन्धकत्वमप्रसिद्धम् अप्रामाण्यज्ञानानास्कन्दितत्वानाहार्यत्वाद्यन्तर्भावेनापि तदवच्छेदकतायाः पर्याप्तत्वादितिवाच्यं यत्किञ्चित्प्रतिबन्धकतावच्छेदकीभूताभावविशिष्टतादृशनिश्चयत्वपर्याप्तावच्छेदकताकप्रतिबन्धकत्वस्य तद्घटकत्वेनैव वक्तव्यत्वादित्यवधेयम् ॥

तथापि संशयत्वमत्र तादृशनिश्चयाप्रतिबन्धकत्वं तथा च पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्तत्वे सति तादृशनिश्चयप्रतिबन्धकतावच्छेदकविषयताशून्यत्वमिति फलितार्थ इति जगदीशः । न चात्र निश्चयत्वस्य प्रतिबध्यतानवच्छेदकत्वादसम्भवइति वाच्यं तादृशज्ञानत्वावच्छिन्नप्रतिबध्यतावच्छेदकत्वस्य तादृशनिश्चयत्वेऽपि सत्त्वेनासम्भवानवकाशादिति पर्याप्त्यनिवेशादित्यभिप्रायेण तस्योक्तत्वादिति कश्चित् । वस्तुतस्तु स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्वसमानाधिकरणतादृशज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्व एतदुभयसम्बन्धेन तादृशनिश्चयत्ववज्ज्ञानत्वमेव पक्षतात्वमिति निरुक्तोभयसम्बन्धस्यैकप्रतियोगिकत्वलाभार्थमेव निश्चयत्वोपादानमित्याहुः । केचित्तु यज्ज्ञातौ

यज्ज्ञानं निश्चयरूपं तज्जातीयानुमित्यादिविशेषलाभाय निश्चयपदं तेनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं लभ्यते व्यापकत्वनिवेशात् पर्वतो वह्निमान्नवा घटवांश्चेत्यादिसंशयस्य संग्रहः । तादृशज्ञानत्वव्यापकत्वनिवेशेऽनाहार्यत्वादिप्रवेशेन गौरवादित्याहुः । न चैवं पर्वतत्वावच्छेदेन वह्नेः साध्यतास्थलेऽप्रामाण्यज्ञानास्कन्दितपर्वतत्वसामानाधिकरण्येन पर्वतो वह्न्यभाववानित्याकारकनिश्चयात्मकपर्वतो वह्निमान्नवेतिसंशयेऽव्याप्तिस्तत्र प्रतिबन्धकतावच्छेदकविषयिताशून्यत्वाभावादिति वाच्यं तादृशनिश्चयनिवर्त्यतावच्छेदकत्वे सति तादृप्रतिबन्धकतानवच्छेदिका या विषयिता तद्वत्त्वस्य विवक्षितत्वात् तथा चोक्तसंशये प्रतियोगित्वसंसर्गावच्छिन्नवह्नित्वावच्छिन्नविषयित्वमेव तादृशमिति नाव्याप्तिः । निर्वह्निः पर्वतोरूपवान्नवेत्यादि संशयस्य तु तादृशविषयित्वविरहान्नातिव्याप्तिः ।

नन्वेवं तादृशनिश्चयनिवर्त्यतावच्छेदकत्वे सति सामान्यतः प्रतिबन्धकतानवच्छेदकं यद्विषयित्वं तद्वत्त्वमेव तादृशत्वमित्यस्यैव सम्यक्त्वे किं तादृशनिश्चयत्वपर्यन्तानुशरणेनेति तथाहि निर्वह्निः पर्वतो रूपवान्नवेत्यादिसंशयस्य साध्यवत्तानिश्चयनिवर्त्यतावच्छेदकं यद्वह्नित्वाद्यवच्छिन्नतादृशविषयित्वं तत्प्रतिबन्धकतावच्छेदकम् अतो न तत्संग्रहः । अस्ति च अप्रामाण्यज्ञानास्कन्दितपर्वतो वह्न्यभाववानितिनिश्चयात्मकपर्वतोवह्निमान्नवेतिसंशये उभयप्रकारतानिरूपितविशेष्यतैव तादृशीत्यतो नतस्यासंग्रहः । न च नीलपर्वतो महानसीयवह्निमान्नवेति संशयेऽव्याप्तिः नीलत्वावच्छिन्नविषयितायाः पर्वतो नीलाभाववानिति बाधबुद्धेः प्रतिबन्धकतावच्छेदकत्वेन तादृशाभावत्वावच्छिन्नविषयताया अभावः प्रतियोगितासम्बन्धावच्छिन्नमहानसीयवह्न्यभाववानितिबाधबुद्धेः प्रतिबन्धकतावच्छेदकतया वह्नित्वावच्छिन्नविषयतायाश्च वह्निर्महानसीयत्वाद्यभाववानिति बाधबुद्धेः प्रतिबन्धकतावच्छेदकतया तत्र तादृशप्रतिबध्यतावच्छेदकप्रतिबन्धकतानवच्छेदकविषयत्वविरहादिति वाच्यम् । तथापि पक्षतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतानवच्छेदकविषयित्वस्य वाच्यतयोक्तदोषवारणसम्भवात् । अवच्छेदकत्वं च

अवच्छेदकतावच्छेदकसाधारणम् अतो न बाधनिश्चयेऽतिव्याप्तिः अथवा पक्षतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकताकप्रतिबन्धकताया वाच्यतयैवोक्तदोषवारणसम्भवादिति । न च तथापि प्रत्यक्षं प्रति ग्राह्यसंशयस्य प्रतिबन्धकतया संशयपक्षतावादिमते संशयविषयतामात्रस्य प्रत्यक्षत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतया पक्षतालक्षणस्यासम्भवापत्तिरिति वाच्यम् । ज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशेनापि दोषवारणसम्भवादिति चेन्न भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वस्य लाघवेन परामर्शविशिष्टसंशयत्वेन क्वचित्स्थलविशेषे साध्यप्रकारकसंशयत्वमात्रेणैव वा कल्पनीयतया वह्न्यादिसंशयविषयताया अपि अनुमित्यन्यघटादिज्ञानप्रतिबन्धकतावच्छेदकत्वादव्याप्तिरतस्तन्निवेशः । न च तादृशस्थलविशेषे साध्यप्रकारकसंशयत्वेन कारणताकल्पनेनैवोपपत्तौ तत्रानुगमस्यैवाकरणीयत्वात् कुतोऽव्याप्तिरिति वाच्यम् । यतो यद्धर्मावच्छिन्नाभावसाध्यकस्थले साध्यप्रकारकसंशयादेवानुमितिः तत्र साध्यप्रकारकसंशयत्वेनैव कारणत्वं प्रतिबन्धकत्वं च कल्पनीयं यद्धर्मावच्छिन्नसाध्यकस्थले तु साध्यप्रकारकसाध्यविशेष्यकनानाविधसंशयादेवानुमितिस्तत्र निरुक्तप्रतिबध्यताशालिज्ञानत्वेनैव कारणत्वस्यावश्यकतया तद्धर्मावच्छिन्नसाध्यकस्थलीयपक्षतालक्षणस्य साध्याभावप्रकारकसंशयेऽव्याप्तिः तादृशसाध्याभावविषयतायाः तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वविरहात् । न च तथापि अनुमितिनिष्ठप्रतिबध्यतानिरूपिततादृशप्रतिबन्धकतानवच्छेदकत्वविवक्षयैवोक्तस्थलेऽव्याप्तिवारणं सम्भवति भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वस्य अनुमितिनिष्ठप्रतिबध्यत्वानिरूपितत्वादिति वाच्यम् अनुमितिं प्रत्यपि भिन्नविषयकशाब्दसामग्र्याः प्रतिबन्धकतयोक्तस्थले साध्याभावप्रकारकसंशयस्यापि योग्यताज्ञानविधया घटाद्यनुमितिप्रतिबन्धकत्वेन उक्तविवक्षायामप्यप्रतीकारादिति ध्येयम् । वस्तुतस्तु प्रतिबन्धकत्वस्यैकस्याभावात् सामान्यतः प्रतिबन्धकतानवच्छेदकत्वस्य वक्तुमशक्यत्वमतः साध्यवज्ज्ञानार्थकतादृश-

निश्चयपदप्रवेश इति युक्तं पश्यामः । केचित्तु पर्वतत्वाद्यवच्छेदेन वह्निसाध्यकस्थले सामानाधिकरण्येन वह्न्यभावनिश्चयात्मकनिरुक्तसंशय एव न स्वीक्रियते विरोधिनोः संशयत्वनिश्चयत्वयोरेकत्रासत्त्वात् इदं तु सत्प्रतिपक्षे स्वयं भट्टाचार्येणोक्तम् । एवं च जगदीशोक्तिर्यथाश्रुतमेव संगच्छत इत्याहुः ॥

अथात्र प्रतिबन्धकतावच्छेदकविषयताशून्यत्वमित्यत्र ज्ञानपदं व्यर्थमिति न च पर्वते वह्निज्ञानं जायतामितीच्छायामतिव्याप्तिः तस्या अपि साध्यवत्त्वाज्ञानप्रतिबध्यत्वादिति वाच्यं तादृशेच्छायाः साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानरूपसाध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावादिति । न च वह्निमानित्यनुमितौ वह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यता शालिज्ञानं जायतामितीच्छायामतिव्याप्तिस्तस्यास्तादृशाविषयिताशालिज्ञानत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वादिति वाच्यं तथा सत्यपि तादृशप्रतिबध्यतायाः साध्यविषयित्वावच्छिन्नत्वाभावादेव तन्निरासादिति चेन्न पर्वतो विशेष्यतावानित्यनुमितौ विशेष्यतात्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानं जायतामितीच्छायामतिव्याप्तेः तन्निष्ठतादृशप्रतिबध्यतायाः साध्यविषयतया अप्यवच्छिन्नत्वादिति न च साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयित्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशादेवनोक्तातिव्याप्त्यवकाश इति वाच्यम् एवमपि ज्ञानवानित्यनुमितौ ज्ञानत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितात्मत्वावच्छिन्नविशेष्यताशालिज्ञानं जायतामितीच्छायामतिव्याप्तेर्दुर्वारत्वादितिध्येयम् ॥

अथ पक्षाविषयितावहिर्भूतसाध्यविषयित्वघटितधर्मावच्छिन्नप्रतिबध्यत्वमित्यत्र किं तावत् वहिर्भूतत्वं न च पक्षविषयतामिन्नत्वमेव तदिति वाच्यम् वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यत्र तादृशपर्वतो वह्निमान्नवेत्यादिसंशयस्य सं-

प्रसङ्गापत्तेः तादृशविषयतायाः पक्षविषयिताभिन्नत्वात् इति चेन्न पक्षतावच्छेदकावच्छिन्नविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वस्य तादृशबहिर्भूतपदेन विवक्षितत्वात् । यद्यपि यद्यवच्छेदकावच्छेदकसाधारणावच्छेदकत्वं न स्वीक्रियते तदा पक्षविषयितावहिर्भूतत्वं तादृशसाध्यविषयितायामक्षतमेव । तथापि पक्षतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुभवत्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वस्य विवक्षितत्वान्न दोषः । अथ वह्निपक्षकवह्निसाध्यकस्थले तादृशपक्षविषयितावहिर्भूतसाध्यविषयित्वाप्रसिद्ध्याऽव्याप्तिः यद्यपि लक्ष्यभेदेन लक्षणस्य नानात्वेन पृथिव्यामितरभेदसाध्यकस्थल इव तादृशस्थलेऽपि पक्षविषयिताबहिर्भूतत्वस्यानुपादेयतया तत्र नाव्याप्तिः तथापि वह्निव्याप्यसाध्यकस्थले तादृशविषयित्वाप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वापत्तेः मैवं पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकत्वस्य तादृशवहिर्भूतान्तपदेन विवक्षितत्वात् तत्र लक्षणसमन्वयः न च तादृशस्थले वह्न्यभावो वह्निव्याप्यनिष्ठाभावप्रतियोगी नवेत्यादिसंशयेऽतिव्याप्तिः तन्निष्ठप्रतिवध्यतायाः पक्षविषयतावहिर्भूतसाध्यतावच्छेदकावच्छिन्नप्रकारित्वावच्छिन्नत्वादिति वाच्यम् । असमानप्रकारकज्ञानस्य प्रतिबन्धकतास्वीकर्तृप्राचीनमतेऽपि तादृशज्ञानस्य साध्यवत्तानिश्चयप्रतिवध्यत्वात् । न च तथापि वह्न्यभावसाध्यकस्थले वह्निमान्नवेत्यादि संशयस्य पक्षतात्वानुपपत्तिः । तन्निष्ठप्रतिबध्यतायाः साध्यविषयित्वानवच्छिन्नत्वादिति वाच्यं व्याप्यसाध्यकस्थल एव पक्षविषयितावहिर्भूतसाध्यविषयित्वावच्छिन्नत्वस्योपादेयतया तादृशस्थले तद्विशेषणस्यैवानुपादेयत्वात् । न च वह्निव्याप्यपक्षतावच्छेदककवह्निसाध्यकस्थले वह्निव्याप्यवान् वह्निमान्नवेत्यादिसंशयस्याहार्यतया अप्रतिबध्यत्वेनाव्याप्तिरिति वाच्यं तादृशाव्याप्तेर्मूलव्याख्यानावसरे स्वयमेवोक्तत्वादिति ॥ ५ ॥

अथ वस्तुतस्तु साध्यप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नत्वमेव प्रतिबध्यतायां निवेश्यतां किं साध्याभावप्रकारित्वादिनिवेशेनेति । मैवं वह्निव्याप्यवत्सधर्मा-

पर्वतो वह्निव्याप्यवानित्यादौ वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेति संशयेऽतिव्याप्त्यापत्तेः न च प्रतियोगित्वसंसर्गावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारित्वावच्छिन्नत्वनिवेशादेव न तत्रातिव्याप्तिरिति वाच्यं वस्तुत इत्यभिधानकृन्मते पर्वतो वह्निमानित्यादौ वह्न्यभावः पर्वते न वेत्यादिसंशयस्यालक्ष्यतया तत्रातिव्याप्तेः यद्यपि पूर्वकल्पे लक्ष्यतापन्नस्यात्रापि लक्ष्यतया तत्र लक्षणगमनं न क्षतिकरं तथापि वह्निव्याप्याभावकालीनपर्वतो वह्निमान्न वेति संशयेऽतिव्याप्तेः। न च तद्विवक्षणेऽपि तादृशसंशयेऽतिव्याप्तिर्दुर्वारा इति वाच्यम् । साध्याभावत्वावच्छिन्नप्रकारित्वपदेन पक्षतावच्छेदकावच्छिन्नविशेष्यितानिरूपितस्वरूपसम्बन्धावच्छिन्नप्रकारित्वस्य विवक्षितत्वादिति । न च वह्निव्याप्यपक्षकस्थले वह्निव्याप्यो वह्निमान्नवेति संशयेऽतिव्याप्तिस्तन्निष्ठप्रतिबध्यतायाः साध्यविशेष्यकत्वावच्छिन्नत्वादिति वाच्यम् । साक्षात्परम्परासाधारणपक्षविषयतानिरूपितसाध्यविशेष्यकत्वावच्छिन्नत्वस्य विवक्षितत्वात् । न चैवमपि वह्निव्याप्यकालीनवह्निव्याप्यो वह्निमान्नवेत्यादिसंशयस्य पक्षतात्वापत्तिरितिवाच्यम् । साक्षात्परम्परासाधारणपक्षविषयित्वावच्छिन्नावच्छेदकसाध्यविशेष्यकत्वनिष्ठावच्छेदकताकत्वसाध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वैतदन्यतरवत्प्रतिबध्यत्वस्य विवक्षणीयत्वादिति ध्येयम । केचित्तु पक्षवृत्तित्वाभावः पक्षनिष्ठाभावप्रतियोगित्वाभावः आधेयतासम्बन्धेन पक्षाभाव एतदन्यतमाभावाभावप्रकारतानिरूपितसाध्यविशेष्यत्वावच्छिन्नत्वस्य एतदन्यतमाभावातिरिक्ताभावत्वावच्छिन्नप्रकारत्वानिरूपितसाध्यविशेष्यताकत्वावच्छिन्नत्वस्य वा विवक्षितसाध्यविशेष्यकत्वावच्छिन्नत्वपदेन विवक्षणीयतया वह्निव्याप्यपक्षकवह्निव्याप्यसाध्यकानुमितौ वह्निव्याप्यो वह्निमान्न वेतिसंशयस्य न पक्षतात्वमित्याहुः ॥

यत्तु साध्यवत्तानिश्चयनिवर्त्यसंशयत्वं साध्याभाववत्तानिश्चयनिवर्त्यत्वरूपं सर्वत्र ग्राह्यमतो नोक्तदोषाणामवकाश इति तत्तुच्छं पर्वतत्वावच्छेदेन वह्नेः साध्यतास्थले वह्न्यभाववत्पर्वतसधर्मा वह्निमान् पर्वतो द्रव्यं न वेति सशयस्य पक्षतात्वापत्तिरिति भ्रमदोषेणोक्तम् । तन्न सङ्गच्छते साध्यवत्तानिश्चयप्रतिबध्यतावच्छे-

दिका सती साध्याभाववत्तानिश्चयप्रतिबध्यतावच्छेदिका या विषयिता तच्छालिज्ञानत्वस्य सशयत्वपदेन विवक्षणेनैव उक्तातिव्याप्तिवारणसम्भवादिति चेन्न पर्वतो वह्न्यभावव्याप्यवानित्यादिस्थले पर्वतो वह्न्यभावव्याप्याभावाभाववह्निमान्न वेति संशयीयवह्न्यभावव्याप्याभावाभाववह्नित्वावच्छिन्नविषयितायाः साध्यवत्त्वनिश्चयप्रतिबध्यतावच्छेदकत्वेन साध्याभाववत्तानिश्चयप्रतिबध्यतावच्छेदकत्वेन च तत्रातिव्याप्तेर्दुर्वारत्वादिति ध्येयम् । यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिः तत्तदिच्छाभावसमुदायस्य सिद्धिविशेषणत्वादिच्छाया अननुगमेऽपि न क्षतिरिति शिरोमणिः । सिद्धसमानकालीनानामनुमितिप्राक्क्षणस्थायिसिषाधयिषाणामुत्तेजकविधया पक्षतायां प्रवेशो व्यर्थः कारणतावच्छेदकगुरुत्वापादकश्च स्यादतः सिद्धौ सत्यामिति जगदीशः । अथात्र यत्रादौ सिद्ध्यात्मकपरामर्शः ततो घटेच्छा ततः परामर्शान्तरं ततोऽनुमितिरिति क्रमेण जाता तत्र द्वितीयपरामर्शक्षणेऽनुमित्यापत्तिः तदिच्छासत्त्वदशायाम् उत्तरक्षणेऽनुमितेरुत्पादेन तदिच्छाव्यक्तेरप्युत्तेजकान्तर्गततया तदिच्छाविरहविशिष्टसिद्ध्यभावस्य घटेच्छोत्पादक्षणेऽपि सत्त्वादिति तदुपेक्ष्य गौरवदोषोत्कीर्तनमनुचितमिति चेन्न अन्तिमपरामर्शविशिष्टतदिच्छाव्यक्तेरुत्तेजकत्वस्वीकारेणैव तद्दोषवारणसम्भवात् । न च गौरवमितिवाच्यम् । गौरवस्य स्वयमेवाभिहितत्वादिति । न चैवमपि यत्रादौ बाधनिश्चयस्ततो वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेति परामर्शः ततो घटेच्छा ततोऽनुमित्यात्मकसिद्ध्यात्मकपरामर्शः ततोऽनुमित्यन्तरं जायतामितीच्छा ततोऽनुमितिः क्रमेण जाता तत्रानुमितीच्छाक्षणेऽनुमित्यापत्तिर्दुर्वारेति वाच्यम् । तत्रापि समूहालम्बनपरामर्शविशिष्टघटेच्छाव्यक्तेरुत्तेजकत्वस्वीकारेणैव तद्वारणसम्भवादिति ध्येयम् ॥

न च यत्र धूममात्रपरामर्शोत्तरं धूमालोकोभयलिङ्गकानुमितिर्जायतामितीच्छा ततस्तदुभयलिङ्गकपरामर्शोत्पत्त्यानुमितिः तत्र तदुभयलिङ्गकपरामर्शोत्पत्तिक्षणे धूमलिङ्गकानुमितिः स्यादग्रिमानुमित्यनुरोधेन तदिच्छाव्यक्तेरुत्तेजकत्वादिति वाच्यम् । तत्र समूहालम्बनपरामर्शव्यक्तिविशिष्टतदिच्छाव्यक्तित्वेनैवोत्तेजककोटौ निवेश्यत्वा-

दिति जगदीशः । अथात्र उभयलिङ्गकपरामर्शव्यक्तेरुत्तेजककोटि-निवेशादेव समूहालम्बनपरामर्शोत्पत्तिक्षणेऽनुमित्यापत्तिविरहेण तादृशसमूहालम्बनपरामर्शविशिष्टतदिच्छाव्यक्तेरुत्तेजकत्वकल्पनमनुचितमिति चेन्न अन्यमात्रलिङ्गकेच्छा कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका इति दीधितिग्रन्थस्य यद्यदिच्छाव्यक्तिसत्त्वे आलोकलिङ्गकेच्छासत्त्वे धूमलिङ्गकानुमितिः प्रामाणिकी तदिच्छाविरहविशिष्टालोकलिङ्गकेच्छात्वेनैव प्रतिबन्धकत्वमित्यर्थस्य पर्यवसिततया तदिच्छाव्यक्तेरुत्तेजकत्वं नान्यस्येत्यर्थपरिप्राप्ततया इच्छाव्यक्तेरुत्तेजकत्वलाभाय तन्निवेशस्यावश्यकत्वादिति । केचित्तु यत्रादौ धूममात्रपरामर्शानन्तरं धूमालोकोभयलिङ्गकानुमित्सा ततोऽपेक्षाबुद्ध्यात्मकोभयलिङ्गकपरामर्शादनुमितिः ततोभस्मलिङ्गकेच्छानन्तरं द्वित्वप्रत्यक्षात्मकभस्मलिङ्गकसिद्ध्यात्मकपरामर्शस्ततोऽनुमितिः तत्रोभयलिङ्गकानुमित्यनुरोधेन तत्परामर्शव्यक्तेरुत्तेजकत्वेऽपेक्षाबुद्ध्यात्मकपरामर्शाभावविशिष्टेच्छात्वावच्छिन्नाभावस्य भस्मलिङ्गकेच्छाक्षणे सत्त्वात् भस्मलिङ्गकपरामर्शक्षणे ऽनुमितिवारणाय तादृशपरामर्शविशिष्टेच्छाव्यक्तेरुत्तेजकत्वमावश्यकमित्याहुरिति ध्येयम् ॥

तल्लिङ्गकानुमितौ सिद्धिकालीना तल्लिङ्गकानुमितीच्छाविशेषविरहविशिष्टान्यलिङ्गकानुमितीच्छा एव वा प्रतिबन्धिकेति शिरोमणिः । तल्लिङ्गकानुमित्साभिन्नतदन्यलिङ्गकानुमित्सैव प्रतिबन्धिका तल्लिङ्गकानुमित्साविरहवैशिष्ट्यप्रवेशो गौरवमिति वाच्यं यत्र सिद्ध्यात्मकापेक्षाबुद्धिस्वरूपधूमपरामर्शोत्तरं क्रमेणालोकलिङ्गकानुमितित्वप्रकारेण धूमलिङ्गकानुमितित्वप्रकारेण च इच्छाद्वयी तत्र, चतुर्थक्षणे धूमालिङ्गकानुमित्यनुत्पादापत्तेः धूमलिङ्गकानुमित्साभिन्नाया एवालोकलिङ्गकानुमित्सायाः सत्त्वादिति जगदीशः । अथ तल्लिङ्गकानुमित्साभिन्नत्वनिवेशे कथमुक्तस्थले धूमालिङ्गकानुमित्यनुत्पादापत्तिरित्युक्तं जगदीशेन । यद्यदिच्छाव्यक्तिसत्त्वे सिद्धिकालीनान्यलिङ्गकानुमितिर्जायते तत्तदिच्छाविरहविशिष्टान्यलिङ्गकानुमित्सात्वेनैव तल्लिङ्गकानुमितौ प्रतिबन्धकत्वस्य प्रागुक्ततया उक्तस्थलीयालोकलिङ्गकानुमित्साव्यक्तेरप्युत्तेजककोट्यन्तर्गतत्वेन तदिच्छाभिन्नान्यलिङ्गकानुमित्साया असत्त्वादेवोक्तस्थलीया-

नुमित्युत्पादे बाधकाभावादिति । न चालोकलिङ्गकानुमित्साव्यक्ते-रुत्तेजकत्वे धूमलिङ्गकानुमित्साक्षणेऽनुमित्यापत्तिरिति वाच्यम् सामान्यतः सिद्ध्यभावरूपपक्षताविरहादेवोक्तापत्त्यसम्भवात् सिद्धेः प्रतिबन्धकतायामालोकलिङ्गकानुमित्साव्यक्तेरनुत्तेजकत्वात् । न चान्यालिङ्गकानुमित्साप्रतिबन्धकतायामुक्तस्थलीयधूमलिङ्गकानुमित्साव्यक्तिरुत्तेजकविधया प्रवेश्यतां न त्वालोकलिङ्गकानुमित्साव्यक्तिरपि तन्निवेशे गौरवादिति वाच्यं तत्तदिच्छाभिन्नत्वनिवेशे आलोकलिङ्गकानुमित्साव्यक्तेरेवोत्तेजकविधया प्रवेशनीयत्वात् प्रयोजनविरहेण धूमलिङ्गकानुमित्साव्यक्तेरेवोत्तेजककोटावप्रवेशेन गौरवानवकाशादिति चेदत्र केचित् । तत्तदिच्छाविरहविशिष्टत्वमपहाय तत्तदिच्छाभिन्नत्वनिवेशे यत्र क्रमेण सिद्ध्यात्मकधूमपरामर्शालोकलिङ्गकानुमित्साधूमालोकोभयलिङ्गकसमूहालम्बनसिद्ध्यात्मकपरामर्शानुमितयः तत्र समूहालम्बनपरामर्शक्षणे धूमलिङ्गकानुमित्यापत्तेरग्निमानुमित्यनुरोधेन तदिच्छाव्यक्तेरुत्तेजकत्वात् । न च तत्तदिच्छाविरहवैशिष्ट्यनिवेशेऽप्युक्तापत्तिर्दुर्वारेति वाच्यं मन्मते समूहालम्बनपरामर्शविशिष्टतदिच्छाव्यक्तेरेवोत्तेजकतया तादृशेच्छाविरहविशिष्टतदिच्छाव्यक्तेरेव विरोधित्वात् । भवन्मते तत्र परामर्शविशिष्टतादिच्छाभिन्नत्वनिवेशेऽप्यनिस्ताराच्च विशिष्टतदिच्छातस्तादिच्छाया अनतिरिक्तत्वादित्याहुस्तच्चिन्त्यम् । वस्तुतस्तु यादृशस्थलविशेषेऽन्यालिङ्गकानुमित्साकाले समूहालम्बनोभयपरामर्शोत्तरं कदापि यल्लिङ्गकानुमितिर्न जाता तत्र तल्लिङ्गकानुमितौ तल्लिङ्गकानुमित्सात्वावच्छिन्नाभावविशिष्टान्यलिङ्गकानुमित्सात्वेनैव प्रतिबन्धकत्वं वाच्यं न तु तत्तद्व्यक्तित्वेन तल्लिङ्गकानुमित्साव्यक्तीनां प्रवेशे गौरवात् । तथा च तादृशस्थले यदा अपेक्षाबुद्ध्यात्मकासिद्ध्यात्मकतल्लिङ्गकपरामर्शस्ततोऽन्यालिङ्गकानुमित्सा ततस्तल्लिङ्गकानुमित्सा ततोऽनुमितिस्तत्र तादृशानुमित्यनुत्पादापत्तिः तल्लिङ्गकानुमित्साभिन्नान्यलिङ्गकानुमित्सायाः सत्त्वादतस्तल्लिङ्गकानुमित्साभिन्नत्वमनिवेश्य तल्लिङ्गकानुमित्साविरहवैशिष्ट्यानिवेश इति ध्येयम् ॥

वस्तुतस्तु साध्यनिश्चयत्वं साध्यतावच्छेदकावच्छिन्नप्रकारत्वा-

न्यप्रकारत्वानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमिति जगदीशेनोक्तम् । अथ पर्वतो वह्निमानितिनिश्चयस्य निश्चयत्वानुपपत्तिस्तस्यापि साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यपर्वतत्वनिष्ठप्रकारतानिरूपितविशेष्यताशालित्वादिति चेन्न धर्मितावच्छेदकतानात्मकतादृशप्रकारत्वान्यप्रकारत्वानिरूपितत्वस्य विवक्षितत्वात् । न चैकत्र द्वयमिति रीत्या वह्निघटवान् पर्वत इत्यस्य निश्चयत्वानुपपत्तिस्तदीयविशेष्यताया निरुक्तप्रकारत्वान्यघटत्वावच्छिन्नप्रकारतानिरूपितत्वादिति वाच्यं जगदीशमते मुख्यविशेष्यांशे एकत्र द्वयमिति रीत्या ज्ञानस्य बाधग्रन्थे स्वयमेव खण्डितत्वात् । न च तथाप्येकत्र द्वयमिति रीत्या वह्निघटवत्पर्वतवान् देश इति ज्ञानस्य निश्चयत्वानुपपत्तिरिति वाच्यं मुख्यविशेष्यतानिरूपितत्वेन निरुक्तप्रकारत्वान्यप्रकारताया विशेषणीयत्वादेतेन साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमित्युक्तावेव सामञ्जस्ये कृतं साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वनिवेशेनेति परास्तम् । तदप्रवेशे घटवत्पर्वतवान् देश इत्याकारकज्ञानस्य साध्यनिश्चयत्वापत्तेः तदीयविशेष्यतायामपि मुख्यविशेष्यतानिरूपिततादृशप्रकारत्वान्यप्रकारत्वानिरूपितत्वस्य सत्त्वात् न चैवमपि वह्निमत्पर्वतो घटवानिति ज्ञाने साध्यनिश्चयत्वानुपपत्तिस्तदीयविशेष्यतायां तादृशप्रकारत्वान्यप्रकारतानिरूपितत्वादिति वाच्यं निरुक्तप्रकारत्वान्यप्रकारतानिरूपिता या साध्यतावच्छेदकावच्छिन्नावच्छेदकत्वानिरूपितविशेष्यता तदन्यसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिज्ञानत्वस्यैव साध्यनिश्चयत्वपदेन विवक्षितत्वादिति केचित् । तन्न वह्नितदभाववत्पर्वतवान् देश इति ज्ञानस्यापि साध्यनिश्चयत्वापत्तेः । तस्यापि मुख्यविशेष्यतानिरूपिततादृशप्रकारत्वान्यप्रकारत्वानिरूपितसाध्यप्रकारतानिरूपितविशेष्यताशालित्वात् न च तादृशज्ञाने मानाभाव इति वाच्यं धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यतदभाववद्धूमवान् पर्वत इति ज्ञानस्यानुमितिजनकतावार-

णाय विशिष्टवैशिष्ट्यावगाहित्वेन जनकत्वस्य विशिष्टवैशिष्ट्यावगाहिवादार्थे उक्तत्वादिति । केचित्तु साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वानिवेशे पर्वते वह्निं निश्चिनोमीत्याकारकज्ञानस्य पर्वते वह्निं न जानामीत्याकारकज्ञानप्रतिबन्धकत्वानुपपत्तिस्तस्य वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानानवगाहित्वात् । स्वमते तु वह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितवह्नित्वावच्छिन्नप्रकारत्वनिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन पर्वते वह्निं निश्चिनोमीतिनिश्चयस्य सामान्यघटितविशेषावगाहिज्ञानप्रतिबन्धकत्वमक्षतमेवेत्याहुः । वस्तुतस्तु वह्निमत्पर्वतो घटवानित्यादिज्ञानस्य वह्निनिश्चयत्वसम्पादनाय साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वावच्छेदकीभूतधर्ममात्रावच्छेदेन तादृशान्यप्रकारतानिरूपितत्वाभावो वाच्यः । न च पर्वतो वह्निमानितिज्ञानस्य निश्चयत्वानुपपत्तिस्तदीयपर्वतत्वावच्छिन्नविशेष्यतायाम् अन्यप्रकारतानिरूपितत्वाभावस्य व्याप्यवृत्तितया अवच्छेदकत्वास्वीकारादिति वाच्यं साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वावच्छेदकीभूतधर्मावच्छिन्नं यत्तादृशान्यप्रकारतानिरूपितत्वं तदभावस्य वक्तव्यत्वादिति । तथा च संशये प्रसिद्धस्य तादृशान्यप्रकारतानिरूपितत्वस्य योऽभावस्तस्य पर्वतो वह्निमानितिनिश्चयीयविशेष्यतायामपि सत्त्वेन पर्वतो घटवानिति निश्चयस्य साध्यनिश्चयत्वापत्तिरतः साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वस्य निरुक्तविशेष्यतायामावश्यकत्वमिति । न च वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वावच्छेदकं यत् पर्वतत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वत्वं तदवच्छेदेन घटप्रकारतानिरूपितत्वस्यापि सत्त्वादेव नातिव्याप्तिरितिवाच्यं तदीयविशेष्यतानिष्ठपर्वतत्वनिष्ठावच्छेदकतानिरूपितविशेष्यतात्वस्य वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वानवच्छेदकत्वादतिप्रसक्तत्वात् किं तु वह्निप्रकारतानिरूपितपर्वतत्वनिष्ठावच्छेदकतानिरूपितविशेष्यतात्वमेव वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वावच्छेदकतादृशविशेष्यतात्वस्य च पर्वतो घटवानितिनिश्चयीयविशेष्यतायामसत्त्वादिति ध्येयम् । केचित्तु स्वाव-

च्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारत्वावच्छिन्न-प्रतिबध्यतावच्छेदकप्रकारत्वानिरूपितत्वस्वनिरूपितत्वोभयसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टविशेष्यताशालिज्ञानत्वमेव साध्यनिश्चयत्वम् । अत्र च कल्पे एकत्र द्वयमिति रीत्या वह्निघटवानिति ज्ञानाभ्युपगमेऽपि न क्षतिरित्याहुः । नव्यास्तु साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमेव निश्चयत्वम् । न तु साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वघटितम् । तथाहि वह्निमान् घटाभाववान् इत्याकारकज्ञानं प्रति वह्निमान् घटवानित्याकारकनिश्चयस्य घटत्वावच्छिन्नप्रकारतानिरूपितवह्न्यवच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वे वह्निमद्घटवान्पटवानित्याकारकघटधर्मितावच्छेदकवह्निप्रकारकनादृशोभयधर्मधर्मितावच्छेदककपटप्रकारकनिश्चयस्यापि तादृशज्ञाने प्रतिबन्धकत्वापत्तिः तस्यापि घटत्वावच्छिन्नप्रकारतानिरूपितवह्न्यवच्छिन्नविशेष्यताशालित्वादतो जगदीशमते समानाधिकरणप्रकारताविशेष्यतयोरैक्यमिव समानाधिकरणविशेष्यताद्वयोरैक्येऽपि वह्निमत्पर्वतो घटवानित्यादिज्ञानीयविशेष्यतावृत्ति यद्वह्नित्वावच्छिन्नावच्छेदकतानिरूपितत्वं यश्च घटत्वावच्छिन्नप्रकारतानिरूपितत्वं तयोः परस्परावच्छेदकभावं स्वीकृत्य वह्नित्वावच्छिन्नावच्छेदकतानिरूपितत्वविशिष्टविशेष्यतात्वावच्छिन्ननिरूप्यकताकनिरूपकतावद्घटत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वमेवं वह्नित्वावच्छिन्नावच्छेदकतानिरूपितत्वविशिष्टविशेष्यतात्वावच्छिन्ननिरूप्यताकनिरूपकतायद्घटत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन च प्रतिबन्धकत्वं वाच्यं तुल्यन्यायात् तथा च प्रागुक्तवह्निमद्घटवान् पटवानित्याकारकनिश्चयीयघटत्वावच्छिन्नप्रकारताया वह्नित्वावच्छिन्नावच्छेदकताकविशेष्यतात्वावच्छिन्ननिरूप्यताकनिरूपकताकत्वस्यास्वीकारेण तादृशनिश्चयस्य न वह्निमान् घटाभाववानित्याकारकज्ञानप्रतिबन्धकत्वमिति एवं च साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वानवच्छिन्नं यदन्यप्रकारतानिरूपितत्वं तदभाववत्पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमेव सा-

ध्यनिश्चयत्वं विवक्षणीयं वह्निमत्पर्वतो घटवानित्याकारकनिश्चयीयविशेष्यतावृत्तियद्घटत्वावच्छिन्नप्रकारतानिरूपितत्वं तद्वह्नित्वावच्छिन्नावच्छेदकतानिरूपितत्वावच्छिन्नमेव घटवान् पर्वतो वह्निमानित्याकारकनिश्चयीयविशेष्यतावृत्ति यद्घटत्वावच्छिन्नप्रकारतानिरूपितत्वं तस्य घटत्वावच्छिन्नावच्छेदकतानिरूपितत्वस्वरूपतया वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वावच्छिन्नमेवातस्तादृशविशेष्यतायां तयोः सत्त्वं न निश्चयत्वविघटकम् अवच्छेदकतानात्मकसंशयीयप्रकारतानिरूपितत्वद्वयस्य तु अवच्छेद्यावच्छेदकभावो न स्वीक्रियते प्रतिबध्यप्रतिबन्धकभावानुरोधात् तदनुरोधेनैव तद्धर्मावच्छिन्नप्रकारतानिरूपितत्वतद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्मकप्रकारतानिरूपितत्वद्वयोस्तथास्वीकारादिति चिन्तनीयम् ॥

अथ तथापि संयोगसम्बन्धेनाभावसाध्यकस्थले संयोगेनाभाववान्न वेति संशयस्य निश्चयत्वापत्तिस्तदीयविशेष्यताया अपि साध्यतावच्छेदकीभूताभावत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितत्वादिति न च तादृशसशंये स्वरूपसम्बन्धावच्छिन्नप्रकारत्वनिरूपितत्वस्यैव सत्त्वादिति वाच्यम् एवमपि स्वरूपसम्बन्धेनाभावसाध्यकस्थले अभाववान्नवेति संशयस्य निश्चयत्वापत्तेः । न च तादृशसंशय एव न सम्भवतीति स्वसामग्रीविरहादिति वाच्यम् तादृशसंशयस्यासम्भवेऽपि अभावाभाववान्नवेति संशयस्य सम्भवादिति चेन्न साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानस्यैव साध्यनिश्चयपदेन विवक्षितत्वात् । वैशिष्ट्यं च स्वभिन्नप्रकारतानिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वस्वनिरूपितत्वोभयसम्बन्धेनेति ध्येयम् ॥

पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन सिद्धेः तत्सामानाधिकरण्यमात्रेणानुमितिं प्रति तु सिद्धिमात्रस्य विरोधित्वमिति शिरोमणिः । न च पर्वतधर्मिकवह्न्यनुमितिमात्रं प्रत्येव पर्वतत्वाद्यवच्छेद्यत्वावगाहिवह्निनिश्चयस्य विरोधित्वात् प्रतिबध्यदिशि पर्वतत्वाद्यवच्छेद्यत्व-

निवेशो व्यर्थ इति वाच्यम् पर्वतत्वाद्यवच्छेदेन सिद्ध्युत्तरं तदव-च्छेदेनानुमित्सया पर्वतत्वाद्यवच्छेदेनेव तत्सामानाधिकरण्ये-नानुमित्यापत्तिरिति जगदीशः । न च प्रतिबध्यदिशि अवच्छेद्य-त्वानिवेशे संयोगत्वनिष्ठावच्छेदकताकसंसर्गताकत्वावच्छिन्नविधेय-ताकानुमितित्वस्यैव कार्यतावच्छेदकतया पर्वतत्वाद्यवच्छेदेन वह्निनिश्चयोत्तरं महानसीयसंयोगेनापि वह्न्यनुमितिर्न स्यात् इति वाच्यं प्रतिबध्यदिशि अवच्छेद्यत्वमनिवेश्य पर्वतत्वव्यापकप्रतियो-गिकत्वविषयताभिन्नत्वे सति संयोगत्वविषयताभिन्ना या विषयता तदनिरूपितसंसर्गताकानुमितित्वस्यैव कार्यतावच्छेदकत्वात् । न चैवमवच्छेद्यत्वाप्रवेशे कुतो लाघवमिति वाच्यं प्रतिबध्यदिशि अवच्छेद्यत्वप्रवेशे निरुक्तविषयताभिन्नविषयतानिरूपितत्वे सति तादृशव्यापकप्रतियोगिकत्वविषयतानिरूपितसंसर्गताकानुमितित्व-स्यैव कार्यतावच्छेदकत्वस्यावश्यकत्वात् । अन्यथा सामानाधि-करण्यमात्रेणानुमितिसाधारणकार्यतावच्छेदकं स्यादिति भा-वः । न चावच्छेद्यत्वनिवेशे तादृशविषयताभिन्नविषयत्वानिरूपि-तत्वमनिवेश्य तादृशव्यापकप्रतियोगिकत्वविषयतानिरूपितसंयो-गत्वावच्छिन्नसंसर्गताकानुमितित्वमात्रस्य कार्यतावच्छेदकत्वे-ऽपि सामञ्जस्यमिति वाच्यम् तथा सति पर्वतत्वावच्छेदेन वह्नि-निश्चयोत्तरं पर्वतत्वव्यापकप्रतियोगिकमहानसीयसंयोगेन वह्न्य-नुमित्यनुपपत्तेरिति ध्येयम् ॥

अथात्र सामानाधिकरण्येनानुमितिकारणीभूतसामानाधिकर-ण्येनानुमित्साविरहविशिष्टसिद्ध्यभावरूपपक्षताया असत्त्वादेवोक्त-स्थले सामानाधिकरण्येनानुमित्यापत्तिर्न सम्भवतीति किमेतादृश-प्रयासेनेति चेदत्र केचित् । यत्र सामानाधिकरण्येनानुमित्सा अव-च्छेदावच्छेदेन सिद्ध्यात्मकपरामर्शः तत्र सामानाधिकरण्येनानुमि-त्यनुपपत्तिः सामान्यतोऽनुमितित्वावच्छिन्नं प्रति प्रतिबन्धकी-भूतावच्छेदावच्छेदेनानुमित्साविरहविशिष्टावच्छेदावच्छेदेन सि-द्धेः सत्त्वादतस्तत्रानुपपत्तिवारणार्थं सामान्यतोऽनुमितित्वाव-च्छिन्नं प्रति अनुमित्साविरहविशिष्टावच्छेदावच्छेदेन सिद्धिप्रति बन्धकत्वं कल्पनीयम् । एवं च निरुक्तस्थले निरुक्तेच्छायाः सामानाधिकरण्येनानुमितिकारणीभूतसिद्धिसामान्याभावरूपपक्ष-

तायामप्युत्तेजकत्वापत्त्या गौरवं तथा च सामानाधि-करण्यमात्रानुमितिं प्रति सामानाधिकरण्येनानुमित्सा-विरहविशिष्टसामानाधिकरण्यमात्रेण सिद्धेरेव प्रतिबन्ध-कत्वं वाच्यं तथा च प्रकृतस्थलेऽनुमित्यापत्तिः सहज-त एव सङ्गच्छते । एवं च सामानाधिकरण्यमात्रेणानुमितिं प्र-ति धर्मितावच्छेदकावच्छेद्यत्वविशिष्टसम्बन्धशुद्धसम्बन्धभेदे-नाप्रामाण्यज्ञानस्य द्विविधतया उत्तेजकत्वानुरोधादेवावच्छे-दावच्छेदेन सिद्धेः सामानाधिकरण्येन सिद्धेः पृथक्पृथगेव विरो-धित्वं वाच्यम् तथा च तत्रैवावच्छेदावच्छेदेन सिद्धेः प्रतिब-न्धकत्वस्य स्वातन्त्र्येणाकल्पनादुक्तापत्तिसम्भव इत्याहुः तन्न त-था सति अवच्छेदावच्छेदेन सिद्ध्युत्तरं सामानाधिकरण्येना-नुमित्साया अवच्छेदावच्छेदेनानुमित्यापत्तेः । प्रतिबध्य-दिशि अवच्छेद्यत्वनिवेशेऽपि उक्तस्थले सामानाधिकरण्येनानु-मित्यापत्तेर्दुर्वारत्वाच्च सामानाधिकरण्येनानुमितिसामग्रीसत्त्वात् । अवच्छेदावच्छेदेन सिद्ध्यात्मकपरामर्शोत्तरं सामानाधिकरण्येना-नुमित्यापत्तिवारणाय पश्चात् कल्पनीयस्य सामानाधिकरण्ये-नानुमित्साविरहविशिष्टावच्छेदावच्छेदेन सिद्धेः प्रतिबन्धकत्व-स्य एतादृशापत्तिभिया प्रागेव कल्पयितुमुचितत्वादिति ध्येय-म् । परे तु धर्मिविशेषनियन्त्रितकल्पानुसरणेनैव तादृशाप-त्तिरभिहिता तत्कल्पे प्रतिबध्यप्रतिबन्धकभावश्च पर्वतत्वा-वच्छेद्यत्वानवगाहिपर्वतत्वावच्छिन्नतत्पर्वतनिष्ठविशेष्यताकवह्निवि-धेयताकानुमितिं प्रति पर्वतत्वावच्छेद्यत्वानवगाहिपर्वत-त्वावच्छिन्नतत्पर्वतनिष्ठविशेष्यताकवह्निनिश्चयत्वेनैव प्रतिबन्धक-ता । अपरा च पर्वतत्वावच्छेदेनैकत्र पर्वते वह्निनिश्चये प-र्वतत्वसामानाधिकरण्येन पर्वतान्तरेऽपि वह्न्यनुमित्यनुत्पत्त्या प-र्वतत्वसामानाधिकरण्येन वह्न्यनुमितिं प्रति तदवच्छेदेन व-ह्निनिश्चयत्वेन धर्मिविशेषानियन्त्रितेन कल्पनीया इच्छाया एकरूपेण उत्तेजकत्वासम्भवेनावच्छेदावच्छेदेनानुमितिं प्रति चा-वच्छेदावच्छेदेन सिद्धेरपि प्रतिबन्धकतान्तरं कल्पनीयम् अत्र च प्रतिबध्यदिशि अवच्छेदावच्छेद्यत्वाप्रवेशे सामानाधिकरण्येनानु-मितिस्थलीयावच्छेदावच्छेदेन सिद्धेः प्रतिबन्धकत्वमपि नाद्रियते

एवं च प्रकृतस्थले तादृशापत्तिर्यथाश्रुतमेव सङ्गच्छते इत्याहुः । तदपि न पश्चात्कल्पनीयस्य एतत्प्रतिबन्धकत्वस्य प्रागेव कल्पने तद्ग्रन्थस्य सन्दर्भविरोधापत्तेः । अपरे तु यत्र सामानाधिकरण्येनानुमित्सा अवच्छेदावच्छेदेन सिद्ध्यात्मकपरामर्शस्तत्र सामानाधिकरण्येनानुमित्यनुपपत्तिः सामान्यतोऽनुमिमित्वावच्छिन्नप्रतिबन्धकीभूतावच्छेदावच्छेदेनानुमित्साविरहविशिष्टावच्छेदावच्छेदेन सिद्धेः सत्त्वादित्यत्रैव तात्पर्यमित्याहुः । अन्ये तु अत्र सामानाधिकरण्येनानुमितिकारणीभूतस्य सामानाधिकरण्येनानुमित्साविरहविशिष्टसिद्ध्यभावस्यासत्त्वेऽपि सामान्यधर्मावच्छिन्नकारणीभूतावच्छेदावच्छेदेन सिद्ध्यभावघटितकारणस्तोमादेव तदापत्तिसम्भवः । न च सामानाधिकरण्येनानुमितित्वरूपविशेषधर्मावच्छिन्नस्य कारणविरहादेव तदापत्त्यसम्भव इति वाच्यं विशेषधर्मावच्छिन्नकारणासहकारेणाप्यवच्छेदावच्छेदेनानुमितिजननात् सामान्यधर्मावच्छिन्नकारणस्य सामानाधिकरण्येनानुमितित्वरूपविशेषधर्मावच्छिन्नस्य कारणसहकारित्वासम्भवात् एकत्र विशेषधर्मावच्छिन्नकारणानपेक्षणे सामान्यधर्मावच्छिन्नकारणेनैकत्रापि विशेषधर्मावच्छिन्नकारणं नापेक्षते इति नियमात् एतदेवापि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गात् नहि तादृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्तीत्यादिग्रन्थेन दीधितिकृता पश्चाद्वक्ष्यते । न च उक्तस्थलेऽवच्छेदावच्छेदेनानुमित्युत्पत्त्या सामान्यधर्मावच्छिन्नो भवत्येव कथमापत्तिरिति वाच्यं कथञ्चिद्बाधदशायां तस्या अप्यनुत्पत्तेः तथाहि यत्र सामानाधिकरण्येनापेक्षाबुद्ध्यात्मकालौकिकबाधनिश्चयस्ततोऽपेक्षाबुद्ध्यात्मकावच्छेदावच्छेदेन लौकिकसिद्ध्यात्मकपरामर्शः ततोऽवच्छेदावच्छेदेनानुमित्सा तत्र परामर्शचतुर्थक्षणेऽवच्छेदावच्छेदेनेव तृतीयक्षणे सामानाधिकरण्येनानुमित्यापत्तेरिति प्राहुः ॥

अन्ये तु द्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमितिदर्शनादनुमित्सायोग्यता वाच्या सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः अनुमित्सोत्तरसन्तरानुमित्यनुत्पा-

दे दिवसादिविलम्बेन इन्द्रियादिना निर्णीते साध्ये लिङ्गपरामर्शादनुमितिप्रसङ्गादिति शिरोमणिः । तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयीभूतसिद्धिप्रागभावकूटवत्त्वं योग्यता वैशिष्ट्यं च एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन । यद्यपि स्वपदेनानुमित्युपधायकतत्तदिच्छाव्यक्तीनामुपग्रहे दिवसान्तरीयानुमित्साव्यक्तेर्योग्यतायामप्रवेशान्नैष दोषस्तथापि वह्न्यनुमितित्वप्रकारेणातीतानुमितिगोचरेच्छायां सिद्धिकाले वह्न्यनुमितिर्न स्यात् तद्विषयसिद्धिप्रागभावकूटस्य तदानीमसत्त्वात् । तत्तदनुमित्सापूर्वक्षणावृत्तित्वेन तत्तदनुमित्साविषयसिद्धीनां तत्तदनुमित्साकालीनत्वेन वा तत्तदनुमित्साविषयसिद्धिप्रागभावानां विवक्षया कथंचिदुपपादनेऽपि अनुमितिद्वयं जायतामितीच्छायामनुमितिद्वयं न स्यात् तत्तदनुमित्साविषयीभूतानुमितिप्रागभावकूटस्य प्रथमानुमित्युत्पत्तिदशायामसत्त्वादिति जगदीशः । अथात्र स्वप्रागभावविरहविशिष्टा या स्वविषयसिद्धिस्तत्प्रागभावकूटवत्त्वं स्वप्रागभावविरहविशिष्टस्वविषयसिद्धिप्रागभावत्वावच्छिन्नानुयोगिताकं यत्कूटत्वं तदवच्छिन्नत्वमेव वा योग्यतास्तु तावतैव उक्तदोषवारणसम्भवात् तत्तदनुमित्सापूर्वक्षणावृत्तित्वादिविशेषणं व्यर्थमिति चेन्न तादृशकूटत्वावच्छिन्नाधिकरणताया वैलक्षण्यस्य विरहेणानुमित्सापूर्वकालीनसिद्धिदशायामनुमित्यापत्तेस्तदानीमपि तादृशकूटसत्त्वात् द्विधा प्रागभावविरहवैशिष्ट्यनिवेशे लाघवानवकाशादिति ध्येयम् ॥

अथ सिद्धिविशिष्टान्यस्वविषयसिद्धिप्रागभावकूटवत्त्वं विवक्षितम् । अत्र कल्पे स्वपूर्वक्षणावृत्तित्वविशेषणमस्ति वैशिष्ट्यं च स्वप्रागभाववत्त्वस्वसामानाधिकरण्यस्ववृत्तित्वैतत्रितयसम्बन्धेन ॥ स्वसामानाधिकरण्यं च समवायेन वृत्तित्वं कालिकसम्बन्धेनेति नोक्तस्थलेऽनुमितिद्वयानुपपत्तिरिति चेन्न यत्रानुमितित्वेनातीतानुमितिमात्रविषयिनीच्छा तत्रानुमित्यनुपपत्तेस्तत्र स्वप्रागभावविरहविशिष्टसिद्धिविशिष्टान्यस्वविषयसिद्धिप्रागभावस्यासत्त्वादिति । न च स्वपूर्वक्षणावृत्तित्वस्वविषयतावच्छेदकवत्त्वस्वसामानाधिकरण्यैतदर्थत्रयावच्छिन्नासमानकालीनत्वं स्वप्रागभावविरहविशिष्टस्वविषयसिद्धिप्रागभावे निवेश्यं न तु कूटत्वं

प्रागभावविशेषणम् । तावतैवानुमित्यन्तरमनुमित्यापत्तिवारणसम्भवात् तथा च यत्रानुमितिद्वयं जायतामितीच्छा तत्रैकानुमित्यनन्तरमपि नानुपपत्तिस्तादृशधर्मावच्छिन्नासमानकालीनद्वितीयानुमितिप्रागभावस्यैव सत्त्वादिति वाच्यं यत्र स्थलविशेषे कस्यापि पुंसः साध्यवत्पक्षविषयकं प्रत्यक्षं न जातं तत्र साध्यवत्प्रत्यक्षाद्यतिरिक्तं ज्ञानं जायतामितीच्छायामनुमित्यनुपपत्तेः । तदिच्छाविषयतावच्छेदकधर्माप्रसिद्धेरिति । इदं त्ववधातव्यं स्वसामानाधिकरण्यं स्वपूर्वक्षणावृत्तित्वं स्वप्रतिबन्धकतावच्छेदकश्च एतद्धर्मत्रयावच्छिन्नासमानकालीनत्वस्य स्वविषयसिद्धिप्रागभावविशेषणत्वे न काप्यनुपपत्तिः । न चानुमितित्वेनातीतप्रत्यक्षादिमात्रविषयकेच्छया अनुमितिर्न स्यात् स्वविषयीभूतसिद्धिप्रागभावस्य सत्त्वादिति वाच्यं स्वविषयीभूतसिद्धिप्रागभावपदेन स्वप्रतिबन्धकीभूतसिद्धिप्रागभावस्य विवक्षितत्वादुक्तस्थलेऽनुमितिप्रागभावस्यैव तादृशत्वेन नानुपपत्तिरिति ध्येयम् । अथ स्वप्रागभावविरहविशिष्टस्वविषयसिद्धिप्रागभावकूटस्यानिवेशेऽपि अनुमित्युपधायकतत्तदनुमित्सोत्तरवास्तविकयद्यदनुमितिर्जायते तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमितिप्रागभावस्य योग्यतात्वविवक्षणेनैवानुमित्युत्तरमनुमित्यापत्तिवारणं सम्भवति यत्रानुमितिद्वयं जायतामितीच्छा तत्रापि तदिच्छाप्रागभावविरहविशिष्टद्वितीयानुमितिप्रागभावस्योत्तेजककल्पनेन सामञ्जस्यादिति तत्कथं परित्यक्तमिति । न च तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमितिप्रागभावस्योत्तेजकत्वे विनिगमकाभावेन तत्तदनुमित्साप्रागभावविशिष्टतत्तदनुमित्युत्पत्तिक्षणोत्पन्नव्यक्त्यन्तरप्रागभावस्याप्युत्तेजकत्वापत्तिरिति वाच्यं तत्तदनुमित्साविषयसिद्धिप्रागभावकूटनिवेशेऽपि विनिगमकाभावेन तादृशव्यक्त्यन्तरप्रागभावस्याशक्यवारणत्वात् इति चेदत्र केचित् । स्वत्वस्यानुगतत्वमते स्वप्रागभावविरहविशिष्टस्वविषयसिद्धिप्रागभावकूटत्वे नानुगतरूपेणैवानुमित्साव्यक्तेर्निविष्टतया तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमितिप्रागभावत्वेन उत्तेजकत्वे महागौरवम् । न चैवं दिवसान्तरीयानुमित्साव्यक्तेरपि स्वपदार्थान्तर्गतत्वेन यद्यपि इत्यादि ग्रन्थासङ्गतिरिति वाच्यम् अनुमित्सु-

पद्यापकस्वपदार्थस्यैव विवक्षणीयतया दिवसान्तरीयानुमित्सा-व्यक्तेः स्वपदार्थानन्तर्गतत्वादित्याहुः । परे तु उक्तक्रमेण तत्तदनु-मितिप्रागभावस्य योग्यताविवक्षणेपि यत्रादौ स्वचतुर्थक्षणेऽनुमिति-र्जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शनाशक्षणेऽनुमितिस्तत्र प-रामर्शद्वितीयक्षणेऽनुमित्यापत्तिरतः पूर्वकल्पो न सम्यगिति वदन्ति ॥

यत्तु सिषाधयिषाविरहविशिष्टायास्तस्या अभावः प-क्षतेति शिरोमणिः । सिषाधयिषाविरहविशिष्टस्वक्षणा-व्यवहितोत्तरक्षणत्वं च सिषाधयिषाविरहाविशिष्टस्वक्षणध्वं-साधिकरणसमयध्वंसानधिकरणत्वे सति तादृशस्वसमयध्वं-साधिकरणत्वमिति जगदीशः । अथाव्यवहितोत्तरत्वप्रतियोगि-कोटौ सिषाधयिषाविरहवैशिष्ट्यार्थकतादृशपदं व्यर्थमिति चेन्न तादृशपदाप्रवेशे यत्र सिषाधयिषानन्तरं सिद्ध्यात्मकपरा-मर्शः तदनन्तरं चाप्रामाण्यज्ञानात्मकानुमितिस्तदनन्तरमनु-मित्यापत्तिः परामर्शात्मकसिद्धेस्तादृशसिषाधयिषाविरहविशिष्ट स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया अनुमित्यात्मक-सिद्धेस्तदन्यत्वेऽपि तस्या अप्रामाण्यज्ञानास्कन्दितत्वात् अप्रा-माण्यज्ञानानास्कन्दिताया एव तस्याः प्रतिबन्धकत्वादिति । न चाप्रामाण्यज्ञानस्य तत्तद्व्यक्तित्वेनैव उत्तेजकतया एतादृ-शाप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वास्वीकारेऽनुमित्यात्मकसिद्धेरेव वि-रोधितया न तत्तदुत्तरानुमित्यापत्तिरिति वाच्यं तत्तदु-त्तरपरामर्शोत्पत्तौ तदव्यवहितोत्तरक्षणेऽनुमित्यर्थं तादृशाप्रामा-ण्यज्ञानस्याप्युत्तेजकताया आवश्यकत्वात् । यदि च उत्तरत्व-प्रतियोगिकोटौ सिषाधयिषाविरहविशेषणत्वेऽपि यत्र सिषा-धयिषातृतीयक्षणे सिद्ध्यात्मकपरामर्शस्तदनन्तराप्रामाण्यज्ञाना-स्कन्दितानुमितिस्तदनन्तरमनुमित्यापत्तिः सिद्ध्यात्मकपरामर्श-स्य तादृशक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतयाऽप्रामा-ण्यज्ञानानास्कन्दिततदन्यसिद्धेरभावस्यानुमितिक्षणेऽपि सत्त्वा-त् । यदि चाप्रामाण्यज्ञानव्यक्तिरनुत्तेजिका एव तादृशा-नुमित्युत्तरं परामर्शोत्पादेऽपि क्षणैकविलम्बेनैवानुमितिस्वी-कारादित्युच्यते तदा मन्मतेऽपि तुल्ययुक्त्या प्रकृतस्थलेऽपि ता-दृशाप्रामाण्यज्ञानम् अनुत्तेजकमेव तदुत्तरं परामर्शान्तरोत्पत्ति-

क्षणैकविलम्बेनैवानुमितिस्वीकारसम्भवादित्युत्तरत्वप्रतियोगिकोटौ तद्विशेषणं निष्प्रयोजनकमेवेत्यादिकं विभाव्यते तदा यत्र सिषाधयिषानन्तरं सिद्ध्यात्मकसाध्यतद्व्याप्यपरामर्शस्तदनन्तरं परामर्शात्मकानुमितिधर्मिकेदं वह्न्यभाववति वह्निप्रकारकमित्याकारकाप्रामाण्यावगाहिसमूहालम्बनानुमितिस्तत्र तदुत्तरमनुमित्यापत्तिस्तादृशानुमितितृतीयक्षणेऽनुमितेरानुभविकतया तादृशाप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वस्यावश्यकत्वात् । तस्यानुत्तेजकत्वं स्वीकृत्य क्षणैकविलम्बेनाप्यनुमितेरुपपादयितुमशक्यत्वात् तत्पूर्वक्षणे परामर्शाभावात् अतस्तादृशानुमित्युत्तरमनुमित्यापत्तिवारणाय उत्तरत्वप्रतियोगिकोटौ तद्विशेषणमावश्यकमिति । एतेन प्रागुक्तस्थले तादृशानुमित्युत्तरोत्पन्नपरामर्शविशिष्टतदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वेनैवोपपत्तौ तद्विशेषणं व्यर्थमिति निरस्तम् । न च यत्र सिषाधयिषानाशक्षणे सिद्ध्यात्मकसाध्यतद्व्याप्यपरामर्शस्तदनन्तरं परामर्शात्मकानुमितिधर्मिकेदं वह्न्यभाववति वह्निप्रकारकमित्याकारकाप्रामाण्यावगाहिसमूहालम्बनानुमितिस्तत्र तन्निवेशेऽपि तदुत्तरक्षणेऽनुमित्यापत्तिर्दुर्वारैवेति वाच्यं तत्र गत्यन्तरविरहेण तत्तदनुमितिक्षणादेः प्रतिबन्धकत्वस्य प्रथमोत्पन्नतत्तत्सिद्धिनाशविशिष्टतत्तदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वस्य वा वक्तव्यत्वात् न च प्रागुक्तस्थलेऽपि तत्तत्क्षणस्य प्रतिबन्धकतयैवोपपत्तौ तादृशपदं व्यर्थमिति वाच्यं तादृशानन्तक्षणस्य प्रतिबन्धकताकल्पनमपेक्ष्य लाघवात् स्वक्षणे सिषाधयिषाविरहविशेषणं प्रक्षिप्य तत्रानुमित्यापत्तिवारणस्यैवोचितत्वादिति केचित् समादधिरे तच्चिन्त्यम् । वस्तुतस्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नासिद्धिव्यक्तीनां च तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटमेव निवश्यं तथा च तादृशपदानुक्तौ यत्र क्रमेण सिषाधयिषासिद्ध्यात्मकपरामर्शानुमितयस्तत्र तत्सिद्धिव्यक्तेरपि तादृशानुमितिकतया तद्भेदस्यापि तादृशकूटान्तर्गतत्वेन तन्निवेशे गौरवमित्यतस्तादृशपदमभिहितमिति ध्येयम् ॥

अत्र क्षणपदं विहाय स्वसमयध्वंसाधिकरणकालध्वंसान-

धिकरणत्वे सतीत्युक्तौ यत्र क्रमेण सिषाधयिषासिद्धिपरामर्शानुमितयस्तत्र सिद्ध्युत्पत्तिकालपर्यन्तस्थायि अनुमित्सापूर्वकालोत्पन्नस्थूलकालोपाधिमादाय परामर्शक्षणेऽपि पक्षताविरहप्रसङ्गः सिद्ध्यधिकरणतादृशकालोपाधेरनुमित्सापूर्वदण्डाद्यवच्छेदेन सिषाधयिषाविरहाविशिष्टतया अनुमित्साविरहविशिष्टनिरुक्तस्वसमयाव्यवहितोत्तरत्वस्य परामर्शक्षण एव पर्यवसानात् तदानीं चानुमित्यनुत्पत्त्या तत्सिद्धेरपि निरुक्तानुमितिकभिन्नतया प्रतिबन्धकत्वादतः प्रथमं क्षणपदमिति जगदीशः । अथात्र तादृशकालस्यापि सिद्धिक्षणावच्छेदेन क्षणत्ववत्तया तद्दोषतादवस्थ्यमिति चेन्न यदुपाध्यवच्छेदेन स्वाधिकरणक्षणत्वं तदवच्छेदेन सिषाधयिषाविरहवत्त्वस्य विवक्षितत्वात् । तथा च सिषाधयिषाविरहाधिकरणतावच्छेदकीभूतोपाध्यवच्छिन्नस्वाधिकरणक्षणत्वाधिकरणध्वंसाधिकरण इत्यादिक्रमेणाव्यवहितोत्तरत्वं वाच्यमिति पर्यवसितार्थे जगदीशस्य तात्पर्यम् । न च तथापि सिषाधयिषाविरहाधिकरणतावच्छेदकीभूतस्वाधिकरणोपाधिध्वंसाधिकरणेत्यादिक्रमेणाव्यवहितोत्तरत्वसम्भवे कृतं तादृशागुरुतरविशेषणघटिताव्यवहितोत्तरत्वनिर्वचनेनेति वाच्यम् । तत्रैव सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायिकालोपाधेरपि यत्रादौ सिषाधयिषा ततः सुखोत्पत्तिः ततस्तादृशस्थूलकालोत्पत्तिस्तत्र सुखनिष्ठसिषाधयिषाविरहाधिकरणतावच्छेदकतया सिद्ध्यधिकरणतया तद्दोषतादवस्थ्यात् न चैवमपि उक्तस्थल एव सिद्ध्युत्तरं प्रहरादिविलम्बेन सुखोत्पत्तिस्ततः सिषाधयिषा तत्र सिद्ध्युत्पत्तिक्षणोत्पन्नतादृशसुखोत्पत्तिपर्यन्तस्थायिस्थूलकालोपाधेस्तादृशसुखनिष्ठसिषाधयिषाविरहाधिकरणतावच्छेदकत्वेन तादृशोपाध्यवच्छिन्नस्वाधिकरणक्षणत्वस्य सिद्ध्युत्पत्तिक्षणेऽपि सत्त्वादुक्तदोषो दुर्वार इति वाच्यम् । स्वसामानाधिकरण्यस्वावच्छेदकोपाध्यवच्छिन्नत्वोभयसम्बन्धेन सिषाधयिषाधिकरणताविशिष्टस्वाधिकरणक्षणत्ववत्त्वस्य विवक्षितत्वादिति ध्येयम् । अत्र निरुक्तोभयसम्बन्धेन सिषाधयिषाविरहाधिकरणताविशिष्टस्वाधिकरणत्वविवक्षणेनैव सामञ्जस्ये स्वाधिकरणक्षणत्वपर्यन्तनिवेशो व्यर्थ इति चिन्त्यम् ॥

उत्पत्तिपदानुक्तावेकानुमित्युत्तरमनुमित्यन्तरापत्तिः पूर्वानुमितेः स्वक्षणाऽव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वेन तदन्यासिद्धेरभावादतस्तदुपात्तं न च स्वक्षणाऽव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्वमेव निवेश्यताम् उत्पत्तेः स्वेतरत्वापेक्षया गुरुत्वादिति वाच्यम् यत्र साध्यानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मिकैकानुमितिस्तत्र साध्यानुमित्यन्तरप्रसङ्गादिति जगदीशः । अथात्रानुमितौ स्वभिन्नत्वमनिवेश्य स्ववृत्तिप्रागभावप्रतियोगित्वस्य स्वक्षणाऽव्यवहितोत्तरक्षणवृत्त्यनुमितेर्विशेषणत्वेनैव तद्दोषवारणसम्भवात् कृतमुत्पत्तिनिवेशेनेति चेन्न प्रागभावत्वध्वंसत्वयोरखण्डोपाधित्वानुपगमे प्रागभावत्वं ध्वंसप्रतियोग्यभावत्वं ध्वंसत्वं च जन्यत्वे सत्यभावत्वं जन्यं च नियमघटितमित्युत्पत्त्यपेक्षया महागौरवापत्तेरिति वदन्ति । केचित्तु यत्रानुमितिर्जायतामितीच्छातः साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवांश्चेति परामर्शः ततः साध्यांशेऽप्रामाण्यज्ञानात्मकसाध्यतद्व्याप्यानुमितिस्तत्र तदुत्तरमनुमित्यापत्तिः पूर्वसिद्धेः स्वक्षणाऽव्यवहितोत्तरक्षणवृत्तिस्ववृत्तिप्रागभावप्रतियोग्यनुमितिकतयाऽनुमित्यात्मकसिद्धेरप्रामाण्यज्ञानास्कन्दितत्वेनाप्रतिबन्धकत्वादतस्तदुपात्तम् । स्वमते पूर्वसिद्धिव्यक्तेरेव सिषाधयिषाविरहविशिष्टस्वक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकान्यत्वात् प्रतिबन्धकत्वमित्याहुः ॥

ननु स्ववृत्तित्वस्ववृत्तिध्वसप्रतियोगिक्षणावृत्तित्वोभयसम्बन्धेन सिषाधयिषाविरहविशिष्टस्वक्षणाऽव्यवहितोत्तरक्षणविशिष्टानुमितिकत्वमेव निवेश्यतां किमुत्पत्तिनिवेशेनेति सिद्ध्यात्मकपरामर्शादनुमितेर्वारणाय स्ववृत्तित्वनिवेशः अनुमित्युत्तरमनुमितेर्वारणाय स्ववृत्तिध्वंसेत्यादीति चेन्न सम्बन्धविधयास्यैवोत्पत्तिघटितत्वेन वैयर्थ्यशङ्कानवकाशात् । यो यत्कालवृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यस्य दीधितिकृता वक्तव्यत्वादिति ध्येयम् । न च तथापि स्वेतरपदेन स्वाधिकरणावच्छेदेन स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाविवक्षणान्न कोऽपि दोष इति वाच्यं यत्रानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमित्यनन्तरं पुनरपेक्षाबुद्ध्यात्मकसाध्या-

नुमितिस्तत्र तदुत्तरं साध्यानुमित्यन्तरप्रसङ्गात् । अपेक्षाबुद्ध्यात्मकानुमितिद्वयस्यापि निरुक्तस्वेतरानुमितिकत्वेनाप्रतिबन्धकत्वादिति ध्येयम् ॥

अथ तृतीयक्षणव्यवधायकद्वितीयक्षण एवाव्यवहितोत्तरत्वपर्यवसानात् यत्राविरलक्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयः सिषाधयिषाविरहो विशेषणमस्तु सिद्धेः प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत् यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयस्तत्र पक्षतासम्पत्त्यर्थमिति शिरोमणिः । ननु यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शानुमितयस्तत्र द्वितीयसिषाधयिषाविरहव्यावृत्तिसम्भवात् कथं यत्राविरलक्रमेण सिद्धि इत्यादिस्थलानुधावनमिति चेन्न अव्यवधानप्रतियोगिस्वक्षण एव तादृशविशेषणदानमुपादेयं न तूत्तरत्वप्रतियोगिस्वक्षण इत्याभिप्रायकतया सिषाधयिषेत्यादिक्रमस्थले ऽनुमित्यनुपपत्त्यसम्भवात् दीधितिकारस्य सिद्धिसिषाधयिषेति स्थलानुधावनात् । वस्तुतस्तु यत्र निरुक्तस्थले साध्यानुमितिद्वयं जायतामितीच्छा जाता तदनन्तरासिद्ध्यात्मकपरामर्शात् तत्साध्यानुमितिद्वयोत्पादस्यावश्यकतया तादृशासिद्धेर्निरुक्तभेदानुयोगित्वेन तत्स्थले तादृशविशेषणासत्त्वेऽपि पक्षताया अनपायात् सर्वत्र सिषाधयिषेत्यादिक्रमस्थले ऽनुपपत्त्यसम्भवात् सिद्धिसिषाधयिषेत्याक्रमस्थले तु सर्वत्रैवानुपपत्तिः सम्भवतीत्यभिप्रायेण यत्राविरलक्रमेण सिद्धिसिषाधयिषेत्यादिक्रमस्थलानुधावनमिति ध्येयम् ॥

ग्रन्थलाघवार्थमन्तिमस्य सिषाधयिषाविरहपदस्य व्यावृत्तिमभिदधान एव प्रथमस्य तस्य व्यावृत्तिं पृच्छति अथेति जगदीशः । अस्यायमाशयः । आदौ प्रथमसिषाधयिषाविरहपदस्य व्यावृत्तिं दत्त्वा द्वितीयस्य व्यावृत्तिदाने अव्यहितोत्तरत्वप्रतियोगिक्षणे सिषाधयिषाविरहस्य निवेशिततया द्वितीयसिषाधयिषाविरहपदस्य व्यावृत्तिर्यत्रादौ सिद्ध्यात्मकपरामर्शस्ततः सिषाधयिषा ततोऽनुमितिस्तत्रैव यत्रादौ सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शस्ततोऽनुमितिः तत्रापि सम्भवतीति द्वितीयसिषाधयिषाविरहपदस्य व्यावृत्तिदानार्थम्

एतत्स्थलद्वयानुधावनस्य औचित्येन गौरवं प्रथमतः प्रथमसिषाधयिषाविरहपदस्य व्यावृत्त्यदाने तु अव्यवहितोत्तरत्वप्रतियोगिस्वक्षणे तस्याप्रवेशेन यत्रादौ सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शस्ततोऽनुमितिरित्यत्र द्वितीयसिषाधयिषापदस्य व्यावृत्तिर्न सम्भवतीति एतत्स्थलाभिप्रायेण लिखनमेव ग्रन्थलाघवम्। अत एव तदभिप्रायेण दीधितिकृता यत्राविरलक्रमेण सिद्धीत्याद्युक्तमिति ध्येयम् ॥

सार्वभौमनिरुक्तौ तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे यद्यपि ध्वंसादिघटिताव्यवहितोत्तरत्वकल्पे स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वस्यैव सम्यक्त्वात् सिद्धिपदं व्यर्थम् । परामर्शहेतुभूतस्य व्याप्तिस्मरणादेर्निरुक्तस्वाव्यवहितोत्तरक्षणोत्पत्तिकतयैवाप्रतिबन्धकत्वादेवञ्च सिषाधयिषाविरहद्वयोपादानमपि व्यर्थम् । यत्र क्रमेण सिद्धिसिषाधयिषानुमितयः तत्रानुमित्साजनकफलेच्छादेरेव स्वाव्यवहितोत्तरक्षणोत्पत्तिकभिन्नस्य सत्त्वादेवानुमित्सोत्पत्तिक्षणेऽनुमित्यसम्भवादिति जगदीशः । तथा च यत्रादौ वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेति परामर्शस्ततः साध्यस्ततद्व्याप्यानुमितिस्ततः सुखात्मिकानुमितिर्जायतामितीच्छा ततोऽनुमित्यन्तरं तत्र यत्र वा बाधबुद्ध्यनन्तरं साध्यतद्व्याप्ययोः परामर्शस्ततः फलेच्छा ततः साध्यानुमितिधर्मिकेष्टसाधनत्वाविषयकानुमित्यात्मकसिद्ध्यात्मकपरामर्शस्ततः साध्यानुमित्यन्तरं जायतामितीच्छा ततोऽनुमित्यन्तर तत्रानुमित्साकालेऽनुमित्यापत्तिर्दुर्वारैवेति तादृशफलेच्छादेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया तद्भिन्नाभावस्यानुमित्सा पूर्वं सत्त्वादतस्तद्वारणार्थमेव सिषाधयिषाविरहद्वयोपादानमावश्यकमिति कथं तद्वैयर्थ्यमुक्तमिति चेदत्रकेचित् उक्तापत्तिवारणाय फलेच्छादिविशिष्टतत्सिद्धित्वेन स्वातन्त्र्येण प्रतिबन्धकत्वं कल्पनीयमित्याहुः । परे तु सिद्धिपदानुपादाने स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्यैव तादृशानुमितिकभिन्नत्वाभावस्य पक्षतात्वं तथा वाच्यं तथा चोक्तस्थले प्रथमानुमितिक्षणानुयोगिकात्मसम्बन्धादेरेव तादृशानुमितिकभिन्नस्य प्रतिबन्धकत्वादनुमित्साक्षणे नानुमि-

स्यापत्तिः स्वक्षणस्येव क्षणसम्बन्धस्यापि क्षणिकतया द्वितीयानुमितिक्षणे तदव्यवहितोत्तरत्वविरहात् । न च स्वरूपसम्बन्धावच्छिन्नाभावस्य पक्षतात्वे न च जातेर्ध्वंसाप्रसिद्ध्या इत्याद्युत्तरग्रन्थासङ्गतिरिति वाच्यं तत्र जातिपदस्य नित्यविषयतापरत्वात् । अग्रिमविषयपदस्य च नाशप्रतियोगिपरत्वादित्याहुरिति ध्येयम् । वैयर्थ्येनोक्तप्रयोजनकत्वमित्यपि वदन्ति ॥

तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे उत्पत्तिपदानुक्तौ यत्रानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमितिस्ततोऽनुमित्यन्तरं ततः साध्यानुमित्यन्तरप्रसङ्गः । अथात्र स्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वनिवेशेऽप्युक्तस्थले ताद्दशानुमित्यव्यवहितोत्तरक्षणवृत्तिकानुमितिकभिन्नसिद्धेः सत्त्वाद् द्वितीयानुमित्युत्तरमनुमित्यापत्तिवारणसम्भवे कथमव्यवहितोत्तरत्वघटककालांशमधिकं निवेश्योत्पत्तिनिवेशेनेति चेन्न सिषाधयिषानाशकालोत्पत्तिकापेक्षाबुद्ध्यात्मकसिद्ध्यात्मकपरामर्शात् द्वितीयक्षणेऽनुमित्यनुत्पादापत्तेस्तत्र निरुक्ताव्यवहितोत्तरत्वस्य चतुर्थक्षणे एव पर्यवसानात् ताद्दशाव्यवहितोत्तरक्षणवृत्तिकानुमितिकभिन्नसिद्धेः सत्त्वात् । मन्मते तु ताद्दशासिद्धेः स्वाव्यवहितोत्तरद्वितीयक्षणे उत्पत्तिकानुमितिकतया न प्रतिबन्धकत्वम् । यद्वा यत्रादौ अपेक्षाबुद्ध्यात्मकपरामर्शस्ततः सिषाधयिषा ततोऽनुमितिस्तत्र ताद्दशसिद्ध्युत्पत्तिक्षणेऽपि पक्षतात्वापत्तेः । ताद्दशसिद्धेः सिषाधयिषाविरहविशिष्टस्वाव्यवहितोत्तरचतुर्थक्षणवृत्तिकानुमितिकत्वात् । स्वमते ताद्दशसिद्धेरेव सिषाधयिषाविरहविशिष्टस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात् प्रतिबन्धकत्वम् । एतेन स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वविवक्षणेऽपि प्रागुक्तस्थलेऽनुमित्यनुपपत्तिवारणसम्भवे उत्पत्तिनिवेशवैयर्थ्यमित्यपि परास्तम् । अथैवं स्वाधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति सध्वंसाधिकरणत्वरूपतृतीयक्षणमात्रपर्यवसायि अव्यवहितोत्तरत्वनिवेशेनैव प्रागुक्तदोषाणां वारणस-

म्भवे उत्पत्तिनिवेशो व्यर्थ एवेति । न च यत्र परामर्शोत्तरमपेक्षाबुद्ध्यात्मकानुमितिस्तत्र तदुत्तरमनुमित्यापत्तिस्तादृशानुमितेर्निरुक्ताव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वादिति वाच्यम् तादृशक्षणवृत्तिस्वेतरानुमितिकत्वस्य वक्तव्यत्वादिति चेदत्राहुः । यत्रानुमित्सानाशकाले वह्निमान् वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेति समूहालम्बनपरामर्शस्ततो वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्यनुमितिस्ततोऽनुमित्यन्तरं जायतामितीच्छा ततोऽनुमित्यन्तरं तत्र प्रथमासिद्धिक्षणे पक्षताविरहप्रसङ्गः । तादृशासिद्धेस्तृतीयक्षण एव निरुक्ताव्यवहितोत्तरत्वपर्यवसानात् तत्र च सिषाधयिषाविरहविशिष्टत्वाभावेन निरुक्तसिद्धेः सिषाधयिषाविरहविशिष्टस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वात् अतो द्वितीयक्षणसाधारणाव्यवहितोत्तरत्वमवश्यं वक्तव्यम् एवं चानुमित्युत्तरमनुमित्यापत्तिवारणायोत्पत्तिपदमावश्यकमिति ध्येयम् ॥

तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पेऽव्यवहितोत्तरक्षणे सिषाधयिषाविरहविशेषणं दत्तं तत्र सिषाधयिषां परित्यज्य इच्छानिवेशे यत्रादौ सिषाधयिषासिद्ध्यात्मकपरामर्शस्ततो घटेच्छा ततोऽनुमितिस्तत्रेच्छाविरहविशिष्टतादृशासिद्ध्यव्यवहितोत्तरक्षणाप्रसिद्ध्या स्वपदेन तादृशासिद्धेर्धर्तुमशक्यतया सिषाधयिषाविरहविशिष्टप्रतिबन्धकीभूततादृशासिद्धिसत्त्वेन पक्षताविरहादनुमितिर्न स्यादिति भावः ॥

सिषाधयिषाविरहविशिष्टसिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः कारणमिति शिरोमणिः । अत्र प्रत्यक्षमानमेव निवेशयितुं युक्तम् न त्वनुमितिभिन्नसिद्धिजनकमानमात्रं समानविषये शाब्दबोधसामग्रीसम्भवेऽप्यनुमितेरेवोत्पादादत एव एकपदार्थस्यापरपदार्थसंसर्गव्याप्यवत्त्वस्य योग्यतात्वे संसर्गस्यानुमितिरेव स्यान्न शाब्दधीरिति योग्यताग्रन्थे मणिकृतोक्तमिति जगदीशः । न चात्र वह्न्यादिसंसर्गव्याप्यवत्ताज्ञानजन्यसंसर्गानुमितेः समानविषयकत्वाभावाद्दृष्टान्तासम्भव इति वाच्यम् संसर्गव्याप्यवत्त्वज्ञानात् संसर्गिणोऽनुमितिरिति प्राचां मताभिप्रायेणोक्तत्वात् । न च संसर्गस्यानुमितिरि-

त्यनेन संसर्गविधेयकानुमितिरेव प्रतीयते न तु संसर्गिनोऽनुमितिरिति वाच्यम् संसर्गस्यानुमितावित्यत्र तृतीयार्थे षष्ठीकरणात् संसर्गानुमितिरित्यत्रैव तात्पर्यात् मूलसंसर्गपदस्य संसर्गिपरत्वादिति ध्येयम् ॥

साधकमानं हि सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा इति शिरोमणिः। तदुपहितमिति तया सिद्ध्या उपहितं विशिष्टं पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिविशिष्टं सत् तादृशसिद्धिजनकमिति यावदिति जगदीशः। अथात्र ।सिद्धिविशिष्टं सत्तादृशसिद्धिजनकमित्यस्यैव सम्यक्त्वे पक्षतावच्छेदकसामानाधिकरण्येनेत्यस्य वैयर्थ्यमिति चेन्न वक्ष्यमाणयुक्त्याऽशाब्दज्ञानं जायतामितीच्छायाः साधकमानेऽनुत्तेजकतया यादृशस्थलविशेषे अवच्छेदावच्छेदेन सिद्धिकालीनप्रत्यक्षजनकीभूतयत्किञ्चित्कारणसत्त्वदशायां सामानाधिकरण्येन प्रत्यक्षात्मकसिद्धिकालीनतत्कारणसमुदायसत्त्वदशायां सामानाधिकरण्येन शाब्दसिद्धिकालीनयत्किञ्चित्कारणसत्त्वदशायामेव परामर्शसम्बलनं तत्र यदा अवच्छेदावच्छेदेन प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शस्ततस्तद्व्यक्तिभिन्नमशाब्दज्ञानं जायतामितीच्छा तत्र चक्षुःसंयोगादिसत्त्वेऽनुमित्यनुपपत्तेः । तादृशेच्छायाः सिद्धावुत्तेजकत्वेऽपि साधकमानेऽनुत्तेजकत्वात् सामानाधिकरण्येनेत्युक्तौ तादृशसंयोगादिरूपसाधकमानं न तादृशसामानाधिकरण्येन सिद्धिविशिष्टमतो नानुपपत्तिरिति ध्येयम् । तादृशसिद्धिजनकमितिपदात् यादृशसिद्ध्युपहितत्वं तादृशसिद्धिजनकमित्यर्थो लभ्यते तथा च एतादृशसिद्धिजनकत्वानिवेशे उक्तस्थल एव यदा सामानाधिकरण्येन शाब्दसिद्ध्यात्मकपरामर्शानन्तरम् अशाब्दज्ञानं जायतामितीच्छा तत्र चक्षुःसंयोगादिरूपयत्किञ्चित्कारणसत्त्वदशायामनुमित्यनुपपत्तिः सिद्धिविशिष्टप्रत्यक्षमानसत्त्वात् तदुक्तौ च तादृशसंयोगादिरूपप्रत्यक्षमानस्य प्रत्यक्षात्मकसिद्ध्युपहितत्वाभावान्नानुपपत्तिरिति विभावनीयम् ॥

न द्वितीयः सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तेरनुमानातिरिक्तेत्यस्य वैयर्थ्याच्चेति शिरोमणिः । ननु सिद्ध्यनुपधानदशायां सिद्धिजनकस्य प्रत्यक्षसामग्र्यादेः

पृथगेवानुमितिविरोधित्वं वाच्यम् स्वजन्यैकसिद्ध्युपहित-प्रत्यक्षसामग्र्याः सिद्ध्यन्तरजननदशायामनुमितिवारणार्थमेव पक्षतायां निरुक्तसाधकमानस्य प्रवेश्यत्वादत आह अनुमानातिरिक्तेत्यस्य वैयर्थ्याच्चेति। साधकमानस्य परामर्शादेरनुमितेः पूर्वं तद्विशिष्टत्वाभावादेव विरोधित्वासम्भवादिति भाव इत्यनेनानुमानातिरिक्तत्वस्य वैयर्थ्यं जगदीशेनोक्तम्। अथात्र सिद्ध्यनुपहितप्रत्यक्षसामग्र्याः पृथक् प्रतिबन्धकत्वध्रौव्ये लाघवेन प्रत्यक्षसामग्रीत्वेनैव प्रतिबन्धकत्वस्य वक्तुमुचितत्वेन पक्षतायामनुमानातिरिक्तसाधकमानान्तभागस्य एव वैयर्थ्यसम्भवात् साधकमानांशेऽनुमानातिरिक्तत्वविशेषणमात्रस्य वैयर्थ्यदानमनुचितमिति चेन्न प्रागुक्तस्थल एव सिद्ध्यनुपहितप्रत्यक्षसामग्रीदशायां परामर्शाभावादेवानुमित्यनुत्पादसम्भवेन प्रत्यक्षसामग्र्याः पृथक् प्रतिबन्धकत्वाकल्पनात् तत्र प्रत्यक्षकालीनतत्सामग्रीदशायां परामर्शसत्त्वेऽनुमितिवारणार्थमेव पक्षतायां तन्निवेशस्यावश्यकत्वात्। न चात्र सिद्ध्यभावमात्रस्य पक्षतात्वेनैवोक्तदोषवारणसम्भवे कृतमन्यतराभावस्य पक्षतात्वनिर्वचनेनेति वाच्यं प्रत्यक्षसामग्र्यसत्त्वकालीनप्रत्यक्षदशायां तद्व्यक्तिभिन्नमशाब्दज्ञानं जायतामितीच्छा तत्रानुमित्युपपत्तये तादृशेच्छाया उत्तेजकत्वस्यावश्यं वक्तव्यतया तथाविधेच्छाबलात् प्रत्यक्षविशिष्टतत्सामग्र्यनन्तरमनुमितेर्वारणार्थमेव साधकमानान्तभागस्य सार्थक्यात्। न च तत्र तादृशासिद्ध्युपहितचक्षुःसंयोगादिसत्त्वे आलोकाद्यसत्त्वे तादृशेच्छाबलात् अनुमित्युत्पत्त्या साधकमानेऽपि तादृशेच्छाया उत्तेजकत्वस्यावश्यकतया पक्षतायां साधकमानान्तभागस्य निवेशोऽप्युक्तापत्तिवारणसम्भव इति वाच्यं यत्र प्रत्यक्षत्वाद्युपहितचक्षुःसंयोगादिसत्त्वे तत्कारणसमुदायसत्त्वे एव तादृशेच्छा न तु इतरकारणाद्यभावविशिष्टचक्षुःसंयोगादिरूपयत्किञ्चित्कारणसत्त्वे तत्र तादृशेच्छाविरहस्य प्रत्यक्षोपहितचक्षुःसंयोगादिरूपसाधकमाने विशेषणत्वानुपगमात् तादृशविषयविशेषीयपक्षतायामेव तथाविधसाधकमानान्तभागस्य सार्थक्यादिति ध्येयम्। अथात्र यत्रादौ सामानाधिकरण्येन बाधः ततः सामानाधिकरण्येनावच्छेदावच्छेदेन च

समूहालम्बनपरामर्शस्ततः सामानाधिकरण्येनानुमितिस्ततोऽवच्छेदावच्छेदेनानुमितिर्न स्यात् । निरुक्तसिद्ध्युपहितसाधकमानस्य सत्त्वादतस्तदुपपत्त्यर्थमेवानुमानातिरिक्तत्वविशेषणसार्थक्यसम्भवे कथं तद्वैयर्थ्यमुक्तमिति । न चानुमितेः सामानाधिकरण्येनावच्छेदावच्छेदभेदेन कार्यकारणभावस्य द्विविधतया सामानाधिकरण्येनानुमितिकारणतावच्छेदककोटौ एवानुमानातिरिक्तत्वस्य वैयर्थ्यमुक्तं न त्ववच्छेदावच्छेदेनानुमितेः कारणतावच्छेदककोटाविति वाच्यम् एवमपि यत्र वह्निव्याप्यधूमवान् पर्वतो भाविज्ञानमप्रमैतादृशज्ञानानन्तरं सामानाधिकरण्येनानुमितिस्तदुत्तरं सामानाधिकरण्येनानुमित्यर्थमेव सार्थक्यादिति चेदत्र केचित् । यादृशस्थलविशेषे उक्तरीत्या अप्रामाण्यज्ञानास्कन्दितासिद्ध्युत्तरं कदाप्यनुमितिर्न जाता तादृशस्थलीयपक्षतायामेव वैयर्थ्यस्योक्तत्वादित्याहुः ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
जागदीशीपक्षताक्रोडपत्रं समाप्तम् ।



## पक्षताजागदीशीक्रोडपत्रेषु प्रकारान्तरम् ।

दीधितौ सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरेत्यादिः। अथ इच्छाविरहवैशिष्ट्यनिवेशेनैव सिषाधयिषासिद्धिपरामर्शस्थले ऽनुमित्युत्पत्तिसम्भवे स्वक्षणे सिषाधयिषाविरहवैशिष्ट्यनिवेशनं व्यर्थमिति न च यत्रादौ सिषाधयिषा ततो घटेच्छासिद्ध्यात्मकपरामर्शानुमितयः तत्र पक्षतासम्पत्तये तन्निवेश इति वाच्यम् विशेष्यदले सिषाधयिषाया अनुगतरूपेण निवेशाशक्यत्वेन यद्यदिच्छासत्त्वे इत्यादिरीत्या निवेश्यतया घटेच्छाया अप्युत्तेजकतया विशेष्यदलादेव तदनुपपत्तिवारणादिति चेन्न यत्रादौ घटेच्छा ततः सिद्ध्यात्मकपरामर्शः ततः सिद्ध्यंशेऽप्रामाण्यग्रहस्ततश्चानुमितिर्भवति तत्राप्रामाण्यग्रहक्षणेऽनुमित्युत्पादवारणाय तादृशविशेषणस्यावश्यकत्वात् ॥

अथ सिषाधयिषाया अननुगतत्वात् तेषां विरहोऽत्र केनरूपेण निवेशनीयः यदि च यद्यदिच्छासत्त्वे सिद्धिसत्त्वेऽनुमितिरित्यादिरीत्या निवेश्यते तदा सिषाधयिषासिद्धिपरामर्शानुमितिस्थले पक्षताभङ्गप्रसङ्गः न च यादृशयादृशेच्छासत्त्वे सिद्धिसत्त्वेऽनुमितिरिति निवेश्यते तदा सिषाधयिषासिद्धिपरामर्शानुमितिस्थले पक्षताभङ्गप्रसङ्गः न च यादृशयादृशेच्छासत्त्वे तादृशतादृशेच्छात्वावच्छिन्नाभावत्वेन तन्निवेशः कार्यः तथा च यत्र क्रमेण वह्न्यनुमितीच्छासिद्ध्यात्मकपरामर्शानुमितयस्तत्रोक्तरूपावच्छिन्नस्योत्तेजकत्वेन सिषाधयिषासिद्धिपरामर्शानुमितिस्थलीयेच्छाया अपि तादृशरूपाक्रान्ततया उत्तेजकत्वमक्षतमेवेति वाच्यं अनुगतरूपेण उत्तेजकत्वानुसरणे सिषाधयिषाघटेच्छासिद्ध्यात्मकपरामर्शानुमितिस्थले घटेच्छाया अपि तथात्वेन घटेच्छासिद्ध्यात्मकपरामर्शाप्रामाण्यग्रहानुमितिस्थलेऽप्रामाण्यग्रहोत्पत्तिक्षणेऽनुमित्यापत्तेर्वारणादिति चेन्न पर्वतधर्मिकवह्न्यनुमितित्वप्रकारकेच्छात्वाशाब्दज्ञानत्वप्रकारकेच्छात्वानुमितित्वप्रकारकेच्छात्वादीनां प्रत्येकधर्मावच्छिन्नाभावकूटत्वेनैव निवेश्यत्वात् यत्र वह्न्यनुमि-

तिर्जायतामिति इच्छा ततः पर्वतमात्रे सिद्ध्यात्मकः पर्वते महानसे च धूमादिपरामर्शस्ततो महानसे वन्ह्यनुमितिः प्राग्जातसिद्ध्यंशेऽप्रामाण्यज्ञानम् ततः पर्वते वह्न्यनुमितिस्तत्राप्रामाण्यग्रहोत्पत्तिकाले पर्वते वह्न्यनुमितेर्वारणाय तत्तत्क्षणादेः प्रतिबन्धकत्वमनन्यगतिकतया स्वीकार्यमिति ध्येयम् ॥

सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरत्वं च सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तादृशस्वसमयध्वंसाधिकरणत्वमिति जगदीशः । अथाव्यवहितोत्तरत्वप्रतियोगिकोटौ सिषाधयिषाविरहविशिष्टार्थकतादृशपदं व्यर्थमिति चेन्न तादृशापदाप्रवेशे यत्र सिषाधयिषानन्तरं सिद्ध्यात्मकपरामर्शस्तदनन्तरं चाप्रामाण्यज्ञानास्कन्दितानुमितिस्तदनन्तरमनुमित्यापत्तिः परामर्शात्मकसिद्धेस्तादृशासिषाधयिषाविरहाविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया अनुमित्यात्मकासिद्धेस्तदन्यत्वेपि तस्या अप्रामाण्यज्ञानास्कान्दितत्वात् अप्रामाण्यज्ञानानास्कन्दिताया एव तस्याः प्रतिबन्धकत्वात् न चाप्रामाण्यज्ञानस्य तत्तद्व्यक्तित्वेनैवोत्तेजकतया एतदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वास्वीकारेऽनुमित्यात्मकसिद्धेरेव विरोधितया न तदुत्तरानुमित्यापत्तिरिति वाच्यम् तदुत्तरपरामर्शोत्पत्तौ तदव्यवहितोत्तरक्षणेऽनुमित्यर्थं तादृशाप्रामाण्यज्ञानस्याप्युत्तेजकताया आवश्यकत्वात् यदि चोत्तरत्वप्रतियोगिकोटौ सिषाधयिषाविरहविशेषणसत्त्वेपि यत्र सिषाधयिषातृतीयक्षणे सिद्ध्यात्मकपरामर्शस्तदनन्तरमप्रामाण्यज्ञानास्कन्दितानुमितिस्तदनन्तरमनुमित्यापत्तिः सिद्ध्यात्मकपरामर्शस्य तादृशक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया अप्रामाण्यज्ञानानास्कान्दिततदन्यसिद्धेरभावस्यानुमितिक्षणेपि सत्त्वात् यदि चाप्रामाण्यज्ञानव्यक्तिरनुत्तेजिकैव तादृशानुमित्युत्तरपरामर्शोत्पादेपि क्षणैकविलम्बेनैवानुमितिस्वीकारादित्युच्यते तदा मन्मतेपि तुल्ययुक्त्या प्रकृतस्थलेपि तादृशाप्रामाण्यज्ञानमनुत्तेजकमेव तदुत्तरं परामर्शान्तरे सति क्षणैकविलम्बेनैवानुमितिस्वीकारसम्भवादित्युत्तरत्वप्रतियोगिकोटौ तद्विशेषणं निष्प्रयोजनमेवेत्यादिकं विभाव्यते तदा यत्र सिषाधयिषानन्तरं सिद्ध्यात्मकसाध्यतद्व्याप्यपरामर्शस्तदनन्तरं परास-

र्शात्मकानुमितिधर्मिकमिदं ज्ञानं वह्न्यभाववति वह्निप्रकारकमित्याकारकाप्रामाण्यावगाहिसमूहालम्बनानुमितिस्तत्र तदुत्तरमनुमित्यापत्तिस्तादृशानुमितितृतीयक्षणेऽनुमितेरानुभविकतया तादृशाप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वस्यावश्यकत्वात् तस्यानुत्तेजकत्वं स्वीकृत्य क्षणैकविलम्बेनाप्यनुमितेरुत्पादयितुमशक्यत्वात् तत्पूर्वक्षणे परामर्शाभावात् अतस्तादृशानुमित्युत्तरमनुमित्यापत्तिवारणायोत्तरत्वप्रतियोगिकोटौ तद्विशेषणमावश्यकमिति ॥

एतेन प्रागुक्तस्थले तादृशानुमित्युत्तरोत्पन्नपरामर्शविशिष्टतदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वेनैवोपपत्तौ तद्विशेषणं व्यर्थमिति निरस्तं न च यत्र सिषाधयिषा तदुत्तरक्षणे सिद्ध्यात्मकसाध्यतद्व्याप्यपरामर्शस्तदनन्तरं परामर्शात्मकानुमितिधर्मिकमिदं ज्ञानं वह्न्यभाववति वह्निप्रकारकमित्याकारकाप्रामाण्यावगाहिसमूहालम्बनानुमितिस्तत्र तन्निवेशेपि तदुत्तरक्षणेऽनुमित्यापत्तिर्दुर्वारैवेति वाच्यम् तत्र गत्यन्तरविरहेण तत्तदनुमितिक्षणादेः प्रतिबन्धकत्वस्य प्रथमोत्पन्नतत्तत्सिद्धिनाशविशिष्टतदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वस्य वा वक्तव्यत्वात् न च प्रागुक्तस्थलेपि तत्तत्क्षणस्य प्रतिबन्धकतयैवोपपत्तौ तादृशपदं व्यर्थमिति वाच्यम् तादृशतत्तत्क्षणस्य प्रतिबन्धकत्वकल्पनामपेक्ष्य लाघवात् स्वक्षणे सिषाधयिषाविरहविशेषणं प्रक्षिप्य तत्रानुमित्यापत्तिवारणस्यैवोचितत्वादिति केचित् समादधिरे तच्चिन्त्यम् । वस्तुतस्तु सिषाधयिषाविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्धिव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटमेव निवेश्यम् । तथा च तादृशपदानुक्तौ यत्र क्रमेण सिषाधयिषासिद्ध्यात्मकपरामर्शानुमितयस्तत्र तत्सिद्धिव्यक्तेरपि तादृशानुमितिकतया तद्भेदस्यापि तादृशकूटान्तर्गतत्वेन तन्निवेशे गौरवमित्यतस्तादृशपदमभिहितमिति ध्येयम् ॥

अत्र क्षणपदं विहाय स्वसमयध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति इत्युक्तौ यत्र क्रमेण सिषाधयिषापरामर्शाऽनुमितयस्तत्र सिद्ध्युत्पत्तिकालपर्यन्तस्थाय्यनुमित्सापूर्वकालोत्पन्नस्थूलकालोपाधिमादाय परामर्शक्षणेपि पक्षताविरहप्रसङ्गः । सिद्ध्यधिकरणतादृशकालोपाधेरनुमित्सापूर्वदण्डाद्यवच्छेदेन सिषाधयिषाविरहविशिष्टतयानुमित्साविरहविशिष्टनि-

रुक्तसमयाव्यवहितोत्तरत्वस्य परामर्शक्षण एव पर्यवसानात् तदानीं चानुमित्यनुत्पत्त्या तत्सिद्धेरपि निरुक्तानुमितिकभिन्नतया प्रतिबन्धकत्वादतः प्रथमक्षणपदमिति जगदीशः । अथात्र तादृशकालस्यापि सिद्धिक्षणावच्छेदेन क्षणत्ववत्तया तद्दोषतादवस्थ्यमिति चेन्न । यदुपाध्यवच्छेदेन स्वाधिकरणत्वं तदुपाध्यवच्छेदेन सिषाधयिषाविरहवत्त्वस्य विवक्षितत्वात् । तथा च सिषाधयिषाविरहाधिकरणतावच्छेदकीभूतोपाध्यवच्छिन्नस्वाधिकरणक्षणत्वाधिकरणध्वंसाधिकरणइत्यादिक्रमेणाव्यवहितोत्तरत्वं वाच्यमितिपर्यवसितार्थे जगदीशस्य तात्पर्यम् । न च तथापि सिषाधयिषाविरहाधिकरणतावच्छेदकीभूतस्वाधिकरणोपाधिध्वसाधिकरणेत्यादिक्रमेणाव्यवहितोत्तरत्वसम्भवे कृतं तादृशागुरुतरविशेषणघटिताव्यवहितोतरत्वनिर्वचनेनेति वाच्यम् । तत्रैव सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायिकालोपाधेरपि यत्रादौ सिषाधयिषा ततः सुखोत्पत्तिः ततस्तादृशस्थूलकालोत्पत्तिस्तत्र सुखनिष्ठसिषाधयिषाविरहाधिकरणतावच्छेदकत्वेन सिद्ध्यधिकरणतया च तद्दोषतादवस्थ्यात् न चैवमपि उक्तस्थले एव सिद्ध्युत्तरप्रहरादिविलम्बेन सुखोत्पत्तिस्ततः सिषाधयिषा तत्र सिद्ध्युत्पत्तिक्षणोत्पन्नतादृशसुखोत्पत्तिपर्यन्तस्थायिस्थूलकालोपाधेस्तादृशसुखनिष्ठसिषाधयिषाविरहाधिकरणतावच्छेदकतादृशोपाध्यवच्छिन्नस्वाधिकरणक्षणत्वस्य सिद्ध्युत्पत्तिक्षणेऽपि सत्त्वादुक्तदोषो दुर्वार इति वाच्य स्वसामानाधिकरण्यस्वावच्छेदकोपाध्यवच्छिन्नत्वोभयसम्बन्धेन सिषाधयिषाविरहाधिकरणताविशिष्टस्वाधिकरणतावत्त्वस्य विवक्षितत्वादिति ध्येयम् ॥

अत्र निरुक्तोभयसम्बन्धेन सिषाधयिषाविरहाधिकरणताविशिष्टस्वाधिकरणताविवक्षणेनैव सामञ्जस्ये स्वाधिकरणक्षणत्वपर्यन्तनिवेशो व्यर्थ इति चिन्त्यम् ॥

यत्र क्रमेणानुमित्साासिद्धिपरामर्शानुमितयस्तत्र सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायिनमनुमित्सापूर्वकालोत्पन्नस्थूलकालोपाधिमादाय परामर्शक्षणे पक्षताभङ्गप्रसङ्ग इति जगदीशः । न चात्र स्वकाले सिषाधयिषाविरहप्रतियोग्यनधिकरणत्वनिवेशेनैव उक्तस्थले पक्षतासम्भवे स्ववृत्तियावद्ध्वंसवत्त्वरूपक्षणत्वप्रवेशो गौरव-

मिति वाच्यम् भेदस्याव्याप्यवृत्तितामते प्रतियोग्यनधिकरणत्वस्यापि तत्र सत्त्वात् न च नोपादेयमेव तत् किन्तु निरवच्छिन्नविशेषणतासम्बन्धेन सिषाधयिषाविरहवैशिष्ट्यवत्त्व वक्तव्यं किं क्षणत्वानिवेशेनेति वाच्यं । क्षणत्वं न स्ववृत्तियावद्ध्वंसवत्त्व किंतु क्षणिकान्त्यशब्दानामतिरिक्तपदार्थस्य वा क्षणत्वमित्यस्याग्रे ग्रन्थकृता निष्कर्षणीयतया तत्परतयैव तद्ग्रन्थानुसरणम् । वस्तुतस्तु स्ववृत्तियावद्ध्वंसवत्त्वस्य क्षणत्वात् स्थूलकालस्य सिषाधयिषाधिकरणस्य सिद्धिद्वितीयक्षणस्थायिनोऽपि क्षणत्वेन तत्र सिषाधयिषाविरहस्य निरवच्छिन्नविशेषणतासम्बन्धेनाधिकरणस्याप्रसिद्ध्या तन्निवेश एवायुक्तः तन्मते क्षणिकपदार्थाभावेन तथाविधस्वकालाप्रसिद्धेः एतेन पूर्वकल्पे क्षणिकान्त्यशब्दस्य क्षणत्वमतस्वीकारे स्वाश्रयत्वस्वप्रतियोग्याश्रयत्वोभयसम्बन्धेन ध्वंसवदन्यसमयत्वरूपक्षणत्वस्य ताद्रूप्येणानुगतस्य निवेशनीयतया गौरवपरिहार इति परास्तम् । क्षणत्वस्यापि अतिरिक्तस्य निष्कर्षितार्थत्वे तदपि सम्यक् ।

अथोक्तस्थले परामर्शक्षणे विशेषणदलसत्त्वेऽपि तादृशास्वक्षणध्वंसाधिकरणत्वरूपविशेष्यदलासत्त्वात् कथं स्वसमयाव्यवहितोत्तरत्वस्य परामर्शक्षण एव पर्यवसानादिति लेखनसंगतिः । न च विशेष्यदले क्षणत्वप्रवेशे किं मानमिति वाच्यम् । सिषाधयिषासिद्ध्यात्मकपरामर्शाप्रामाण्यज्ञानास्कन्दितानुमितयो यत्र क्रमेणोत्पन्नास्ततस्तदनन्तरमनुमित्यापत्तिः । तत्रत्यानुमिति व्यक्तेरप्रामाण्यज्ञानास्कन्दिततया अप्रतिबन्धकत्वात् पूर्वोत्पन्नसिद्धिस्तु सिषाधयिषापूर्वोत्पन्नस्वोत्पन्नक्षणपर्यन्तस्थायिस्थूलकालध्वंसाधिकरणीभूततादृशानधिकरणत्वविशिष्टक्षणोत्पत्तिकानुमितिकतयाप्रतिबन्धकत्वाच्च क्षणत्वनिवेशे तु तादृशस्थूलकालस्य क्षणत्वाभावादेव तदापत्तिवारणसम्भवात् । उक्तानुमितितृतीयक्षणेऽनुमित्यर्थं अप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वावश्यकत्वादिति चेन्न विशेष्यदलस्य यथाश्रुताभिप्रायेणैतद्ग्रन्थस्य सङ्गतौ प्रथमक्षणपदस्य तत्र व्यावृत्तेरक्षतेश्च । केचित्तु यत्रानुमित्सातृतीयक्षणे सिद्ध्यात्मकपरामर्शस्ततः स्वांशेऽप्रामाण्यज्ञानात्मिकानुमितिस्तत्र तदनन्तरमनुमित्यापत्तिः प्रथमसिद्धेः तादृ-

ज्ञानुमितिकतया अनुमित्यात्मकसिद्धेरप्रामाण्यज्ञानास्कन्दिततया ऽविरोधित्वात् अतो ऽप्रामाण्यज्ञानानां तत्तत्क्षणवृत्तित्वविशिष्टत्वेनाभावो भेदानुयोगिसिद्धौ निवेश्यः। तथा च प्रागुक्तस्थले दोषाभावेन विशेष्यदले क्षणत्वनिवेश एव नास्तीत्याहुस्तच्चिन्त्यं सत्यन्तमात्रोक्तौ सिद्धिमात्रस्यैव प्रायशः स्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणीभूतस्वपूर्वकालोत्पत्तिकानुमितिकतया तद्भिन्नसिद्ध्यप्रसिद्धेरिति। न चात्र प्रायश इत्ययुक्तमिति वाच्यम् सिषाधयिषापुटितसिद्धेरेव सिषाधयिषाविरहविशिष्टस्वक्षणाप्रसिद्ध्या स्वपदेनोपादातुमशक्यतया तदन्यत्वमस्तीत्यभिप्रायकत्वात् यत्पुरुषीययदङ्कुरविशेषसिद्धेः पूर्वं तदनुमितिर्न जाता तदीयतदङ्कुरविशेषसिद्धेस्तदन्यत्वसम्भव इत्यभिप्रायकं तदिति केचित्। न च तथापि पुटितसिद्धौ तदन्यासिद्धित्वसत्त्वात् तदप्रसिद्ध्यभिधानमयुक्तमेवेति वाच्यम् तदन्यसिद्धेरप्रसिद्धेरित्यत्र सिद्धिपदेन पक्षताघटकसिद्धेरेवोक्तत्वात् नानुपपत्तिरितिध्येयम्॥

यत्र क्रमेण केवलासिद्धिपरामर्शौ तत्राप्यनुमित्यापत्तिरित्यादिना द्वितीयक्षणपदस्य व्यावृत्तिरुक्ता तत्र सिषाधयिषाव्यवच्छेदककेवलपदमस्तु तथापि सिद्धिपरामर्शयोः क्रमिकत्वाभिधानमसङ्गतं सिद्ध्यात्मकपरामर्शादपि तदापत्तिसम्भवादिति चेन्न तद्व्यक्तिं प्रति तद्व्यक्तेर्हेतुत्वामितिविशेषकार्यकारणभावमादाय सिद्ध्यात्मकतादृशपरामर्शस्य हेतुत्वास्वीकारेणैव तत्रापत्तिवारणसम्भवात् व्यावृत्त्यसङ्गतिरतस्तयोः क्रमिकत्वमुक्तम् इदानीन्तनसिद्धिनाशदशायां तृतीयक्षणेऽनुमित्यर्थं तत्परामर्शव्यक्तेस्तद्धेतुत्वाश्यकत्वात् इति ध्येयम्॥

उत्पत्तिपदानुक्तौ एकानुमित्युत्पत्तेरनन्तरमनुमित्यन्तरापत्तिः पूर्वानुमितेः स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वेन तदन्यासिद्धेरभावादतस्तदुपात्तम्। न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्वमेव निवेश्यमुत्पत्तेः स्वेतरत्वापेक्षया गुरुत्वादिति वाच्यं यत्र साध्यानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकैकानुमितिस्ततोऽनुमित्यन्तरं तत्र साध्यानुमित्यन्तरप्रसङ्गात् इति जगदीशः। अथात्रानुमितौ स्वभिन्नत्वमनिवेश्य स्ववृत्तिप्रागभावप्रतियोगित्वस्य स्वक्षणा-

व्यवहितोत्तरक्षणवृत्त्यनुमितेर्विशेषणत्वेनैव तद्दोषवारणसम्भवात् कृतमुत्पत्तिनिवेशेनेति चेन्न प्रागभावत्वध्वंसत्वयोरखण्डोपाधित्वानुपगमे प्रागभावत्वं ध्वंसप्रतियोग्यभावत्वं ध्वंसत्वं च जन्यत्वे सत्यभावत्वं जन्यत्वं च नियमघटितमित्युत्पत्त्यपेक्षया महागौरवापत्तेरिति वदन्ति। केचित्तु यत्रानुमितिर्जायतामितीच्छा ततः साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवांश्चेति परामर्शस्ततः साध्यांशेऽप्रामाण्यज्ञानात्मकतद्व्याप्यानुमितिस्तत्र तदुत्तरमनुमित्यापत्तिः पूर्वसिद्धेः स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्ववृत्तिप्रागभावप्रतियोग्यनुमितिकतयाऽनुमित्यात्मकसिद्धेरप्रामाण्यज्ञानास्कन्दितत्वेनाप्रतिबन्धकत्वादतस्तदुपात्त स्वमते पूर्वसिद्धिव्यक्तेरेव सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकान्यत्वात् प्रतिबन्धकत्वमिति। एतेन स्वक्षणाव्यवहितोत्तरक्षणविशिष्टानुमितिकत्वमेव निवेश्यतां किमुत्पत्तिनिवेशेनेति वैशिष्ट्यं स्ववृत्तित्वस्ववृत्तिध्वंसप्रतियोगित्वोभयसम्बन्धेन सिद्ध्यात्मकपरामर्शादनुमितिवारणाय स्ववृत्तित्वनिवेशः अनुमित्युत्तरानुमितिवारणाय स्ववृत्तिध्वंसेत्यादीति चेन्न सम्बन्धविधयाऽस्यैवोत्पत्तिघटितत्वेन वैयर्थ्यशङ्कानवकाशात् यो यत्कालवृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यस्य दीधितिकृता वक्तव्यत्वादिति ध्येयम्॥

न च तथापि स्वेतरपदेन स्वाधिकरणावच्छेदेन स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वविवक्षणान्न दोषः कोपीति इति वाच्यं यत्रानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमित्यनन्तरं पुनरपेक्षाबुद्ध्यात्मकसाध्यानुमितिस्तत्र तदुत्तरं साध्यानुमित्यन्तरप्रसङ्गात् अपेक्षाबुद्ध्यात्मकानुमितिद्वयस्यापि निरुक्तस्वेतरानुमितिकत्वेनाप्रतिबन्धकत्वादिति ध्येयम्॥

अथ तृतीयक्षणव्यवधायकद्वितीयक्षण एवाव्यवहितोत्तरत्वपर्यवसानात् यत्राविरलक्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयः सिषाधयिषाविरहो विशेषणमस्तु सिद्धेः प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेन्न यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयस्तत्र पक्षतासम्पत्त्यर्थमिति शिरोमणिः। ननु यत्र सिषाधयिषासिद्ध्यात्म-

कपरामर्शानुमितयस्तत्र द्वितीयसिषाधयिषाविरहव्यावृत्तिसम्भवात् कथं यत्राविरलक्रमेण सिद्धीत्यादिस्थलानुधावनमिति चेन्न अव्यवहितत्वप्रतियोगिस्वक्षणे एव तादृशविशेषणमनुपादेयम् न तूत्तरत्वप्रतियोगिस्वक्षणे इत्यभिप्रायकतया सिषाधयिषा इत्यादिक्रमस्थले अनुमित्यनुपपत्त्यसम्भवात् दीधितिकारस्य सिद्धिसिषाधयिषास्थलानुधावनात् । वस्तुतस्तु यत्रोक्तस्थले साध्यानुमितिद्वयं जायतामितीच्छा तदनन्तरसिद्ध्यात्मकपरामर्शात् तत्साध्यानुमितिद्वयोत्पादस्यावश्यकतया तादृशसिद्धेर्निरुक्तभेदानुयोगित्वेन तत्स्थले तादृशविशेषणसत्त्वेऽपि पक्षतानपायात् सर्वत्र सिषाधयिषेत्यादिक्रमस्थलेऽनुपपत्त्यसम्भव. सिद्धिसिषाधयिषेत्यादिक्रमस्थले तु सर्वत्रैवानुपपत्तिः सम्भवतीत्यभिप्रायेण यत्राविरलक्रमेण सिद्धिसिषाधयिषा इत्यादि क्रमस्थलानुधावनमिति ध्येयम् ॥

ग्रन्थलाघवार्थमन्तिमस्य सिषाधयिषाविरहपदस्य व्यावृत्तिमभिदधान एव प्रथमस्य तस्य व्यावृत्तिं पृच्छति अथेति इति जगदीशः। तस्यायमाशयः। आदौ सिषाधयिषाविरहपदस्य व्यावृत्तिं दत्वा द्वितीयस्य व्यावृत्तिदाने अव्यवहितोत्तरत्वप्रतियोगिस्वक्षणे सिषाधयिषाविरहस्य निवेशिततया द्वितीयसिषाधयिषाविरहस्य व्यावृत्तिर्यत्रादौ सिद्ध्यात्मकपरामर्शस्ततः सिषाधयिषाऽनुमितिस्तत्रैव यत्रादौ सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शस्तत्रापि सम्भवतीति द्वितीयसिषाधयिषाविरहपदस्य व्यावृत्तिदानार्थमेतत्स्थलानुधावनस्यौचित्येन गौरवं प्रथमतः प्रथमसिषाधयिषाविरहपदस्य व्यावृत्तिदाने तु अव्यवहितोत्तरत्वप्रतियोगिस्वक्षणे तस्याप्रवेशेन यत्रादौ सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शस्ततोऽनुमितिरित्यत्र द्वितीयसिषाधयिषाविरहपदस्य व्यावृत्तिर्न सम्भवतीति एतत्स्थलाभिप्रायेण लिखनमेव ग्रन्थलाघवम् अत एवैतदभिप्रायेण दीधितिकृता यत्राविरलक्रमेण सिद्धीत्युक्तमिति ध्येयम् ॥

द्वितीयो द्वितीयसिषाधयिषाविरहपदेन प्रत्याय्यः सिषाधयिषाविरहस्यैकत्वेन द्वितीयत्वायोगादिति जगदीशः।

अथेदं न युक्तं स्वक्षणविशेषणीभूतस्य सिषाधयिषाविरहस्य कालिकसंबन्धावच्छिन्नप्रतियोगिताकत्वेन भेदानुयोगिसिद्धिविशेषणस्य समवायावच्छिन्नप्रतियोगिताकतया तयो-

मिथोभेदादि चेन्न स्वक्षणविशेषणमपि समवायावच्छिन्नप्रतियोगिताकाभाव एवेति तद्वैशिष्ट्य च स्वनिरूपितस्वाश्रयवृत्ति-अधिकरणतावच्छेदकत्वसम्बन्धेन स्वपदं सिषाधयिषाविरहपरं द्वितीयं सिद्धिपरं तथा च तस्य एकत्वेन ग्रन्थसङ्गतिः अतः सिषाधयिषा विरहस्य स्वक्षणविशेषणत्वापेक्षया स्वविशेषणत्वे गौरवदानस्यापि सङ्गतिः अन्यथा तस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकत्वे तत्रासङ्गतिर्दुर्वारैवेति स्वावच्छेदकशरीरावच्छेदेन सिषाधयिषाविरहवैशिष्ट्यस्य विवक्षितत्वात् इत्यग्रिमग्रन्थस्य तद्वैशिष्ट्यघटकाधिकरणतायां स्वावच्छेदकशरीरावच्छिन्नत्वनिवेशो तात्पर्यमिति न कोपि दोषः ।

केचित्तु ननु स्वसजातीयाव्यवहितोत्तरानुत्पत्तिकस्वसजातीयाव्यवहितोत्तरोत्पत्तिकत्वं द्वितीयपदार्थतावच्छेदक साजात्यं च स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मेण यथा द्वितीयः पुत्र इत्यादौ तच्च सिषाधयिषाविरहपदेनोपात्त इति एकत्वेन स्वक्षणविषणीभूतस्यैव सिषाधयिषाविरहस्य भेदानुयोगिसिद्धिविशेषणत्वेन इत्यर्थ इत्याहुः ।

लाघवादाह स्वध्वंसेत्यादि इति जगदीशः । अथात्रादौ सिषाधयिषा ततोऽपेक्षाबुद्ध्यात्मकसिद्धिस्ततः तृतीयक्षणे परामर्शस्ततोऽनुमितिस्तत्रानुमित्यनुपपत्तिसम्भवे गौरवाभिधानमनुचितमिति न च तादृशापेक्षाबुद्धेश्चतुर्थक्षणे द्वित्वप्रत्यक्षानुत्पादेन तृतीयक्षणस्थायित्वे मानाभावस्तदनुरोधेनैव तस्यास्तृतीयक्षणावस्थायित्वास्वीकारादिति वाच्यं धूमेनानुमिनुयामित्यादिग्रन्थव्याख्यावसरे अजातचतुर्थक्षणद्वित्वसाक्षात्कारकापेक्षाबुद्धेरपि तथात्वाभ्युपगमात् न चाव्यवहितोत्तरत्वघटकीभूतस्वक्षणे सिषाधयिषाविरहवैशिष्ट्यनिवेशान्नेयमनुपपत्तिरूपदोषः अव्यवहितोत्तरत्वस्य चतुर्थक्षणेऽपि सत्त्वादिति वाच्यं तथा सति यत्रादावनुमितिविशेषेच्छा ततः सिद्ध्यात्मकपरामर्शस्तन्नाशाधिकरणीभूततृतीयक्षणे पुनः सिद्ध्यात्मकपरामर्शस्ततोऽनुमितिस्तत्र द्वितीयपरामर्शोत्पत्तिदशायामनुमित्यापत्ते. प्रथमसिद्धेस्तादृशानुमितिकत्वेनाविरोधित्वात् न चानुमित्साविरहस्य प्रातिस्विकरूपेणैवाव्यवहितोत्तरत्वघटकस्वक्षणविशेषणतया तदनुमित्साविरहस्य स्वक्षणाविशेषणत्वान्नयेमा-

पत्तिरिति वाच्यम् यत्रादावनुमित्सापेक्षाबुद्ध्यात्मकपरामर्शस्तस्य चतुर्थक्षणे चानुमितिस्तत्र सिषाधयिषापञ्चमक्षणेऽनुमित्यनुपपत्तिवारणाय तदनुमित्साविरहस्य स्वक्षणविशेषणताया आवश्यकत्वेन तादृशसिद्धेर्निरुक्तानुमितिकतयाविरोधित्वेन तृतीयक्षणेनुमित्यापत्तेर्वज्रलेपत्वादिति चेन्न अगत्या सिद्धिद्वितीयक्षणादेस्तद्व्यक्तित्वेन तत्पक्षकतत्साध्यकानुमितिं प्रति विरोधिताया कल्पनीयत्वात् । एतेन स्वध्वंसघटिताव्यवहितोत्तरत्वकल्पे तत्रानुमित्यापत्तेरशक्यपरिहारत्वेन अनन्ततत्क्षणादेः प्रतिबन्धकत्वकल्पनानावश्यकत्वात् स्वध्वंसघटिताव्यवहितोत्तरत्वकल्पे एव महागौरवमित्यपि प्रत्युक्तम् अजातचतुर्थक्षणद्वित्वसाक्षात्कारकापेक्षाबुद्धेस्तृतीयक्षणावस्थायित्वस्य सविवादतया मतद्वयसाधारण्याय दोषान्तराभिधानाय गौरवमुक्तमित्यपि केचित् ।

सार्वभौमनिरुक्तौ तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे यद्यपि स्वध्वंसादिघटिताव्यवहितोत्तरत्वकल्पे स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नाभावस्यैव सम्यक्त्वात् सिद्धिपदं व्यर्थम् एवं च सिषाधयिषाविरहद्वयोपादानमपि व्यर्थं यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र फलेच्छादेर्निरुक्तस्वाव्यवहितोत्तरानुमितिकभिन्नतयानुमित्यसम्भवादिति जगदीशः । अथात्र यत्रादौ वह्नितद्व्याप्यवांश्च इति परामर्शस्ततः साध्यतद्व्याप्यानुमितिर्जायतामितीच्छा ततोऽनुमित्यनन्तरं तत्र यत्र च बाधबुद्ध्यनन्तरं साध्यतद्व्याप्ययोः परामर्शस्ततः फलेच्छा ततः साध्यानुमितिधर्मिकेष्टसाधनत्वविषयकानुमित्यात्मकसिद्ध्यात्मकपरामर्शस्ततः साध्यानुमित्यन्तरं जायतामितीच्छा ततोऽनुमित्यन्तरं तत्रानुमित्साकालेऽनुमित्यापत्तिर्दुर्वारैवेति तादृशफलेच्छादेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया तद्भिन्नाभावस्यानुमित्सापूर्वं सत्त्वादतस्तद्वारणार्थमेव सिषाधयिषाविरहद्वयोपादानमावश्यकमिति कथं तद्वैयर्थ्यमुक्तमिति चेदत्र केचित् । उक्तानुमितिवारणाय फलेच्छादिविशिष्टतत्सिद्धित्वेन स्वरूपेण प्रतिबन्धकत्वं कल्पनीयमित्याहुः ॥

परे तु सिद्धिपदानुपादाने स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्यैव तादृशानुमितिकभिन्नाभावस्य पक्षतात्वं वाच्यं तथा चोक्तस्थ-

ले प्रथमानुमितिक्षणानुयोगिकात्मत्वसम्बन्धादेरेव तादृशानुमितिकभिन्नस्य प्रतिबन्धकत्वादनुमित्साक्षणे नानुमित्यापत्तिः स्वक्षणस्येव सम्बन्धस्यापि क्षणिकतया द्वितीयानुमितिक्षणे तदव्यवहितोत्तरत्वविरहात् न च स्वरूपसम्बन्धावच्छिन्नाभावस्य पक्षतात्वे न च जातेर्ध्वंसाप्रसिद्ध्या इत्याद्युत्तरग्रन्थासङ्गतिरिति वाच्यं तत्र जातिपदस्य नित्यविषयतापरत्वात् अग्रिमपदस्य च नाशप्रतियोगिपरत्वादित्याहुरिति ध्येयम् । वैयर्थ्यं नोक्तप्रयोजनकमित्यपि वदन्ति ।

तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे उत्पत्तिपदानुक्तौ यत्रानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमितिस्ततोऽनुमित्यन्तरं ततः साध्यानुमित्यन्तरप्रसङ्गः । अथात्र स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वरूपस्वाव्यवहितोत्तरत्वनिवेशेप्युक्तस्थले तादृशानुमित्यव्यवहितोत्तरक्षणवृत्तिकानुमितिकभिन्नसिद्धेः सत्त्वात् द्वितीयानुमित्युत्तरमनुमित्यापत्तिवारणसम्भवे कृतमव्यवहितोत्तरत्वघटककालांशमधिकं निवेश्योत्पत्तिनिवेशेनेति चेन्न सिषाधयिषानाशकालोत्पत्तिकापेक्षाबुद्ध्यात्मकसिद्ध्यात्मकपरामर्शात् द्वितीयक्षणेऽनुमित्यनुत्पादापत्तेस्तत्र निरुक्ताव्यवहितोत्तरत्वस्य च चतुर्थक्षण एव पर्यवसानात् तादृशाव्यवहितोत्तरक्षणवृत्तिकानुमितिकभिन्नसिद्धेः सत्त्वात् मन्मते तु तादृशसिद्धेः स्वाव्यवहितोत्तरद्वितीयक्षणोत्पत्तिकानुमितिकतया न प्रतिबन्धकत्वम् । यद्वा यत्रादौ अपेक्षाबुद्ध्यात्मकसिद्ध्यात्मकपरामर्शस्ततः सिषाधयिषा ततोऽनुमितिस्तत्र सिद्ध्युत्पत्तिक्षणेपि पक्षतापत्तेः तादृशसिद्धेः सिषाधयिषाविरहविशिष्टनिरुक्तस्वाव्यवहितोत्तरचतुर्थक्षणवृत्तिकानुमितिकत्वात् स्वमते तु तादृशसिद्धेरेव सिषाधयिषाविरहविशिष्टस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात् प्रतिबन्धकत्वम् । एतेन स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वविवक्षणेपि प्रागुक्तस्थलेऽनुमित्यनुपपत्तिवारणसम्भवे उत्पत्तिनिवेशवैयर्थ्यमित्यपि परास्तम् ।

अथैवं स्वाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणत्वरूपतृतीयक्षणमात्रपर्यवसायि अव्यवहितोत्तरत्वनिवेशेनैव प्रागुक्तदोषाणां

वारणसम्भवे उत्पत्तिनिवेशो व्यर्थ एवेति न च यत्र परामर्शोत्तरमपेक्षाबुद्ध्यात्मकानुमितिस्तत्र तदुत्तरमनुमित्यापत्तिस्तादृशानुमितेर्निरुक्ताव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वादिति वाच्यम् तादृशक्षणवृत्तिस्वेतरानुमितिकत्वस्य वक्तव्यत्वादिति-चेदत्राहुः यत्रानुमितेर्नाशकाले वह्निमान् वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेतिसमूहालम्बनपरामर्शस्ततो वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्यनुमितिस्ततोऽनुमित्यन्तरं जायतामितीच्छा ततोऽनुमित्यन्तरं तत्र प्रथमक्षणे पक्षताविरहप्रसङ्गः तादृशसिद्धितृतीयक्षण एव निरुक्ताव्यवहितोत्तरत्वपर्यवसानात् तत्र च सिषाधयिषाविरहाविशिष्टत्वाभावेन निरुक्तसिद्धेः सिषाधयिषाविरहविशिष्टस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वादतो द्वितीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे ऽव्यवहितोत्तरक्षणे सिषाधयिषाविरहविशेषण दत्तं तत्र सिषाधयिषां परित्यज्य इच्छानिवेशे यत्रादौ सिषाधयिषा ततो भाविज्ञानमप्रमा बाधनिश्चयो वा ततः सिद्ध्यात्मकपरामर्शस्ततो घटेच्छा ततोऽनुमितिस्तत्रेच्छाविरहविशिष्टतादृशसिद्ध्यव्यवहितोत्तरक्षणाप्रसिद्ध्या स्वपदेन तादृशसिद्धेर्धर्तुमशक्यतया सिषाधयिषाविरहविशिष्टप्रतिबन्धकीभूततादृशसिद्धिसत्त्वेन पक्षताविरहादनुमितिर्न स्यादिति भावः।

यत्तु जागराद्यक्षणे स्मरणात्मकपरामर्शादिति। न च जागृनिद्राक्षये इत्यनुशासनात् मेध्यामनःसंयोगनाशाद्यनन्तरं स्मरणात्मकपरामर्शादित्यर्थो लभ्यते तथा च जागराभिधानमनर्थकं निद्रावस्थायामपि ज्ञानसम्भवादिति वाच्यं जागराद्यपदेन पुरीततिनाड्यवच्छेदेन मनःसंयोगनाशाव्यवहितोत्तरत्वङ्मनोयोगाव्यवहितोत्तरत्वस्य विवक्षितत्वात्। एतेन तदानीं स्मरणात्मकपरामर्शाद्यभिधानमनर्थकमित्यपास्तम् त्वङ्मनोयोगे प्रमाणविधया तदुपन्यासात् न च ज्ञानरूपोद्बोधकविरहात् कथं स्मरणीभूतमिति वाच्यम्। विशिष्टप्रत्यक्ष एव तस्य हेतुत्वात्। न च तथापि तदानीमनुमित्यापत्तिदानं दुर्घटं तादृशानुमितिकभिन्नातीन्द्रियजीवनयोनिकृतेरेव विरोधित्वादिति वाच्यम्। जीवनयोनिकृतेः सविषयकत्वे मानाभावात्।

यत्तु स्वध्वंसघटिततृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे सिद्धिपदस्य सार्थक्यं भवत्येवेति तदपि दूषयितुमुपन्यस्यति

गौरवस्य वक्ष्यमाणलक्षणे अविशिष्टत्वादिति । प्रागभावानङ्गीकारेण प्रागभावघटिताव्यवहितपूर्वत्वस्य वक्तुमशक्यत्वादिति भावः ।

कस्याश्चिन्नेति । ननु प्रथमकल्पे यत्रादौ सिषाधयिषानाशक्षणे सिद्धिस्ततः परामर्शस्ततोऽनुमित्युपपत्त्यर्थं स्वध्वंसघटिताव्यवहितोत्तरत्वं निरुच्य परिष्कारः क्रियते तथा सति यत्रादौ तत्परामर्शद्वितीयक्षणेऽनुमितिर्जायतामितीच्छा तन्नाशक्षणे सिद्ध्यात्मकपरामर्शस्तद्द्वितीयक्षणेऽनुमित्साविषयपरामर्शस्ततोऽनुमितिस्तत्र सिद्ध्यात्मकपरामर्शद्वितीयक्षणेऽनुमित्यापत्तेर्दुर्वारत्वात् तत्सिद्धेस्तादृशानुमितिकत्वेनाविरोधित्वात् प्रतिबन्धकताकल्पने चातिगौरवात् न च तथा सति प्रथमकल्पे तत्रेत्यादिनोक्तदोषस्यैव जागरूकतया दीधितिकृतां दोषान्तरदानमनुचितमितिवाच्यम् । सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टसिषाधयिषाविरहविशिष्टसिद्धित्वेनैव प्रतिबन्धकत्वस्य स्वीकार्यत्वात् तादृशानुमितिकत्वनिष्ठभेदप्रतियोगितावच्छेदकत्वं च स्वाश्रयवत्त्वसम्बन्धावच्छिन्नं ग्राह्यं भेदवैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन भेदश्चाव्याप्यवृत्तिः । यत्र च सिषाधयिषानाशक्षणे सिद्धिस्ततः परामर्शस्ततोऽनुमितिस्तत्रापि परामर्शोत्पत्तिक्षणे तादृशविशिष्टसिद्ध्यभावोऽक्षत एव तादृशभेदरूपविशेषणाभावात् इत्यभिप्रायेण विवृणोति विशिष्टाभावस्य विशेषणाभावरूपतयेत्यादिना । नन्वेतादृशरीत्याऽनुपपत्तिमात्रस्यैव वारणात् सिद्धिपदं सिषाधयिषाविरहद्वयमनादेयमेव तथा च सिषाधयिषाविरहविशिष्टसिद्धेर्विशेष्यत्वे निरुक्तविशिष्टाभावस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपत्व इत्यादिः एतेन स्वरूपसम्बन्धेन तादृशानुमितिकभिन्नत्वविशिष्टाभावस्य तादृशभिन्नत्वरूपविशेषणाभावरूपत्वेन कथं भवन्मतप्रलपितम् । तथा सति घटाभावादेरपि घटत्वाभावरूपतापातादिति निरस्तमिति ।

तद्धर्मावच्छिन्नकार्यस्योत्पादादिकं तद्धर्मावच्छिन्नकार्यस्य कारणतावच्छेदककोटौ न निविशत इति । तद्धर्मावच्छिन्नोत्पत्तित्वादेस्तद्धर्मपर्याप्तावच्छेदकताकजन्यतानिरूपितजनकतावच्छेदकघटकत्वं न स्वीक्रियत इत्यर्थः तेन ज्ञानोत्पत्त्यादिविशिष्टबुद्धौ

ज्ञानोत्पत्त्यादिज्ञानत्वेन हेतुतायां कार्योत्पादस्य कारणतावच्छेद-कत्वेपि ज्ञानोत्पत्तिविशिष्टबुद्ध्युत्पत्तित्वेनाप्रवेशाददोष इति ।

अथोक्तकार्यकारणभावस्य ज्ञानोत्पत्तिज्ञानत्वेन पदार्थान्तरप्रकारकज्ञानसाधारण्याय ज्ञानत्वावच्छिन्नप्रकारतानिरूपितोत्पत्तित्वावच्छिन्नप्रकारतानिरूपकबुद्धित्वावच्छिन्नं प्रति ज्ञानत्वावच्छिन्नप्रकारतानिरूपितोत्पत्तित्वावच्छिन्नविशेष्यताकज्ञानत्वेन हेतुत्वं वाच्यम् । तथा च तदुत्पत्तेस्तज्जनकतावच्छेदकाघटकत्वानियमेनोपपत्तौ प्रागुक्तप्रयासो वृथैव ज्ञानोत्पत्तिज्ञानजनकतावच्छेदककोट्यप्रविष्टत्वात् न च ज्ञानोत्पत्तित्वेन पदार्थान्तरप्रकारकज्ञानवारणाय कार्यकारणभावावच्छेदकविशेष्यतायां प्रकारतायां च ज्ञानोत्पत्त्यादिनिष्ठत्वं निवेशनीयम् । तथा च ज्ञानोत्पत्तेस्तादृशज्ञानजनकतावच्छेदकतापातात् प्रयास इति वाच्यम् ज्ञानोत्पत्तित्वेनापरव्यक्तिप्रकारकज्ञानवारणाय जनकतावच्छेदकविशेष्यतायां तदवच्छेदकप्रकारतायां च तद्व्यक्तिनिष्ठत्वनिवेशेनोक्तदोषवारणसम्भवे ज्ञानोत्पत्तित्वस्य ज्ञानजनकतावच्छेदकाघटकत्वात् न च तत्तद्व्यक्तित्वेन ज्ञानोत्पत्तेर्ज्ञानजनकतावच्छेदकत्वमावश्यकमिति वाच्यम् तथापि तद्धर्मावच्छिन्नोत्पत्तित्वस्याप्रवेशादिति ।

तदव्यवहितपूर्वत्वं न तादृशानुमितिप्रागभावाधिकरणसमयप्रागभावानाधिकरणत्वघटितम् अप्रसिद्धत्वात् किन्तु तादृशानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वमिति । अथात्रापि यथा अनुमितिसमयध्वंसानधिकरणत्वे सति अनुमितिक्षणत्वरूपस्य सामान्यतोऽनुमित्युत्पत्तिक्षणत्वम् एवं ध्वंसे तादृशक्षणोत्पत्तिकत्वमपीति तथा स्वप्रागभावाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वप्रागभावाधिकरणत्वोभयसम्बन्धेनानुमितिमत्क्षणत्वस्य सामान्यतोऽनुमित्यव्यवहितप्राक्क्षणत्वस्यापि प्रसिद्धतया अप्रसिद्ध्यभिधानासङ्गतिरिति चेन्न प्रागभावमनङ्गीकृत्यैवाप्रसिद्धेरुक्तत्वात् ।

अथ मूलोक्तसिषाधयिषाशब्देन स्वाव्यवहितोत्तरक्षणानुत्पन्नस्वसमानाधिकरणानुमितिकाभिन्नत्वावच्छिन्नविषयताशालिन्या विवक्षणीयतया न सिषाधयिषायाश्चतुर्थक्षणे पञ्चमक्षणे वानु-

मित्यनुपपत्तिस्तत्र तत्र लिङ्गात्मकपरामर्शस्य केवलपरामर्शस्य च तथात्वादित्यपि सार्वभौमानां कल्पान्तरं तदनिराकणात दीधितिकृतां न्यूनता दुर्वारैवेति । न च स्वाव्यवहितोत्तरक्षणानुत्पन्नस्वसमानाधिकरणानुमितिकत्वं स्वाव्यवहितोत्तरक्षणवृत्तिस्वसमानाधिकरणानुमित्युत्पत्त्यभावकत्वं तथा च तस्यानुमित्युत्पादघटिततया कार्योत्पादघटितधर्मस्य कारणतावच्छेदकत्वखण्डनेनैव तद्घटितधर्मस्य कारणतावच्छेदकत्वखण्डनं भवति इति वाच्यम् तादृशानुमितिकपदेन स्वक्षणाव्यवहितोत्तरक्षणवृत्तिउत्पत्तिसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकसमानाधिकरणानुमितिकत्वस्य विवक्षितत्वात् इति चेन्न कार्योत्पादादिकमित्यत्रादिपदेन निरुक्तधर्मस्याप्युपग्रहात् इति तत्र प्रतिबन्दिप्रदर्शनपरतया दीधितिकारस्य तृतीयप्रतिबन्दिलक्षणमवतारयति ।

आदिपदलब्धस्य स्वक्षणाव्यवहितोत्तरक्षणानुत्पन्नकार्यान्यत्वस्य कारणतावच्छेदकानुप्रवेशे बाधकमाह स्वक्षणेत्यादीति केचित्तु प्रागुक्तस्य स्वत्वघटितत्वेनानुगतत्वाभावादुक्तं स्वक्षणेत्यादीति । न चैकानुमित्युत्तरमनुमित्यन्तरस्य वारणार्थमस्यापि स्वोत्पत्तिकालावच्छिन्नत्वेन विशेषणीयत्वात् अननुगमतादवस्थ्यम् स्वोत्पत्तिकालावच्छिन्नत्वपदेन स्वानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य विवक्षितत्वादिति । अथैवमप्यननुगमतादवस्थ्यं तत्परामर्शानुमित्युत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य परामर्शद्वितीयक्षणोत्पन्नप्रकृतपक्षसाध्यकानुमित्युपधायकपरामर्शादावसत्त्वात् न च तत्परामर्शानुमित्युत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य एतत्परामर्शादावसत्त्वेऽपि न क्षतिरेतत्परामर्शानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटस्यैव सत्त्वात् निवेशनीयमपि तत्तत्कूटान्यतमत्वमिति वाच्यम् तथा सति अनुमित्यन्तरमनुमित्यापत्तितादवस्थ्यात् न च स्वानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टस्य निवेशान्नानुमित्यन्तरमनुमित्यापत्तिः । न वा अननुगम इति वाच्यं तथा सति स्वोत्पत्तिक्षणावच्छिन्नत्वस्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वनिवेशेनैव प्रागुक्तदोषवारणसम्भवे नञर्थद्वयप्रवेशवैफल्यप्रसङ्गादिति चेन्न अत्रापि

विशिष्य क्षणनियमस्याविद्दितैः करणीयत्वात् तथा च तत्परामर्शोत्पत्त्यनधिकरणतत्परामर्शसमानाधिकरणात्मद्वयावृत्तिगुणवैशिष्ट्याभाव एव तत्परामर्शोत्पत्त्यनधिकरण एतत्परामर्शसमानाधिकरणात्मद्वयावृत्तिगुणवैशिष्ट्याभावकूटवत्त्वस्य सकलपरामर्शादिसाधारणतया नाननुगमो न वानुमित्यन्तरमनुमित्यन्तरापत्तिरिति ।

न च जन्याभावत्वलक्षणध्वंसत्वप्रवेशवैयर्थ्यमभावान्तराणामुत्पत्तिविरहेणैव निरासादिति वाच्यं ध्वंसत्वनिरूपकप्रतियोगित्वलाभार्थं तदुपादानादन्यथा सर्वेषां क्षणानामनुमित्युत्पत्तिक्षणोत्पत्तिकस्वभेदात्मकध्वंसान्तरप्रतियोगितयाऽतिप्रसङ्गापत्तेरिति । न च सिद्ध्यात्मकपरामर्शक्षणस्यानुमित्यव्यवहितपूर्वत्वात्तधिकरणत्वविरहेण तद्घटितपक्षत्वाप्रसिद्धिरेव न त्वतिप्रसङ्ग इति वाच्यम् अत्रातिप्रसङ्गशब्देनाव्यवहितपूर्वत्वलक्षणातिप्रसङ्गस्योक्तत्वात् निरुक्तानधिकरणत्वघटितपक्षत्वाप्रसिद्ध्या तस्यानुमितिजनकत्वासम्भवः किन्तु परामर्शस्यैव तथा च सिद्ध्यात्मकपरामर्शादनुमित्यापत्तेरतिप्रसङ्गशब्दार्थत्वसम्भवाच्च ।

दीधितौ फलानुत्पादबलेनापीति । न नु अयं तत्क्षणावच्छिन्नपवनादिपरमाणुसंयोगध्वंसोत्पत्तिमान् तत्क्षणावच्छिन्नानुमित्यनुत्पादवत्त्वादित्यनुमानं न सम्भवति एव तत्क्षणावच्छिन्नानुमित्यनुत्पादस्तादृशसाध्याभाववद्वृत्तिर्नवेति अनुकूलतर्काभावसहकृतेन व्यभिचारसंशयेन प्रतिबन्धात् तादृशहेतौ तादृशसाध्यव्याप्तिनिश्चयासम्भवात् न च स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नाभावोऽनुमितिहेतुरिति निश्चय एव तत्रानुकूलतर्कोऽस्ति इति निरुक्तव्यभिचारज्ञानस्य प्रतिबन्धकत्वसम्भव इति वाच्यं स्वसमानाधिकरणानुमित्यव्यवहितप्राक्क्षणवृत्तिभिन्नाभावे स्वसामानाधिकरण्यस्वावच्छेदकक्षणाव्यवहितप्राक्क्षणावच्छिन्नत्वोभयसम्बन्धेन अनुमित्यभावाधिकरणताविशिष्टाधिकरणता नवेत्यन्वयव्यभिचारसंशयस्य प्रतिबन्धकतया तादृशहेतुतानिश्चयासम्भवादित्याशङ्कया दीधितिग्रन्थमवतारयति नन्वित्यादिना ।

ननु स्याद्वेत्यादिना उक्तप्रकारत्रयमपि स्वत्वगर्भत्वादननुगतमिति । ननु प्रतिबन्धकतायामननुगमेऽपि न क्षतिः प्रतिबन्धका-

भावकूटस्यैव हेतुत्वसम्भवादत आह ताद्रूप्येण प्रतिबन्धकतायां नैककारणपरिशेषापत्तिरिति भवेद्धेनेति। न चात्राऽपि तत्पुरुषीयानुमित्यव्यवहितप्राक्क्षणत्वं तत्पुरुषीयानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिस्ववृत्तियावद्ध्वंसविशिष्टसमयत्वरूपं वाच्यं तथा चाननुगमतादवस्थ्यमत आह अत्र चेत्यादि।

ननु तत्पुरुषीयानुमितिं प्रति कालिकसम्बन्धेन तत्पुरुषीयानुमित्याश्रयशब्दत्वेन हेतुतायां पुनरनुमित्यापत्तिवारणं कार्यसहभावेन हेतुत्वात्तथापि न सम्भवति अनुमित्युत्पत्तिक्षणोत्पन्नशब्दस्य द्वितीयक्षणेऽपि सत्त्वात् न च स्वप्रागभाववत्त्वकालिकोभयसम्बन्धेनाश्रयत्वोक्त्या नोक्त दोष इति वाच्यं तादृशोभयसम्बन्धेन तत्पुरुषीयानुमितिविशिष्टत्वस्य कदाप्यसम्भवेनाश्रयत्वासम्भवादतः स्वप्रागभाववन्निष्ठत्वस्योपलक्षणविधया कालिकसम्बन्धविशेषणत्वेनाह स्वप्रागभाववन्निष्ठकालिकसम्बन्धेनेति। ननु तादृशशब्दस्य न तत्पुरुषीयानुमित्यव्यवहितप्राक्क्षणपदलभ्यत्वं क्षणद्वयावस्थायित्वादत आह तादृशशब्दविशिष्टशब्दत्वस्येति वैशिष्ट्यं च स्ववृत्तित्वस्ववृत्तिध्वंसप्रतियोगित्वोभयसम्बन्धेनेति स्ववृत्तित्वमात्रोक्तौ पुनरनुमित्यापत्तिः स्ववृत्तिध्वंसप्रतियोगित्वमात्रोक्तौ च भाव्यनुमित्याश्रयशब्दविशिष्टशब्दमादाय सिद्ध्यात्मकपरामर्शादनुमित्यापत्तिस्तादृशसवन्धे न भिन्नकालीनयोरप्याधाराधेयभावसत्त्वादतस्तदुभयमुपात्तम्।

सिषाधयिषाविरहविशिष्टसिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः कारणमिति शिरोमणिः। अत्र प्रत्यक्षमानमेव निवेशयितुं युक्तं न त्वनुमितिभिन्नसिद्धिजनकमानमात्रं समानविषये शाब्दबोधसामग्रीसम्भवेऽप्यनुमितेरेवोत्पादादत एव एकपदार्थेऽपरपदार्थस्य संसर्गव्याप्यवत्त्वस्य योग्यतात्वे संसर्गस्यानुमितिरेव स्यान्न तु शाब्दधीरिति योग्यताग्रन्थे मणिकृतोक्तमिति जगदीशः। न च वह्न्यादिसंसर्गव्याप्यवत्ताज्ञानजन्यसंसर्गानुमितेः समानविषयकत्वाभावात् दृष्टान्तासम्भव इति वाच्यं संसर्गव्याप्यवत्ताज्ञानात् संसर्गिणोऽनुमितिरिति प्राचां मताभिप्रायेणोक्तत्वात् न च संसर्गस्यानुमितिरित्यनेन संसर्गविधेयकानुमितिरेव प्रतीयते न तु संसर्गिणोऽनुमितिरिति वाच्यं संस-

गेस्यानुमितीत्यत्र तृतीयार्थे षष्ठीकरणात् संसर्गानुमितिरित्यत्रैव तात्पर्यात्। मूलेसंसर्गपदस्य संसर्गिपरत्वादिति ध्येयम्।

साधकमानं हि सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा इति शिरोमणिः। तदुपहितमिति तया सिद्ध्या उपहितं विशिष्टं पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिविशिष्टं सत् तादृशसिद्धिजनकमिति यावदिति जगदीशः। अथात्रसिद्धिविशिष्टं सत्तादृशसिद्धिजनकमित्यस्यैव सम्यक्त्वे पक्षतावच्छेदकसामानाधिकरण्येनेत्यस्य वैयर्थ्यमिति चेन्न वक्ष्यमाणयुक्त्याऽशाब्दज्ञानं जायतामितीच्छायाः साधकमानेऽनुत्तेजकतया यादृशस्थानविशेषेऽवच्छेदावच्छेदेन सिद्धिकालीनप्रत्यक्षजनकीभूतयत्किञ्चित्कारणसत्त्वदशायां सामानाधिकरण्येन प्रत्यक्षात्मकसिद्धिकालीनतत्कारणसमुदायसामानाधिकरण्येन शाब्दसिद्धिकालीनयत्किञ्चित्प्रत्यक्षकारणसत्त्वदशायां च परामर्शसम्वलनं तत्र यदावच्छेदावच्छेदेन प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शस्ततस्तद्व्यक्तिभिन्नमशाब्दज्ञानं जायतामितीच्छा तत्र चक्षुःसंयोगादिसत्त्वेनुमित्यनुपपत्तेः तादृशेच्छायाः सिद्धावुत्तेजकत्वेपि साधकमानेऽनुत्तेजकत्वात् सामानाधिकरण्येनेत्युक्तौ तत्र चक्षुःसंयोगादिरूपसाधकमान न तादृशसामानाधिकरण्येन सिद्धिविशिष्टमतोनानुपपत्तिरिति ध्येयम्। तादृशसिद्धिजनकमिति पदात् यादृशसिद्ध्युपहितत्वं तादृशसिद्धिजनकमित्यर्थो लभ्यते तथा चात्र तादृशसिद्धिजनकत्वानिवेशे उक्तस्थल एव यदा सामानाधिकरण्येन शाब्दसिद्ध्यात्मकपरामर्शानन्तरमशाब्दज्ञानं जायतामितीच्छा तत्र चक्षुःसंयोगादिरूपयत्किञ्चित्कारणसत्त्वदशायामनुमित्यनुपपत्तिः सिद्धिविशिष्टप्रत्यक्षमानसत्त्वात् तदुक्तौ च तादृशसंयोगादिरूपप्रत्यक्षमानस्य प्रत्यक्षात्मकसिद्ध्युपहितत्वाभावान्नानुपपत्तिरिति विभावनीयम्।

न द्वितीयः सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेप्यनुमित्यापत्तेरनुमानातिरिक्तेत्यस्य वैयर्थ्याच्चेति शिरोमणिः॥ ननु सिद्ध्यनुपधानदशायां सिद्धिजनकस्य प्रत्यक्षसामग्र्यादेः पृथगेवानुमितिविरोधित्वं वाच्यम् स्वजन्यैकसिद्ध्युपहितया प्रत्यक्षसामग्र्या सिद्ध्यन्तरजननदशायामनुमितिवारणार्थमेव पक्षतायां निरुक्तसाधकमानस्यैव, वैयर्थ्यं जगदीशेनोक्तम्। अथात्र सिद्ध्य-

ध्युपहितप्रत्यक्षसामग्र्याः पृथक्प्रतिबन्धकत्वगौरवलाघवेन प्रत्यक्षसामग्रीत्वेनैव प्रतिबन्धकत्वे विशेषणमात्रस्य वैयर्थ्यदानमनुचितमिति चेन्न प्रागुक्तस्थले एव सिषाधयिषानुपहित प्रत्यक्षसामग्रीदशायां परामर्शसत्त्वेऽनुमितिवारणार्थमेव पक्षतायां तन्निवेशस्यावश्यकत्वात् न चात्र सिद्ध्यभावमात्रस्य पक्षतात्वेनैव उक्तदोषवारणसम्भवे कृतमन्यतराभावस्य पक्षतात्वनिर्वचनेनेति वाच्यं सामग्र्यसत्त्वकालीनप्रत्यक्षदशायां तत्तद्व्यक्तिभिन्नमशाब्दज्ञानं जायतामितीच्छा तत्रानुमित्युपपत्तये तादृशेच्छाया उत्तेजकत्वस्यावश्यवक्तव्यतया तथाविधेच्छाबलात् प्रत्यक्षविशिष्टतत्सामग्र्यन्तरमनुमितेर्वारणार्थमेव साधकमानान्तभागस्य सार्थक्यात् न च तत्र तादृशसिद्ध्युपहितचक्षुःसंयोगादिसत्त्वं आलोकाद्यसत्त्वे तादृशेच्छाबलात् अनुमित्युत्पत्त्या साधकमानेपि तादृशेच्छाया उत्तेजकत्वस्यावश्यकतया पक्षतायां साधकमानान्तभागस्य निवेशेप्युक्तापत्तिवारणसम्भव इति वाच्यं यत्र प्रत्यक्षद्युपहितचक्षुःसंयोगादिसत्त्वे इतरकारणसमुदयसत्त्वे एतादृशेच्छा न तु इतरकारणाद्यभावविशिष्टचक्षुःसंयोगादिरूपयत्किञ्चित्कारणसत्त्वे तत्र तादृशेच्छाविरहस्य प्रत्यक्षोपहितचक्षुःसंयोगादिरूपसाधकमाने विशेषणत्वानुपगमात् तादृशविषयविशेषार्थपक्षतायामेव तथाविधसाधकमानान्तभागस्य वैयर्थ्यादिति ध्येयम् ।

अथात्र यत्रादौ सामानाधिकरण्येन बाधः ततः सामानाधिकरण्येनावच्छेदावच्छेदेन च समूहालम्बनपरामर्शस्ततः सामानाधिकरण्येनानुमितिः ततोऽवच्छेदावच्छेदेन च समूहालम्बनपरामर्शस्ततः सामानाधिकरण्येनानुमितिस्ततोऽवच्छेदावच्छेदेनानुमितिर्न स्यात् निरुक्तसिद्ध्युपहितसाधकमानस्य सत्त्वादतस्तदुपपत्त्यर्थमेवानुमानातिरिक्तत्वविशेषणस्य सार्थक्यसम्भवे कथं वैयर्थ्यमुक्तमिति न चानुमितेः सामानाधिकरण्येनावच्छेदावच्छेदेन कार्यकारणभावस्य द्विविधतया सामानाधिकरण्येनानुमितिकारणतावच्छेदककोटौ अनुमानानिरिक्तत्वस्यैव वैयर्थ्यमुक्तं न त्ववच्छेदावच्छेदेनानुमितिकारणतावच्छेदककोटाविति वाच्यं एवमपि वह्निव्याप्यधूमवान् पर्वतो भावि ज्ञानमप्रमा इत्येतादृशज्ञानानन्तरं सामानाधिकरण्येनानुमित्यर्थमेव तत्सार्थक्यात् इति चेदत्र केचित् यादृशयादृश-

स्थलविशेष उक्तरीत्याऽप्रामाण्यज्ञानास्कन्दितसिद्ध्युत्तरं कदाप्यनुमितिर्न जाता तादृशस्थलीयपक्षतायामेव वैयर्थ्यस्योक्तत्वादित्याहुः ।

सिषाधयिषाविरहसहकृतसिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतराभावः कारणमिति दीधीति कृतोक्तं तत्र तदुपहितं तथा सिद्ध्या उपहितं विशिष्टं पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिविशिष्टं सत् तादृशासिद्धिजनकं यन्मानं तथा चानुमितेः पूर्वं सिद्धिविशिष्टसिद्धिजनकप्रमाणासत्त्वात् अनुमानातिरिक्तपदं व्यर्थमितिभावार्थो जगदीशेनोक्तः । अथात्र सामानाधिकरण्येन सिद्धिविशिष्टसिद्धिजनकप्रमाणासत्त्वात् अनुमानातिरिक्तत्वाप्रवेशे यत्र परामर्शसहकृतप्रत्यक्षसामग्रीतो ऽप्रामाण्यज्ञानास्कन्दितावच्छेदावच्छेदेन प्रात्यक्षिकी सिद्धिः ततोपि प्रात्यक्षिकासिद्ध्यन्तरं तत्र द्वितीयसिद्ध्युत्पत्तिकालेऽनुमितिः स्यात् उक्तसिद्धेः सिषाधयिषाविरहविशिष्टत्वेपि अप्रामाण्यज्ञानास्कन्दितत्वेनाविरोधित्वात प्रत्यक्षसामग्र्यास्तु सामानाधिकरण्येन सिद्धिविशिष्टतयाऽप्रतिबन्धकत्वात् न च तत्रानुमित्यनुत्पादेन तदप्रामाण्यग्रहव्यक्तीनामनुत्तेजकत्वमिति वाच्यम् यत्र प्रत्यक्षसामग्रीतः परामर्शसहकृताप्रामाण्यज्ञानास्कन्दितावच्छेदावच्छेदेन प्रात्यक्षिकी सिद्धिस्ततोपि अप्रामाण्यज्ञानास्कन्दितप्रात्याक्षिकासिद्ध्यन्तरं तदानीं प्रत्यक्षस्य कारणान्तरविलोपेन ततोऽनुमितिस्तत्रानुमितिसम्पत्त्यर्थं तथाविधाप्रामाण्यज्ञानद्वयस्य उत्तेजकत्वावश्यकतया तत्र द्वितीयसिद्ध्युत्पत्तिकालेऽनुमित्यापत्तेर्दुर्वारत्वात् । यत्तु सामानाधिकरण्येत्यनेनतादृशमाने सिद्धिविशिष्टत्वमेवोक्तम् न तु सिद्ध्यन्तरव्यावर्तनं पक्षतावच्छेदकसामानाधिकरण्येनेति पाठे तादृशाभिप्रायासम्भवात् तदपि प्रागुक्तस्थलीयाप्रामाण्यज्ञानस्यानुमितिप्राक्क्षणविशेषितस्यैव उत्तेजकत्वं वाच्यम् तदप्यसत् सिद्ध्यन्तरव्यावर्तकसंसर्गतावच्छेदकतापर्याप्तिनिवेशस्य तदधीनस्थलविशेषीयाप्रामाण्यज्ञानस्य विशेषरूपेणोत्तेजकत्वस्य च निष्प्रयोजनकतया गौरवास्पदत्वादिति चेन्न सामानाधिकरण्येन सिद्धिविशिष्टमित्यत्र संयोगत्वादिपर्याप्तसंसर्गतावच्छेदकत्वार्थकमात्रपदस्याकथनेनैव सिद्धिद्वयोरेव प्रविष्टतया उक्तानुपपत्त्यसम्भवात् ईदृशरीत्यैव दीधीतिकारोक्तमात्रपदप्रयोजनं दर्शितं जगदीशेन

साधकमानस्य परामर्शादेरनुमितेः पूर्वं तद्वैशिष्ट्याभावादेव विरोधित्वासम्भवादिति भाव इति ।

अथात्र यत्र सामानाधिकरण्येन बाधानिश्चयस्ततोऽवच्छेदावच्छेदेन सामानाधिकरण्येन समूहालम्बनपरामर्शस्ततः सामानाधिकरण्येनानुमितिस्ततोऽवच्छेदावच्छेदेनानुमितिस्तत्रावच्छेदावच्छेदेनानुमितेः पूर्वं निरुक्तसिद्धिविशिष्टसिद्धिजनकस्य सत्त्वादवच्छेदावच्छेदेनानुमित्यनुपपत्तिभिया अनुमानातिरिक्तपदस्यावश्यकत्वे तद्वैयर्थ्यकथनमयुक्तमितिचेदत्रकेचित् उपाध्यायेन सामानाधिकरण्येनानुमित्यभिप्रायेणायं कार्यकारणभाव उक्तः सामानाधिकरण्यमात्रेणानुमित्यनन्तरं सामानाधिकरण्यमात्रेणानुमित्युत्पादेनैव व्यभिचारासम्भवात्सुतरामनुमानातिरिक्तपदवैयर्थ्यमिति न च यदि सामानाधिकरण्यमात्रेणानुमितिस्थलाभिप्रायकोयं ग्रन्थस्तदा स्वजन्यैकसिद्ध्युपहितया प्रत्यक्षसामग्र्या सिद्ध्यन्तरजननदशायामनुमितिवारणार्थमेव पक्षतायां निरुक्तसाधकमानस्य प्रवेश्यत्वादिति लिखनं कथं सङ्गच्छते सिद्ध्यभावविरहेणैवोक्तापत्तिवारणसम्भवादिति वाच्यं प्रागुक्तदिशैवात्रापि स्वजन्याप्रामाण्यज्ञानास्कन्दितैकसिद्ध्युपहितया प्रत्यक्षसामग्र्या अप्रामाण्यज्ञानास्कन्दितसिद्ध्यन्तरजननदशायामनुमित्यापत्तिवारणार्थं पक्षतायां साधकमाननिवेशस्यावश्यकत्वात् सिद्धेस्तु अप्रामाण्यज्ञानास्कन्दितत्वेनाविरोधित्वात् द्वितीयसिद्ध्यन्तरमनुमित्यर्थं तदप्रामाण्यज्ञानस्योत्तेजत्वावश्यकत्वात् इत्याहुस्तन्न यत्र सामानाधिकरण्येन वन्हिपरामर्शस्ततोऽप्रामाण्यज्ञानास्कन्दिता तथैवानुमितिस्ततोऽनुमित्यन्तरं तत्र अथवा यत्र सामानाधिकरण्येन परामर्शस्ततो वह्नयंशे अप्रामाण्यज्ञानास्कन्दितानुमित्यात्मकसिद्ध्यात्मकपरामर्शस्ततोऽनुमित्यन्तरं द्वितीयानुमिति र्न स्यात् सिद्धिविशिष्टस्य परामर्शस्यैव सत्त्वात् अतो अनुमानातिरिक्तपदसार्थक्यसम्भवे सामानाधिकरण्येनानुमितिस्थलाभिप्रायकत्वस्याकिञ्चित्करत्वात् ।

परे तु अनुमानातिरिक्तत्वनिवेशे यत्रादौ वह्निप्रत्यक्षसामग्रीतः सामानाधिकरण्येन वह्निप्रत्यक्षं तदानीं हेत्वन्तरविलोपेन प्रत्यक्षसामग्र्यभावादेवावच्छेदावच्छेदेनानुमितिस्तत्रानुमितिपूर्वं अनुमानातिरिक्तस्य निरुक्तसिद्धिवैशिष्ट्यवतः सिद्धिजनकचक्षुरादेः

सत्त्वादनुमितिर्न स्यात् अतः सामानाधिकरण्यकालिकोभयसम्बन्धेनानुमितिमदन्या या सिद्धिस्तद्विशिष्टतज्जनकमात्रस्यैव निरुक्तसाधकमानपदवाच्यतावश्यकतया तावतैवोक्तस्थले परामर्शादेः प्रतिबन्धकत्वासम्भवादेवानुमितिसम्भवेऽनुमानातिरिक्तपदस्य वैयर्थ्यमुक्तं न च यत्र प्रत्यक्षसामग्री ततः सामानाधिकरण्येन वह्निप्रत्यक्षं ततोऽवच्छेदावच्छेदेन परामर्शस्तदानीं प्रत्यक्षसामग्रीविरहादेव ततोऽवच्छेदावच्छेदेनानुमितिस्तत्र परामर्शक्षणे तादृशोभयसम्बन्धेनानुमितिमदन्यसिद्धिजनकचक्षुरादेः सत्त्वादनुमित्यनुत्पादापत्तिरतोऽनुमितिमदन्यत्वनिवेशेऽपि उक्तदोषवारणासम्भवेन कथं तस्य निवेश इति वाच्यम् । अनुमितिमदन्यसिद्धिविशिष्टस्योत्पत्तिघटितसामानाधिकरण्यसम्बन्धेन वाच्यत्वात् तथा चोक्तस्थले ईदृशसम्बन्धेन सिद्धिविशिष्टसिद्धिजनकमानाभावस्य परामर्शक्षणे सत्त्वान्नानुमित्यनुपपत्तिः न च तथापि प्रत्यक्षसामग्री ततः सामानाधिकरण्येन वह्निप्रत्यक्षं तदव्यवहितोत्तरक्षणे कारणान्तरविरहादेव न वह्नि प्रत्यक्षं किन्तु परामर्शोत्पत्तिः कारणान्तरोत्पत्तिश्च तदनन्तरं वह्निप्रत्यक्षं तत्र द्वितीयप्रत्यक्षोत्पत्तिकालेऽनुमित्यापत्तिः उत्पत्त्यादिघटितसामानाधिकरण्यसम्बन्धेन निरुक्तसिद्धिविशिष्टं यत्सिद्धिजनकं तदभावस्य परामर्शोत्पत्तिक्षणे सत्त्वादिति वाच्यम् । सिद्ध्यनुपधानकालीनप्रत्यक्षसामग्र्याः स्वातन्त्र्येण विरोधित्ववत् अत्राप्यनायत्या प्रत्यक्षसामग्र्याः स्वातन्त्र्येणैव विरोधित्वस्य वक्तव्यत्वात् सिद्ध्युत्पत्तिकालीनकतिपयप्रत्यक्षसामग्र्यास्तत्तद्व्यक्तित्वेन विरोधित्वकल्पनामपेक्ष्य लाघवात्सिद्धिविशिष्टत्वेन तस्यास्तत्कल्पनात् यद्यप्युत्पत्तिसम्बन्धेनानुमितिमदन्यसिद्धेर्विरोधित्वकल्पनादेव सर्वत्रानुपपत्त्यसम्भवे सिद्धिविशिष्टसिद्धिजनकमानस्य वैयर्थ्यापत्तिस्तथापि अनुमानातिरिक्तपदवैयर्थ्यवत्तद्वैयर्थ्यस्यापि कर्तव्यत्वादिति ध्येयम् ॥

इति पक्षताविवेचनं समाप्तम् ।

---

## अथ केवलान्वयिजागदीश्याः

### कालीशङ्करसिद्धान्तवागीशविरचितं क्रोडपत्रम् ।

व्यतिरेकित्वं चात्रावच्छिन्नवृत्तिकान्यव्यतिरेकप्रतियोगित्वं भेद-प्रतियोगितावच्छेदकत्व वा नातः साध्यसहचाराग्रहदशायां संयोगाभावादिसाध्यकवाच्यत्वादिहेतुककेवलान्वयिन्यतिव्याप्ति रितिजागदीशी । न चावच्छिन्नवृत्तिकान्याभावप्रतियोगित्व-स्य व्यतिरेकित्वस्वरूपत्वे संयोगस्य व्यतिरेकित्वानुपपत्तिः तदभा-वस्यावच्छिन्नवृत्तिकत्वात् एवं गगनाभावस्य व्यतिरेकित्वापत्तिश्च गगनस्वरूपतदभावस्य अवच्छिन्नवृत्तिकान्यत्वादिति वाच्यम् अव-च्छिन्नवृत्तिकान्यपदेन निरवच्छिन्नवृत्तिकत्वस्य विवक्षितत्वात्। के-चित्तु पूर्व्वकल्पे तद्दोषभियैव भेदप्रतियोगितावच्छेदकत्वं वेति-कल्पान्तरानुशरणमित्याहुः ।

अथात्र भेदप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदकसम्ब-न्धावच्छिन्नं ग्राह्यम् अन्यथा कालिकसम्बन्धेन गगना-भाववतां जन्यानां भेदस्य नित्ये सत्त्वात् गगनाभावोऽपि व्यति-रेकी स्यात् तन्निवेशे च तदीयप्रतियोगितावच्छेदकतायामभावी-यविशेषणताविशेषावच्छिन्नत्वाभावान्न गगनाभावस्य व्यतिरेकि-त्वापत्तिः । एवं च व्यधिकरणसम्बन्धेन गगनादेर्व्यतिरेकित्वानु-पपत्तिस्तत्सम्बन्धेन तद्वत्त्वाप्रसिद्धेरिति न च भेदप्रतियोगितानव-च्छेदकत्वविशिष्टवृत्तित्वाभाववत्त्वमेव व्यतिरेकित्वपदेन विव-क्षणीयम् अवच्छेदकत्वं वृत्तित्वं च व्यतिरेकिताघटकसम्बन्धेन ग्रा-ह्यमतो नोक्तदोष इति वाच्यम् एवमपि व्यधिकरणसंयोगेन गोत्वादेर्व्यतिरेकित्वानुपपत्तेः तत्र तादृशभेदप्रतियोगितानवच्छे-दकत्वविशिष्टतत्सम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धेः इति चेदत्र केचित् । व्यतिरेकित्वपदेन भेदप्रतियोगितानवच्छेदकत्ववृत्तिम-त्त्वोभयाभावस्य विवक्षितत्वात् न कोपि दोषः । गगनादौ भेदप्रति-योगितानवच्छेदकत्वसत्त्वेपि वृत्तिमत्त्वविरहादेवोभयाभावसत्त्वात् इत्याहुः । तन्न उक्तविवक्षयापि विषयित्वतादात्म्यादिसम्बन्धेन घटादेर्व्यतिरेकित्वानुपपत्तिः तत्सम्बन्धेन प्रतियोगितानवच्छेदक-त्वाप्रसिद्धेः । वस्तुतः स्वप्रतियोगिवृत्तित्वस्यानवच्छिन्नत्वो-

भयाभावविशिष्टभेदप्रतियोगितावच्छेदकत्वस्य व्यतिरेकित्वपदेन विवक्षितत्वान्न काप्यनुपपत्तिरुभयत्र स्वपदं व्यतिरेकिताघटकसम्बन्धपरं तथा च यत्र संयोगेन गोत्वादेर्व्यतिरेकित्वं तत्र समवायादिसम्बन्धावच्छिन्नगोत्वनिष्ठभेदप्रतियोगितावच्छेदकतायामेव तादृशोभयाभावसत्त्वान्न तत्राव्याप्तिः वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगितानङ्गीकारेऽपि तादृशसम्बन्धावच्छिन्नावच्छेदकत्वस्य सर्वैरेव स्वीकृतत्वादेतत्कल्पे न कोऽपि दोष इति ध्येयम् ॥ १ ॥

तथापि प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यत्वावगाहियज्ज्ञानजनकीभूतज्ञाननिष्ठस्य प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहित्वसाध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहित्वयोरन्यतरस्य तादात्म्येन व्यापकं हेतुधर्मिकसाध्यसहचारविषयित्वं तज्ज्ञानत्वं तज्ज्ञानविषयताविशिष्टप्रकृतहेतुत्वं वा प्रकृतहेतुसाध्यककेवलान्वय्यनुमानत्वं विवक्षितमिति जगदीशः । अत्र चानुमितिफलोपहितत्वेनापि व्याप्त्यवगाहियज्ज्ञानं विशेषितं तच्चानुमित्यव्यवहितपूर्ववर्त्तित्वे सति अनुमितिसामानाधिकरण्यमात्रं न तु जनकत्वादेस्तत्र निवेशः । तथा चान्वयसहचारात्मकव्याप्तिज्ञानजन्यानुमित्युपधायकसंस्कारेऽतिव्याप्तिवारणाय प्रथमज्ञानपदम् । केचित्तु व्याप्तिर्जायतामितीच्छायामतिव्याप्तिस्तथाहि तज्जनकीभूतव्याप्तिर्मदिष्टसाधिका इतीष्टसाधनताज्ञानात्मकधूमो वह्निसमानाधिकरण इतिज्ञानीयतादृशविषयतायाः साध्यान्वयसहचारावगाहिताव्याप्यत्वादतो ज्ञानपदमित्याहुः । यत्र युगपदुत्पन्नं धूमो वह्निसमानाधिकरण इति साध्यसहचारज्ञानं वह्न्यभावो धूमाभावसमानाधिकरण इति व्यतिरेकसहचारसंस्कारश्च तदुत्तरजातस्य वह्न्यभावो धूमाभावसमानाधिकरण इति प्रत्यभिज्ञानात्मकधूमव्यापकवह्निसमानाधिकरणो धूम इति व्याप्तिज्ञानस्यापि वह्निसाध्यकधूमहेतुककेवलान्वयितयाव्याप्तिर्निरुक्तव्याप्तिज्ञानस्यापि तादृशव्याप्त्यवगाहितया तज्जनकवृत्तितादृशान्यतरावगाहित्वाव्यापकत्वात् साध्यान्वयसहचारावगाहित्वस्येति द्वितीयज्ञानपदम् । केचित्तु व्यतिरेकसहचारावगाहिसंस्कारजन्येऽनुमित्युपधायके व्याप्तिस्मृत्यादावतिव्याप्तिवारणाय द्वितीयज्ञानपदम् आचार्य्यमते तादृशस्मृ-

न्यादेरलक्ष्यत्वात् न च ज्ञानपददानेपि अन्वयसहचारज्ञानोत्तरजाततादृशस्मृत्यादावतिव्याप्तिर्दुर्वारैवेति वाच्यम् अन्वयसहचारज्ञानस्य तादृशस्मृतेरव्यवहितपूर्वत्वेपि जनकत्वाभावादित्याहुस्तच्चिन्त्यम् ॥ २ ॥

स्वरूपसम्बन्धेन व्यापकत्वोक्तौ अन्वयव्यतिरेकिण्यतिव्याप्तिरतस्तादात्म्येनेत्युक्तं । प्रकृतहेतुधर्मिकत्वं परित्यज्य प्रकृतसाध्यान्वयसहचारावगाहितामात्रस्य तादृशान्यतरावगाहिताव्यापकत्वोक्तौ कपिसंयोगाभाववान् कपिसंयोगादित्यादौ व्यतिरेकिण्यतिव्याप्तिस्तत्र व्यतिरेकसामानाधिकरण्यावगाहितायासाध्यान्वयसहचारावगाहितास्वरूपत्वेन तादृशान्यतरावगाहिताव्यापकत्वस्याक्षतेः हेतुधर्मिकत्वोक्तौ चान्यतरावगाहितान्तर्गतकपिसंयोगाभावाभावत्वावच्छिन्नविषयतानिरूपितकपिसंयोगाभावसामानाधिकरण्यविषयतायां हेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वावच्छिन्नसाध्यान्वयसहचारावगाहितात्वाभावान्नातिव्याप्तिः प्रकृतसाध्यान्वयसहचारावगाहित्वस्यानुक्तौ कपिसंयोगवान् कपिसंयोगाभावादित्यादौ व्यतिरेकिण्यतिव्याप्तिः तत्र हेत्वभावसामानाधिकरण्यावगाहितायाः साध्यान्वयसहचारावगाहितारूपत्वात् हेत्वभावस्य साध्यात्मकत्वात् साध्याभावस्य प्रकृतहेतुस्वरूपत्वाच्च प्रकृतसाध्येत्युक्तौ हेत्वभावसामानाधिकरण्यावगाहितायाः साध्यतावच्छेदकावच्छिन्नसामानाधिण्यावगाहितारूपत्वाभावान्नातिव्याप्तिः ॥ ३॥

अथात्र यस्य केवलान्वयिनो व्यतिरेकसहचारभ्रमोऽप्रसिद्धस्तत्राव्याप्तिभिया पूर्वकल्पं परित्यज्य एतत्कल्पानुसरणे एतत्कल्पेपि तादृशस्थले व्यतिरेकसहचारभ्रमाप्रसिद्ध्या निरुक्तान्यतरावगाहित्वस्याप्रसिद्धत्वाच्चद्दोषतादवस्थ्यमिति चेदत्र केचित् । तादृशान्यतरावगाहित्वपदेन प्रकृतहेतुधर्मिकसाध्यव्यभिचारधीविरोधितावच्छेदकीभूतविषयत्वं विवक्षणीयं तथा च यस्य केवलान्वयिनो व्यतिरेकसहचारभ्रमाप्रसिद्ध्याऽन्वयसहचारज्ञानादेव व्याप्तिज्ञानं तत्र व्यभिचारधीविरोधितावच्छेदकीभूतविषयिता अन्वयसहचारविषयितैव इति नाव्याप्तितादवस्थ्यं न च व्यभिचारधीविरोधितावच्छेदकविषयतात्वेन तादृशान्यतरा-

वगाहित्वयोरनुगमे यत्र धूमव्यापको वह्निर्वह्न्यभाववदवृत्तिश्च धूम इतिज्ञानात्मकधूमो वह्निसमानाधिकरण इतिसहचारज्ञाना-द्व्याप्तिज्ञानं तत्राव्याप्तिः तज्जनकीभूतज्ञानवृत्तिव्यभिचारधीवि-रोधितावच्छेदकीभूतव्यापकत्वविषयतायां तादृशव्याप्तिविषय-तायां वा तादात्म्येन साध्यान्वयसहचारावगाहित्वासत्त्वात् यदि च प्रतियोगित्वसम्बन्धावच्छिन्नविषयतानिरूपिताभावत्वाव-च्छिन्नविषयता निरूपिताया मुख्यविशेष्यता तदनवच्छिन्नत्वेन प्रति-बन्धकताया विशेषणीयत्वान्नोक्तदोष इत्युच्यते तदापि अधिकरण-विषयतान्तर्भावेन व्यभिचारग्रहं प्रत्यधिकरणविशेषान्तर्भावेन हेतु-धर्मिकसाध्यसहचारग्रहस्य विरोधिताया आचार्य्यसम्म-ततया अनुभवबलाद्वह्निधर्म्मिकधूमसहचारग्रहस्यापि प्रतिबन्ध-कत्वेन यत्र वह्निर्धूमसमानाधिकरण इति ज्ञानात्मकं धूमो वह्नि-समानाधिकरण इति सहचारज्ञानं तदुत्तरव्याप्तिज्ञानस्यापि के-वलान्वयित्वात्तत्राव्याप्तिः तज्जनकीभूतज्ञानवृत्तिव्यभिचारधी-विरोधितावच्छेदकीभूतवह्निधर्मिकधूमसहचारविषयतायां प्र-कृतहेतुधर्म्मिकसाध्यसहचारावगाहित्वाभावात् । एवं धूम-वन्निष्ठाभावप्रतियोगितावच्छेदकत्ववदवृत्तिमद्वह्नित्वमिति तादृ-शावच्छेदकत्वाभावव्याप्यवत्ताज्ञानात्मकधूमो वह्निसमानाधिक-रण इति साध्यान्वयसहचारज्ञानोत्तरव्याप्तिज्ञानस्यापि केव-लान्वयित्वात्तत्राव्याप्तिः तज्जनकज्ञानवृत्तिप्रतियोगित्वसम्ब-न्धावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितमुख्य-विशेष्यतानवच्छिन्ना या तादृशप्रतिबन्धकता तदवच्छेद-कव्याप्यत्वावच्छिन्नविषयतायां तादृशसहचारावगाहित्वाभा-वादितिवाच्यं प्रकृतहेतुधर्मिकव्यभिचारग्रहत्वाव्यापकीभू-ता या तादृशव्यभिचारविषयित्वावच्छिन्नप्रतिबध्यता-तन्निरूपितप्रतिबन्धकतावच्छेदकीभूताविषयितात्वेन तादृशा-न्यतरावगाहित्वयोरनुगमात्तथा च व्यक्तिविशेषमन्तर्भाव्य तादृशान्यतरसहचारग्रहप्रतिबन्धकतानिरूपितव्यक्तिविशेषमन्त-र्भाव्य तादृशव्यभिचारविषयत्वावच्छिन्ना या प्रतिबध्य-ता सैव तादृशग्रहत्वाव्यापिका न तु व्यापकत्वग्रहप्रतिबन्धकता-निरूपितप्रतिबध्यता व्याप्तिज्ञानद्वयप्रतिबन्धकतानिरूपितप्रति-

वध्यता वेति न कुत्राप्यनुपपत्तिः । न च तथापि तादृशविरोधितावच्छेदकविषयतात्वेन तादृशान्यतरावगाहितयोरनुगमे विनिगमनाविरहेण तादृशान्यतरसहचारघटकीभूतानां निरूप्यनिरूपकभावापन्नसर्वासामेव विषयितानां तादृशव्यभिचारविरोधितावच्छेदकतया तादृशविरोधितावच्छेदकीभूतधूमादिविषयितायां हेतुतावच्छेदकावच्छिन्नविषयित्वावच्छिन्नसाध्यान्वयसहचारावगाहित्वासत्त्वात् सर्वत्रासम्भवापत्तिरिति वाच्यम् । हेतुधर्मिकसाध्यान्वयसहचारावगाहित्वपदेन विलक्षणावच्छेद्यावच्छेदकभावावगाहिनी या हेतुधर्मिकसाध्यान्वयसहचारावगाहिता तदवच्छिन्नभेदप्रतियोगितानवच्छेदिका सती साध्यधर्मिकहेतुसामानाधिकरण्यावगाहित्वावच्छिन्नभेदप्रतियोगितानवच्छेदिका या विषयिता तदन्यविषयित्वस्य विवक्षितत्वात् तथा च समनियताभावानामैक्यात्तद्धर्मिकसाध्यसामानाधिकरण्यावगाहित्वाघटकीभूतप्रत्येकविषयितानां निरुक्तभेदप्रतियोगितावच्छेदकत्वेन तेषामपि व्यभिचारधीविरोधितावच्छेदकीभूतविषयतारूपतया प्रत्येकविषयतायां तादृशविषयताव्यापकत्वमक्षतमेवेत्याहुः तच्चिन्त्यं । यत्तु पूर्वकल्पे सर्वत्र भ्रमे मानाभावात् इत्यस्य सर्वेषां सर्वत्र भ्रमे मानाभावादित्यर्थकतया यादृशकेवलान्वयिनि यस्य पुरुषस्य व्यतिरेकभ्रमोऽप्रसिद्धस्तत्पुरुषीयतादृशकेवलान्वयिन्यव्याप्तिः पूर्वकल्पस्य तत्पुरुषीयत्वघटितत्वादत्र च कस्यचित् पुरुषस्य तादृशभ्रमप्रसिद्धौ अन्यतरावगाहित्वप्रसिद्धिरिति सङ्गमयन्ति । तन्मन्दम् । अत्र कल्पे तत्पुरुषीयभ्रमाप्रसिद्धावपि यस्य कस्यचिद्भ्रमसिद्धिस्तमादाय लक्षणगमनेन पूर्वकल्पेपि स्वाव्यवहितोत्तरत्वस्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नप्रतियोगिताकव्यतिरेकसहचारग्रहाभाववत्प्रकृतसाध्यव्याप्तिग्रहविशेष्यत्वमित्यस्यैव सम्यक्त्वे गुरुतरव्यापकताघटितस्य तथापीत्यादिकल्पानुशरणस्य वैयर्थ्यापत्तेरितिध्येयम् । परे तु अत्र कल्पे कस्यचिदपि व्यतिरेकसहचारभ्रमाप्रसिद्धा व्यतिरेकसहचारावगाहित्वासम्भवेनान्यतरावगाहित्वाप्रसिद्धावपि प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहितान्यत्वे सति प्रकृतहेतुतावच्छेदकप्रकृतसाध्यतावच्छेदकोभयाभाववत् यत्तदन्यत्वरूपान्यतरत्वनिवेशान्न कोऽपि दोषः ता-

इत्युभयाभावश्च स्वावच्छिन्नविषयतानिरूपितत्वस्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वत्वावच्छिन्नविषयतातादात्म्यएतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः तथा च यत्र व्यतिरेकसहचारभ्रमो ऽप्रसिद्धः तत्र साध्यान्वयसहचारावगाहित्वस्यैव तादृशान्यतरत्वसम्भवात् तमादायैव लक्षणसमन्वयः । अत एव प्रकृतहेतुधर्मिकसाध्यव्याप्यत्वावगाहियज्ज्ञानकज्ञानवृत्त्यन्यतरावगाहित्वत्वव्यापकं व्यतिरेकसहचारावगाहितान्यत्वमिति वक्ष्यमाणलक्षणस्य यत्र व्यतिरेकसहचारावगाहित्वाप्रसिद्धिस्तत्राव्याप्तिरित्यपि परास्तं वक्ष्यमाणलक्षणे व्यतिरेकसहचारावगाहितान्यत्वपदेनापि निरुक्तान्यतरसम्बन्धेन हेतुतावच्छेदकसाध्यतावच्छेदक एतदुभयाभावस्य विवक्षितत्वात् इत्याहुस्तदपि चिन्तनीयम् । यत्र धूमो वन्हिसमानाधिकरणः वन्ह्यभाववद्वृत्तिश्च घटाभाव इति समूहालम्बनान्वयसहचारज्ञानाद्व्याप्तिज्ञानं तत्राव्याप्त्यापत्तेः तज्जनकीभूतोक्तसमूहालम्बनज्ञानवृत्तिवन्ह्यभावधूमाभाववद्वृत्तित्वावगाहितायां निरुक्तोभयाभावासत्त्वेन तस्यापि निरुक्तान्यतरावगाहितास्वरूपत्वेन तत्रान्वयसहचारावगाहित्वाभावादिति ध्येयम् । अन्ये तु तादृशान्यतरावगाहितापदेन हेतुतावच्छेदकाभाववत्त्वे सति साध्यतावच्छेदकाभाववत्त्ववत्त्वे सति हेतुधर्मिकसाध्यसामानाधिकरण्यावगाहिताभिन्ना या विषयता तदन्यत्वस्य विवक्षणीयत्वान्न दोषः । हेतुतावच्छेदकाभावश्च स्वावच्छिन्नविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितवृत्तित्वविषयतातादात्म्यस्वसमानकालीनसाध्यतावच्छेदकविषयतानिरूपितावच्छिन्नत्वविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितत्वोभयसम्बन्धेन । साध्यतावच्छेदकाभावश्च स्वावच्छिन्नविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितत्वस्वसमानकालीनहेतुतावच्छेदकावच्छिन्नत्वविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतातादात्म्यउभयसम्बन्धेन । तादृशप्रत्येकाभावो वा तत्सम्भवस्थलाभिप्रायेण निवेशनीय इति वदन्ति ॥ ४ ॥

अथ प्रकृतहेतुधर्मिकसाध्यव्याप्यत्वावगाहियज्ज्ञानजनकज्ञानत्वव्यापकः व्यतिरेकसहचारावगाहित्वाभावस्तज्ज्ञानत्वमित्यस्यैव सम्यक्त्वे तादृशान्यतरावगाहिताऽव्यापकतानिवेशो गौरवग्रस्त इति । न च यत्र व्यतिरेकसहचारज्ञानमाहार्य्यम् अन्वयसहचारज्ञानमनाहार्य्यं तत्र हेतोरपि तदानीं केवलान्वयित्वेन तत्राव्याप्तिरतो ऽनाहार्य्यज्ञानीयव्यतिरेकसहचारावगाहित्वाभावस्य तादृशग्रहत्वव्यापकत्वं वाच्यम् एवञ्च यादृशस्थले व्यतिरेकसहचारज्ञानमाहार्य्यमेव जायते तत्रानाहार्य्यज्ञानीयव्यतिरेकसहचारावगाहित्वाप्रसिद्ध्याऽव्याप्तिः स्वमते तु तादृशजनकज्ञानवृत्ति अन्यतरावगाहितायां आहार्य्यत्वानिरूपकत्वानिवेशान्न दोष इति वाच्यम् तादृशस्थले मानाभावात् आहार्य्यव्यतिरेकसहचारावगाहिज्ञानदशायां केवलान्वयित्वस्य कुत्रापि ग्रन्थकृताऽप्यनुक्तत्वाच्च इतिचेन्न एतस्य लक्षणान्तरत्वेन उक्तलक्षणस्यादोषादिति ध्येयम् ॥ ५ ॥

प्रकृतहेतुप्रकारकानिश्चयोत्तरप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतप्रकारितात्वव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वकानुमितिकरणत्वमित्यर्थ इति जगदीशः । न चात्र लक्षणघटकीभूतप्रकृतहेतुप्रकारकानिश्चयोत्तरत्वदलं व्यर्थमिति वाच्यम् धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतः वह्न्यभावव्यापकीभूताभावप्रतियोग्यालोकवांश्चेत्याकारकसमूहालम्बनपरामर्शाज्जायमानानुमितिकरणस्यालोकहेतुकव्यतिरेकिण एव धूमहेतुककेवलान्वयित्वात्तत्राव्याप्त्यापत्तेः वन्ह्यभावव्यापकीभूताभावप्रतियोग्यालोकवत्तानिश्चयाव्यवहितोत्तरवह्निविधेयकानुमितित्वस्यापि प्रकृतसाध्यकानुमितित्वघटिततया वह्निधूमान्वयव्याप्तिप्रकारितात्वस्य तादृशधर्मावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितात्वाव्यापकत्वात् । तादृशाव्यवहितोत्तरत्वप्रवेशे तु व्याप्तिज्ञानं यद्धेतुककेवलान्वयि तद्धेतुप्रकारकनिश्चयाव्यवहितोत्तरत्वेन प्रकृतसाध्यकानुमितित्वघटितधर्म्मावच्छिन्नकार्य्यताप्रवेशान्न दोष इति फलितं न च प्रकृतहेतुप्रकारकानिश्चयाव्यवहितोत्तरत्वेत्यत्र प्रकृतपदं व्यर्थमिति वाच्यम् धूमव्यापकवह्निसमानाधिकरणधू-

मवान् पर्वतः वन्ह्यभावव्यापकीभूताभावप्रतियोगितद्धूमवांश्च इत्याकारकसमूहालम्बनपरामर्शाज्जायमानानुमितिकरणस्य तद्धूमहेतुकव्यतिरेकिण एव धूमहेतुककेवलान्वयित्वात्तत्राव्याप्त्यापत्तेः। वन्ह्यभावव्यापकीभूताभावप्रतियोगितद्धूमवत्तानिश्चयोत्तरवह्निसाध्यकानुमितित्वस्यापि धूमप्रकारकनिश्चयोत्तरवह्निसाध्यकानुमितित्वघटिततया वह्निसाध्यकान्वयव्याप्तिप्रकारितात्वस्य तादृशधर्मावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितात्वाव्यापकत्वात् हेतौ प्रकृतत्वनिवेशे च वन्ह्यभावव्यापकीभूताभावप्रतियोगितद्धूमवत्तानिश्चयाव्यवहितोत्तरवह्निसाध्यकानुमितित्वावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितात्वाव्यापकत्वेपि न क्षतिः। अथ धूमव्यापकवह्निसमानाधिकरणधूमवत्तानिश्चयस्य धूमत्वव्याप्त्युभयपर्य्याप्तावच्छेदकताकप्रकारताशालिनिश्चयत्वेनैव कारणतया धूमत्वपर्य्याप्तावच्छेदकताकप्रकारताशालिनिश्चयाव्यवहितोत्तरवह्निसाध्यकानुमितित्वघटिततद्धर्मावच्छिन्नकार्य्यत्वाप्रसिद्धिरिति। यत्तु धूमव्यापकवन्हिसमानाधिकरणधूमवानितिज्ञानीयव्यापकतानिरूपकधूमविषयताया धूमत्वपर्य्याप्तावच्छेदकताकत्वात्तमादायैव केवलान्वयिनि यथाश्रुतमेव लक्षणं गमनीयमिति तन्मन्दं तथासति धूमव्यापकवन्हिसमानाधिकरणधूमवान् वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्च पर्वत इति समूहालम्बनपरामर्शाज्जायमानानुमितिकरणस्यान्वयव्यतिरेकिणः केवलान्वयित्वापत्तेः व्यतिरेकव्याप्तिविशिष्टधूमवत्तानिश्चयोत्तरानुमितित्वावच्छिन्नकार्य्यताया धूमत्वपर्य्याप्तावच्छेदकताकप्रकारताशालिनिश्चयोत्तरानुमितित्वावच्छिन्नत्वाभावादिति मैवं। किञ्चिद्धर्म्मावच्छिन्नप्रकारतानिरूपितसाधनतावच्छेदकावच्छिन्नविशेष्यत्वाभिन्नप्रकारताया कार्य्यतावच्छेदकघटकतया निवेशनीयत्वात् तथा च व्याप्तिप्रकारतानिरूपितसाधनतावच्छेदकावच्छिन्नविशेष्यत्वाभिन्नप्रकारतामादाय केवलान्वयिनि लक्षणं सङ्गमनीयं न च व्यतिरकव्याप्तिविशिष्टतद्धूमवत्तानिश्चयस्य कार्य्यताया अपि तत्त्वनिष्ठप्रकारतानिरूपितधूमत्वपर्य्याप्तावच्छेदकताकविशेष्यत्वाभिन्नप्रकारताशालिनिश्चयोत्तरानुमितित्वावच्छिन्नत्वेन उक्ततद्धूमहेतुकव्यतिरेकिनि धूमहेतुकेवलान्वयिन्यव्याप्तिर्दुर्वारैवेति वाच्यम्। अन्वयव्याप्तिविषयिता-

भिन्ना सती व्यतिरेकव्याप्तिविषयताभिन्ना सती हेतुतावच्छेदकविषयताभिन्ना या विषयता तदनिरूपितधूमप्रकारताशालिनिश्चयोत्तरानुमितित्वघटितधर्मावच्छिन्नकार्य्यतायाः प्रवेशात् तथा च वन्ह्यभावव्यापकाभावप्रतियोगितद्धूमवत्तानिश्चयोत्तरानुमितित्वावच्छिन्नकार्य्यतायास्तथाविधविषयताभिन्नतत्तानिष्ठविषयतानिरूपितधूमप्रकारताशालिनिश्चयोत्तरानुमितित्वेनावच्छेद्यतया तादृशकार्य्यताया लक्षणाघटकत्वात् तद्धूमत्वेन व्यतिरेकपरामर्शजन्यानुमितिकरणस्य न धूमहेतुककेवलान्वयित्वानुपपत्तिः । न च धूमव्यापकवन्हिसमानाधिकरणनीलधूमवान् पर्वत इति परामर्शजन्यानुमितिकरणस्य धूमत्वेन केवलान्वयित्वानुपपत्तिः तदनुमितिनिष्ठकार्य्यताया तादृशविषयताभिन्ननीलत्वप्रकारतानिरूपितधूमप्रकारताशालिनिश्चयोत्तरानुमितित्वानवच्छेद्यत्वादितिवाच्यं तादृशपरामर्शस्य धूमव्यापकवन्हिसमानाधिकरणधूमवानितिनिश्चयसाधारणैकरूपेण धूमव्यापकवह्निसमानाधिकरणधूमवत्तानिश्चयत्वनैव तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति जनकतया धूमव्यापकवह्निसमानाधिकरणधूमवानितिज्ञानयितादृशविषयताभिन्नविषयत्वानिरूपितधूमप्रकारताया अपि धूमव्यापकवन्हिसमानाधिकरणधूमप्रकारतात्वेन तदनुमितिनिष्ठकार्य्यतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकतया संग्रहीतुं शक्यत्वात् न च तद्धूमत्वावच्छिन्नाभावत्वघटितव्यतिरेकव्याप्तिप्रकारताकनिर्धर्म्मितावच्छेदककस्यापि ज्ञानस्य जनकतया ज्ञानभेदेन कार्य्यत्वकारणत्वयोर्भेदाभावात्तादृशविषयताभिन्नविषयत्वानिरूपितायास्तज्ज्ञानीयप्रकारताया अपि तादृशजन्यतावच्छेदककोटिप्रविष्टतया व्यतिरेकपरामर्शजन्यताया अपि संग्रहात् उक्ताव्याप्तितादवस्थ्यमिति वाच्यं व्यतिरेकव्याप्तिर्द्विधा साध्याभावव्यापकीभूताभावीयवैशिष्ट्यव्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगित्वरूपा एतज्ज्ञाननिष्ठजनकतायां हेतुतावच्छेदकाविषयतानवच्छेदिका अपरा च साध्याभावव्यापकतावच्छेदकहेतुतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वाश्रयनिरूपितप्रतियोगित्वरूपा एतज्ज्ञाननिष्ठजनकतायाश्च तादृशप्रतियोगित्वधर्म्मितावच्छेदकतात्मकहेतुतावच्छेदकविषयतावच्छेदिका वाच्या अन्यथा व-

ह्न्यभावव्यापकतावच्छेदकधूमत्वावच्छिन्नाभावत्वाश्रयप्रतियोगिघटवानित्यादिनिश्चयोत्तरमप्यनुमित्यापत्तिः तथा च वह्न्यभावव्यापकतावच्छेदकधूमत्वावच्छिन्नाभावत्वाश्रयप्रतियोगिमानितिज्ञानस्य हेतुत्वेन तज्ज्ञानीयनिरुक्तविषयताभिन्नविषयत्वानिरूपितप्रकारतामादाय नोक्ताव्याप्तिः वन्ह्यभावव्यापकाभावप्रतियोगिमानितिज्ञानकालीनप्रकृतहेतुकान्वयव्यतिरेकित्वमेवेति दिक् ॥ ६ ॥

ननु परामर्शानुमित्योः कार्य्यकारणभावे स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वस्य धर्म्मविधया निवेशे गौरवात् सामान्यतो निवेशायोगाच्च अव्यवहितोत्तरत्वं सम्बन्धविधयैव निवेशनीयं तथा च तादृशधूमवत्तानिश्चयविशिष्टानुमितित्वावच्छिन्नं प्रति तादृशधूमवत्तानिश्चयत्वेन विशिष्य हेतुहेतुमद्भावो वाच्यः वैशिष्ट्यञ्चाव्यवहितोत्तरत्वसम्बन्धेन एवञ्च लक्षणघटकीभूताव्यवहितोत्तरत्वमपि सम्बन्धविधयैव प्रवेशनीयमन्यथा प्रकृतहेतुप्रकारकनिश्चयाव्यवहितोत्तरत्वविशिष्टानुमितित्वावच्छिन्नकार्य्यत्वाप्रसिद्धेः तथा च प्रकृतहेतुप्रकारकनिश्चयविशिष्टप्रकृतसाध्यकानुमितित्वघटितधर्म्मावच्छिन्नस्वनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकीभूतप्रकारितात्वव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वकानुमितिकरणत्वमित्युक्तलक्षणार्थः । एवं सति धूमत्वेन धूमहेतुककेवलान्वयितद्धूमहेतुककेवलव्यतिरेकात्मकधूमव्यापकवन्हिसमानाधिकरणधूमवान् पर्वतो वन्ह्यभावव्यापकीभूताभावप्रतियोगितद्धूमवांश्चेत्याकारकसमूहालम्बनपरामर्शे प्रागुक्ताव्याप्तिर्दुर्वारैव तादृशव्यतिरेकपरामर्शविशिष्टवन्हिविधेयकानुमितित्वघटिततया वन्हिविधेयकानुमितिनिष्ठतादृशव्यतिरेकपरामर्शविशिष्टानुमितित्वावच्छिन्नकार्य्यताया अपि उक्तसमूहालम्बनात्मकप्रकृतहेतुप्रकारकनिश्चयविशिष्टप्रकृतसाध्यकानुमितित्वावच्छेद्यतया तादृशकार्य्यतानिरूपितकारणतावच्छेदकीभूतप्रकारितात्वस्य व्यतिरेकव्याप्तिप्रकारितायामपि सत्त्वेन तत्र प्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वाभावादिति चेन्न प्रकृतहेतुप्रकारकनिश्चयविशिष्टप्रकृतसाध्यकानुमितित्वघटितधर्म्मावच्छिन्नस्वनिष्ठकार्य्यतेत्यनेन प्रकृतहेतुप्रकारकनिश्चयत्वावच्छिन्ननिश्चयनिष्ठाव्यवहितोत्तर-

त्वसम्बन्धावच्छिन्नावच्छेदकताकप्रकृतसाध्यकानुमितित्वावच्छिन्न-कार्य्यताया विवक्षितत्वादिति निश्चयत्वं तु हेतुतावच्छेदकाव-च्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यत्वमिति तथा च उ-क्तसमूहालम्बनात्मकनिश्चयनिष्ठकार्य्यतावच्छेदकता द्वयी एका धूम-त्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यतानिष्ठनिरूपकत्व-सम्बन्धावच्छिन्नावच्छेदकतानिरूपिताव्यवहितोत्तरत्वसम्बन्धाव-च्छिन्ना अपरा तद्धूमत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपित-विशेष्यतानिष्ठनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता ए-वञ्च धूमत्वपर्य्याप्तावच्छेदकताकप्रकारत्वान्यप्रकारत्वानिरूपित-विशेष्यत्वनिष्ठनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकताकाव्यवहितो-त्तरत्वसम्बन्धावच्छिन्ननिश्चयनिष्ठावच्छेदकताकस्वनिष्ठप्रकृतसाध्य-कानुमितित्वावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकीभूतप्रकारि-तात्वस्य व्यतिरेकव्याप्तिप्रकारितायामसत्त्वान्न दोषः। न च परा-मर्शानुमित्योः कार्य्यकारणभावे धूमव्यापकवन्हिसमानाधिकरण-धूमादिमत्तानिश्चयत्वेनैव हेतुतया तादृशनिश्चयस्य धूमादिव्यापकं-वन्हिसमानाधिकरणधूमत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपित-विशेष्यतात्मकतया निरुक्तलक्षणघटकीभूतहेतुतावच्छेदकपर्य्याप्ता-वच्छेदकताकप्रकारताघटितनिश्चयत्वादिघटितधर्म्मावच्छिन्नकार्य्य-त्वाप्रसिद्धिरिति वाच्यं व्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्न-विशेष्यत्वाभिन्नधूमनिष्ठप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेद-कावच्छिन्नविशेष्यताया इव पक्षतावच्छेदकावच्छिन्नविशेष्यता-विशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताया अपि विनिगमनावि-रहेणानुमितिजनकतावच्छेदकतया पक्षतावच्छेदकावच्छिन्नविशे-ष्यताविशिष्टहेतुतावच्छेदकपर्य्याप्तावच्छेदकताकप्रकारतानिष्ठनिरू-पकतासम्बन्धावच्छिन्नावच्छेदकताकनिश्चयनिष्ठाव्यवहितोत्तरत्वस-म्बन्धावच्छिन्नावच्छेदकताकप्रकृतसाध्यकानुमितित्वघटितधर्म्माव-च्छिन्नकार्य्यताया विवक्षणीयत्वादिति तथा च तादृशकार्य्यतानि-रूपितकारणतावच्छेदकप्रकारितात्वस्य तद्धूमहेतुकव्यतिरेकव्याप्ति-प्रकारितायामसत्त्वात् न दोषः पक्षतावच्छिन्नविशेष्यतावैशिष्टयञ्च स्वनिरूपितप्रकारतानिष्ठभेदप्रतियोगित्वसम्बन्धावच्छिन्नस्वनिष्ठाव-च्छेदकताकभेदवत्त्वसम्बन्धेन। यद्वा हेतुतावच्छेदकपर्य्याप्तावच्छे-

दकताकप्रकारतानिष्ठावच्छेदकताकभेदनिष्ठावच्छेदकताकनिरूपितत्वनिष्ठावच्छेदकताकाभावनिष्ठावच्छेदकताकविशेष्यतानिष्ठनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकताकनिश्चयनिष्ठाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रकृतसाध्यकानुमितित्वघटितधर्म्मावच्छिन्नस्वनिष्ठकार्य्यताया विवक्षितत्वान्न दोषः । धूमत्वपर्य्याप्तावच्छेदकताकप्रकारतायास्तद्धूमहेतुकव्यतिरेकपरामर्शजन्यतावच्छेदककोट्यप्रविष्टत्वात् धूमत्वपर्य्याप्तावच्छेदकताकत्वञ्च अन्वयव्याप्तिविषयताभिन्ना सती व्यतिरेकव्याप्तिविषयताभिन्ना सती धूमत्वविषयताभिन्ना या विषयता तदनिरूपितत्वं नातो धूमव्यापकवह्निसमानाधिकरणधूमवान् वह्न्यभावव्यापकीभूताभावप्रतियोगिमांश्चेत्याकारकपरामर्शदशायां अन्वयव्यतिरेकिण्यतिव्याप्तिरितिध्येयम् ॥ ७ ॥

अथ हेतुतावच्छेदकपर्य्याप्तावच्छेदकताकप्रकारतानिष्ठावच्छेदकताकाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नज्ञाननिष्ठावच्छेदकताकप्रकृतसाध्यकानुमितित्वघटितधर्म्मावच्छिन्नकार्य्यतानिवेशेनैव सामञ्जस्ये प्रकृतहेतुप्रकारकनिश्चयत्वप्रवेशो व्यर्थ इति । न च वन्ह्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वतः अभावव्यापकवह्निसमानाधिकरणाभाववांश्चेत्याकारकसमूहालम्बनपरामर्शाज्जायमानानुमितिकरणस्याभावहेतुककेवलान्वयित्वात्तत्राव्याप्तिः वन्ह्यभावव्यापकाभावप्रतियोगिधूमवत्तानिश्चयोत्तरवह्निसाध्यकानुमितित्वस्यापि अभावज्ञानाव्यवहितोत्तरवान्हिविधेयकानुमितित्वघटिततया प्रकृतसाध्यकान्तयव्याप्तिप्रकारतात्वस्य तादृशधर्म्मावच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकप्रकारितात्वाव्यापकत्वात् निश्चयत्वप्रवेशे च तादृशपरामर्शस्य विशेषणतावच्छेदकविधयैवाभावज्ञानानां कारणतया तदंशे सन्देहाकारविशिष्टवैशिष्ट्यबुद्ध्यनुत्पादात् तदंशे निश्चयत्वनिवेशस्याप्रयोजनकत्वात् न दोषइति वाच्यम् पक्षविशेष्यतानिरूपितहेतुप्रकारतानिवेशेनैव उक्तदोषवारणसम्भवात् किञ्च उक्तस्थले धूमहेतुकव्यतिरेकपरामर्शजन्यतायां हेतुतावच्छेदकीभूताभावत्वपर्य्याप्तावच्छेदकताकप्रकारतानिष्ठावच्छेदकताकत्वाभावादेव तज्जन्यताया धर्तुमशक्यत्वेन उक्ताव्याप्त्यभावात् एतेनाभावः कालवृत्तिः वृत्तित्वादि-

त्यत्र पर्वतवृत्तित्वादिना व्यतिरेकदशायामव्याप्तिवारणाय तदुपादानं तादृशव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकनिश्चयजन्यतायां कालवृत्तित्वरूपसाध्याभावव्यापकताघटकतया अभाववृत्तित्वात्वावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नस्यावच्छेदकघटकत्वात् तादृशप्रकारितायां च प्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वाभावादित्यपि परास्तम् । अत्राहुः । यत्र संयोगेन वह्नेः साध्यत्वं प्रतियोगितासम्बन्धेन वह्नेर्हेतुत्वं तत्र वह्निव्यापकवह्निसमानाधिकरणवह्निमान् अभावव्यापकीभूताभावप्रतियोगिधूमवांश्चेत्याकारकसमूहालम्बनपरामर्शाज्जायमानानुमितिकरणं वह्नित्वेन वह्निहेतुककेवलान्वयिन्यव्याप्तिः तादृशव्यतिरेकपरामर्शजन्यताया अपि साध्याभावव्यापकताघटकतया प्रकृतहेतुभूतवह्निप्रकारताशालिज्ञानाव्यवहितोत्तरानुमितित्वघटितधर्मावच्छिन्नत्वात् एवमभावो वह्निमान् वह्न्यभाववद्वृत्तित्वादित्यादौ धूमत्वादिना व्यतिरेकितादशायामव्याप्तिः धूमादिहेतुकव्यतिरेकपरामर्शजन्यत्वस्यापि व्यतिरेकव्याप्तिघटकीभूतसाध्याभावव्यापकताघटकप्रकृतहेतुभूतवन्ह्यभाववद्वृत्तित्वप्रकारताशालिज्ञानाव्यवहितोत्तरानुमितित्वावच्छिन्नत्वात् अतस्तद्वारणाय निश्चयपदं तथा चोक्तस्थले व्यतिरेकपरामर्शीयसाध्याभावव्यापकताघटकतया प्रकृतहेतुप्रकारताया निश्चयीयत्वेन जन्यतानवच्छेदकत्वात् न दोषः न च निश्चयत्वमनिवेश्य मुख्यविशेष्यतानिरूपितत्वस्य प्रकृतहेतुप्रकारतायां निवेशेपि उक्ताव्याप्तिवारणं सम्भवतीति वाच्यं यत्र स्थलविशेषे पक्षमुख्यविशेष्यकपरामर्शोऽप्रसिद्धः तत्र तदङ्कुरक्षेत्रवान् देश इत्याकारकज्ञानेऽव्याप्तिप्रसङ्गादितिध्येयम् ।

ननु तथापि प्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यविधेयकत्वघटितधर्मावच्छिन्नत्वेनैव कार्यता प्रवेश्यताम् अनुमितित्वान्तर्भावो व्यर्थ इति चेन्न तथासत्यापाद्यापादकभेदेन व्याप्तिज्ञानतर्कयोर्हेतुहेतुमद्भावभेदोऽवश्यं वक्तव्यः अन्यथा वह्निविधेयकापत्तिं प्रति वह्निव्याप्यधूमवत्तानिश्चयत्वेन हेतुत्वे वह्निव्याप्यालोकवान् ह्रद इत्याकारकनिश्चयजन्ये ह्रदो यद्यालोकवान् स्यात् तदा वह्निमान् स्यात् इत्याकारकतर्के व्यभिचारापत्तेः तथा च वह्निव्याप्यधूमवत्तानिश्चयोत्तरवह्निविधेयकापत्तिं प्रति तादृशनिश्चयत्वेन

वह्निव्याप्यालोकवत्तानिश्चयोत्तरापत्तौ तादृशनिश्चयत्वेन हेतुत्वम् एवंच वह्निव्याप्यधूमवत्तानिश्चयोत्तरवह्निविधेयकापत्तित्वस्यापि प्रकृतहेतुप्रकारकनिश्चयोत्तरवह्निविधेयकत्वघटिततया तादृशापत्तिकरणस्यापि केवलान्वयित्वापत्तेः न च लक्षणे स्वपदस्याग्रिमानुमितिपरत्वेन स्वयं वक्तव्यतया कुतस्तर्ककरणस्य केवलान्वयित्वापत्तिरिति वाच्यं तत्रानुमितिपदस्योपलक्षणतया प्रवेशादितिध्येयम् ।

ननु हेतुतावच्छेदकपक्षतावच्छेदकव्याप्तिघटकपदार्थीयप्रकारतानामपि तादृशजनकतावच्छेदकत्वेन तत्रान्वयव्याप्तिप्रकारितात्वाभावादसम्भवः । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारत्वाभिन्नविशेष्यतानिरूपितनिरुक्तजनकतावच्छेदकप्रकारतात्वव्यापकत्वनिवेशेऽभावत्वावच्छिन्नपक्षकवह्निसाध्यकवृत्तित्वादिहेतुककेवलान्वयिनि व्यापकताघटकाभावविशेष्यतानिरूपितवृत्तित्वप्रकारत्वाभिन्नविशेष्यतानिरूपितहेत्वधिकरणनिरूपितत्वप्रकारताया अपि तादृशजनकतावच्छेदकप्रकारतारूपत्वेन तत्रान्वयव्याप्तिप्रकारितात्वाभावादव्याप्तिः । एवं हेतुतावच्छेदकप्रकारताया अपि तादृशत्वात् तत्रान्वयव्याप्तिप्रकारितात्वाभावादेवासम्भवतादवस्थ्यं च पक्षविशेष्यतानिरूपितविषयतानिरूपितहेतुतावच्छेदकविषयतातिरिक्ततादृशजनकतावच्छेदकप्रकारितात्वव्यापकतानिवेशेप्युक्ताव्याप्तितादवस्थ्यं जलं निर्गन्धमित्यादिग्रन्थासङ्गतिश्च । अत्र पृथिवीत्वाभावव्यतिरेकव्याप्तिविषयतायां हेतुतावच्छेदकविषयतातिरिक्तत्वाभावादिति न च तादृशजनकतावच्छेदकप्रकारतापदेन पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितप्रकारत्वाभिन्नविशेष्यतानिरूपितप्रकारतात्वावच्छिन्नतादृशजनकतावच्छेदकताश्रयप्रकारतात्वस्य विवक्षितत्वान्न दोषः पक्षतावच्छेदकहेतुतावच्छेदकप्रकारत्वादेरवच्छेदकतात्वावच्छिन्नतादृशजनकतावच्छेदकत्वेपि प्रकारतात्वावच्छिन्नतादृशजनकतावच्छेदकत्वाभावात् हेतुप्रकारतायाश्च प्रकारतात्वावच्छिन्नतादृशजनकतावच्छेदकत्वेपि पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविषयतानिरूपितत्वाभावादिति वाच्यम प्रकृतहेतुप्रकारकत्वनिवेशवैयर्थ्यात् यत्र स्थलविशेषे पक्षमुख्यविशेष्यकपरामर्शोऽप्रसिद्धस्तत्राव्याप्तिश्च इति चेन्न अन्व-

यव्याप्तिप्रकारितापदेन प्रकृतसाध्यान्वयव्याप्तिविशिष्टहेतुमत्पक्षवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रकारितात्वस्य विवक्षितत्वान्न काप्यनुपपत्तिः तथा च जलं निर्गन्धमित्यादौ पृथिवीत्वव्यापकाभावप्रतियोगिमज्जलमिति परामर्शाज्जलं निर्गन्धं पृथिवीत्वाभाववच्चेत्यनुमितिर्जायते तत्र परामर्शे जलविशेषणतापन्नप्रतियोगिविशेषणतापन्नप्रतियोगित्वे सामानाधिकरण्यप्रकारत्वनिरूपितविशेष्यतावच्छेदकता पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकता च इति विशेषणताद्वयी निर्गन्धत्वानुमितिजनकतावच्छेदिका तयोरन्या प्रतियोगित्वप्रकारता सा च निर्गन्धत्वानुमितिजनकतायां नावच्छेदिका किन्तु पृथिवीत्वाभावानुमितिजनकतावच्छेदिका इति साध्यविषयकत्वानुक्तौ सापि धर्तुं शक्यते तस्याश्च निरुक्तसाध्यान्वयव्याप्तिप्रकारितात्वाभावात् जलं निर्गन्धमित्यादिग्रन्थसङ्गतिः। अथ निरुक्तपृथिवीत्वाभावानुमितौ पृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नप्रकारकनिश्चयत्वेनैव हेतुत्वात् कथं तादृशप्रतियोगित्वप्रकारतामादाय दोष इति चेन्न पृथिवीत्वव्यापकाभावप्रतियोगित्वरूपव्याप्तेर्विशेष्ये विशेषणमिति रीत्या भानेऽप्यनुमितिस्वीकारात् निरुक्तप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव हेतुत्वात् तादृशप्रकारताया अपि जनकतावच्छेदकत्वादिति । अथवा परामर्शानुमित्योर्ज्ञानभेदेन कार्यकारणभावस्याभिन्नतया तादृशानुमितिनिष्ठपृथिवीत्वाभावत्वावच्छिन्नविधेयकानुमितित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकीभूतायां पृथिवीत्वाभावव्यापकाभावप्रतियोगिमज्जलमित्याकारकज्ञानीयप्रकारतायां निर्गन्धत्वरूपप्रकृतसाध्यव्याप्तिविशिष्टहेतुमत्पक्षवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपित—जनकतावच्छेदकत्वाभावाज्जलं निर्गन्धमित्यादिग्रन्थसङ्गतिरिति ध्येयम् ॥

अथ प्रकृतहेतुप्रकारकनिश्चयोत्तरप्रकृतसाध्यकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणताव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारिताकानुमितिकरणत्वं केवलान्वयित्वमित्येवास्तु लक्षणम् अवच्छेदकीभूतप्रकारितात्वपर्यन्तानुधावनं व्यर्थ-

मिति । न चान्वयव्यतिरेकिन्यतिव्याप्तिरिति वाच्यं स्वरूपयोग्यत्वरूपतादृशकारणताया अन्वयव्याप्त्यनवगाहिव्यतिरेकपरामर्शेऽपि सत्त्वात्तत्र साध्यान्वयव्याप्तिप्रकारितात्वाभावात् । न च धूमव्यापकवन्हिसमानाधिकरणधूमकालीनपर्वतो वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवानित्याकारकव्यतिरेकपरामर्शस्यापि केवलान्वयित्वापत्तिः तादृशकार्यतानिरूपितकारणतावतः तस्य प्रकृतसाध्यान्वयव्याप्तिप्रकारितावत्त्वात् तादृशकारणताव्यापकधर्मितावच्छेदकतानात्मकसाध्यान्वयव्याप्तिप्रकारिताकेत्युक्तावपि धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतो घटवान् इत्याकारकान्वयपरामर्शेऽव्याप्तिर्दुर्वारा तत्र घटधर्मितावच्छेदकविधयैव तादृशव्याप्तिमद्धूमत्वप्रवेशात् इति वाच्यं प्रकृतसाध्यान्वयव्याप्तिप्रकारितापदेन तादृशव्याप्तिविशिष्टयहेतुमत्पक्षावगाहिज्ञानजनकतावच्छेदकप्रकारित्वस्य विवक्षितत्वादिति । मैवं तादृशकारणताव्यापकत्वनिवेशे यादृशस्थलविशेषेऽन्वयव्याप्तिमनवगाह्य व्यतिरेकरामर्शः कदापि न जायते किं तु अन्वयव्याप्तिमवगाह्यैव जायते अन्वयपरामर्शश्च व्यतिरेकव्याप्त्यनवगाह्यापि जायते तत्रान्वयव्यतिरेकिन्यतिव्याप्त्यापत्तेः तत्र तादृशकार्यतानिरूपितकारणतावज्ज्ञानमात्रस्यैव साध्यान्वयव्याप्तिप्रकारितावत्त्वात् अस्माकं तु तत्र तादृशकारणतावच्छेदकीभूतव्याप्तिप्रकारितायामन्वयव्याप्तिप्रकारितात्वाभावात् नातिव्याप्तिः न च तादृशस्थले व्यतिरेकपरामर्शस्य कारणत्वमेव नास्तीति वाच्यम् अन्वयव्याप्त्यंशे भ्रमत्वग्रहकालेऽनुमित्यनुत्पत्त्यर्थं तत्कारणत्वस्यावश्यकत्वादिति ध्येयम् । एतेन व्यतिरेकव्याप्तिप्रकारित्वाव्यापकतावच्छेदकतादृशानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकत्वकेत्युक्तावेव सामञ्जस्ये गुरुतराभिधानमनुचितमित्यपि प्रत्युक्तम् उक्तस्थले केवलान्वयिन्यव्याप्तेः । यत्र व्यतिरेकभ्रमोऽप्रसिद्धः तत्रान्वयिन्यव्याप्तेश्च अत एव तादृशानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकतानवच्छेदकव्यतिरेकव्याप्तिप्रकारतात्वकानुमितिकरणत्वं स्वजनकज्ञानत्वव्यापकव्यतिरेकव्याप्त्यवगाहित्वाभावकानुमितिकरणत्वं वा कथं नोक्तं परकल्पे जनकत्वं फलोपहितं वाच्यम् इत्यपि स-

माहितं व्यतिरेकव्याप्तिभ्रमाप्रसिद्धिस्थलेऽव्याप्त्यापत्तेरिति ध्येयम् ।

लिङ्गतावच्छेदकविशिष्टस्य यज्ज्ञाने इतरत्वव्यापकाभावप्रतियोगित्वप्रकारित्वानवच्छिन्नं प्रकृतहेतुसाध्यकानुमितिजनकत्वं तज्ज्ञानत्वं केवलान्वयित्वमिति जगदीशः । लिङ्गतावच्छेदकविशिष्टचस्येत्यनुक्तौ इतरव्यापकाभावप्रतियोगित्वहेतुकेऽव्याप्तिः तत्रान्वयव्याप्तिज्ञाननिष्ठजनकताया इतरव्यापकाभावप्रतियोगित्वप्रकारित्वावच्छिन्नत्वादिति । न च तन्निवेशेऽपि तत्र तद्दोषतादवस्थ्यमिति वाच्यं यज्ज्ञाने लिङ्गविषयकत्वमनिवेश्य इतरव्यापकाभावप्रतियोगित्वप्रकारतायां लिङ्गतावच्छेदकावच्छिन्नविशेष्यित्वावच्छिन्नत्वस्य विवक्षितत्वादिति । न चैवं समूहालम्बनव्याप्तिद्वयज्ञानाद्यत्रानुमितिः तत्रान्वयव्यतिरेकिण्यतिव्याप्तिः तत्रान्वयव्याप्तिज्ञानत्वावच्छिन्नयत्किञ्चिज्जनकतायामितरव्यापकाभावप्रतियोगित्वप्रकारित्वानवच्छिन्नत्वादिति वाच्यम् यज्ज्ञाननिष्ठजनकतासामान्ये तादृशप्रकारित्वानवच्छिन्नत्वस्य विवक्षितत्वात् । अथैवमपि यत्र क्रमिकव्याप्तिज्ञानाभ्यामेकैवानुमितिर्जनिता तत्रान्वयव्याप्तिज्ञानव्यक्तेरतिव्याप्तिः । न च तादृशस्थलमेव न सम्भवति आदौ व्यतिरेकव्याप्तिज्ञानेन तदनन्तरज्ञानकालेऽनुमित्युत्पत्तेरिति वाच्यम् सिद्ध्यादिप्रतिबन्धकवशात् तादृशस्थलसम्भवात् । न च तत्रैतादृशज्ञानव्यक्तेः केवलान्वयित्वमिष्टमेवेतिवाच्यम् अनुभवविरोधात् न च यज्ज्ञानकालीनज्ञाननिष्ठजनतासामान्ये तादृशप्रकारित्वानवच्छिन्नत्वं तत्त्वमिति विवक्षितमिति न कोपि दोष इति वाच्यम् तथा सति यत्र व्यतिरेकव्याप्तिज्ञाननाशस्ततोऽनुमितिस्तत्रान्वयव्याप्तिज्ञानेऽव्याप्त्यापत्तेरिति चेन्न लिङ्गतावच्छेदकावच्छिन्नलिङ्गज्ञाननिष्ठप्रकृतसाध्यकयदनुमितिजनकतासामान्ये तादृशप्रकारित्वानवच्छिन्नत्वं तदनुमितिकरणत्वं केवलान्वयित्वमित्यस्य विवक्षितत्वान्न दोष इतिध्येयम् । अथैवं जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादित्यादौ अव्याप्तिः तत्र निर्गन्धत्वानुमितिजनकतायामपि तादृशप्रतियोगित्वप्रकारित्वावच्छिन्नत्वादिति चेन्न हेतुतावच्छेदकविषयताया धर्मितावच्छेदकतात्वेनावच्छेदकत्वात् प्रकारितात्वेनावच्छेदकतालाभार्यं प्रकारितापदोपदानमितिध्येयम् ॥

यत्प्रकारकज्ञानत्वेन व्यभिचारधीप्रतिबन्धकत्वं तत्प्रकारकपक्षधर्मतानिश्चयत्वेनैव हेतुत्वमिति जगदीशः । ननु अभावांशे वह्नित्वेनान्यावगाहिवह्न्यभाववदवृत्तिधूमवान् पर्वत इतिज्ञानस्य जनकत्वानुरोधेन व्यभिचारधीप्रतिबन्धकतावच्छेदकीभूतप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव हेतुत्वं वाच्यम् एवञ्च निर्धर्म्मितावच्छेदकसाध्याभाववदवृत्तिमान्पर्वत इति ज्ञानस्य व्यभिचारज्ञानाप्रतिबन्धकतयाऽनुमित्यनुदयापत्तेरिति चेन्न मुख्यविशेष्यतानिरूपितप्रकारतानिष्ठव्यभिचारधीप्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणरूपवत्प्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेन एव हेतुत्वादिति तथा च साध्याभाववदवृत्तिमान् पर्वत इति ज्ञानस्य नासङ्ग्रहः ।

प्रकृतहेतुप्रकारताकनिश्चयोत्तरप्रकृतसाध्यविधेयकानुमितित्वघटितधर्मावच्छिन्नस्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतप्रकारितात्वासमानाधिकरणप्रकृतसाध्यान्वयव्याप्तिप्रकारितात्वाभाववकानुमितिकरणत्वस्य लक्षणान्तरस्य लघुत्वेपि यथाश्रुतदीधितिग्रन्थानुरोधात्तथा नोक्तमिति ध्येयम् ॥ ० ॥

इति कालीशङ्करसिद्धान्तवागीशविरचितं
जागदीशीकेवलान्वयिक्रोडपत्रम् ।



ननु निरुक्तयथार्थज्ञानविषयतामात्रं समूहालम्बनज्ञानविषयतामादाय उदासीनेऽतिप्रसक्तमतो यथार्थज्ञाननिष्ठस्यानुमितिकारणीभूताभावप्रतियोगित्वस्य विषयविधया अवच्छेदकत्वमेवार्थो वाच्यः स च ह्रदो वह्निमान् धूमादित्यादौ बाधितहेतावव्याप्त इत्यत आह यथाश्रुतमिति जगदीशेनोक्तम् । अत्रेदमालोचनीयं तत्सम्बन्धावच्छिन्नप्रकारताशालिनिश्चयोत्तरतत्पक्षकतत्साध्यकानुमितित्वघटितधर्मावच्छिन्नकार्यतानिरूपकसम्बन्धिकारणीभूताभावप्रतियोगित्वस्य विषयविधया अवच्छेदकत्वमेव तत्सम्बन्धेन तत्पक्षकतत्साध्यकस्थाने दुष्टत्वमिति लक्षणादरे वह्न्यभाववद्ह्रदादेरपि ह्रदपक्षकवह्निसाध्यकस्थाने संयोगेन दुष्टत्वस्येष्टत्वात् वह्न्यभाववद्ह्रदादेरपि क्वचिद्धेतुत्वात् अतो दोषेऽतिव्याप्तिमनभिधाय दुष्टहेतावव्याप्तिर्दर्शिता पर्वतपक्षकवह्निसाध्यकस्थाने समवायादियथाकथञ्चित्सम्बन्धेन धूमादिसकलहेतोरेव दुष्टत्वात् सम्बन्धानियन्त्रितलक्षणस्य तत्पक्षकतत्साध्यकदुष्टेतरभेदसाधकत्वानुपपत्तिरतस्तत्सम्बन्धावच्छिन्नप्रकारताशालिनिश्चयोत्तरानुमितित्वघटितधर्मावच्छिन्नत्वस्य कार्यतायां निवेशः । यद्यपि ह्रदो वह्निमान् धूमादित्यादौ धूमादिहेतोरपि तादृशकार्यतानिरूपकसम्बन्धियद्वह्निव्याप्यधूमवान् ह्रद इति ज्ञानं तत्कारणीभूताभावप्रतियोगित्वस्य ह्रदो धूमाभाववान् धूमो ह्रदावृत्तिरित्यादिज्ञाने सत्त्वात् तादृशप्रतियोगित्वस्य विषयतया ऽवच्छेदकत्वं धूमहेतावपीति तत्रातिप्रसङ्गस्तथापि तादृशकार्यतानिरूपकसम्बन्धिज्ञानं यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नप्रकारकं तद्धर्मावच्छिन्नाभावप्रकारकत्वावच्छिन्नप्रतिबन्धकत्वस्य मुख्यविशेष्यतयाऽवच्छेदकत्वमेव लक्षणं कर्तव्यमन्यथा शब्दाधिकरणत्वं गगनान्यत्वव्याप्यशब्दाधिकरणत्वाभाववदिति स्वरूपसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयोत्तरानुमितित्वघटितधर्म्मावच्छिन्नकार्य्यतानिरूपकसम्बन्धि यत्परामर्शात्मकं ज्ञानं तत्प्रतिबन्धकत्वस्य शब्दाधिकरणत्वं गगनान्यत्वाभाववद्वृत्तिगगनान्यत्वाभाववद्वृत्तित्वं शब्दाधिकरणत्वे इत्यादिज्ञाने सत्त्वात् तत्प्रतिबन्धकताया विषयविधयाऽवच्छेदकीभूतत्वाद्वृत्तित्वस्य शब्दाधिकरणत्वपक्षकगगनान्यत्वसाध्यकस्थले स्वरूपसम्बन्धेन वृत्तित्वरूपहेतोरपि दुष्टत्वा-

पत्तेः । तथा च शब्दाधिकरणत्वं गगनान्यत्वव्याप्यशब्दाधिकरणत्ववदिदं ज्ञानं शब्दाधिकरणत्वे गगनान्यत्वव्याप्यवगाहितदंशे तदभावावगाहित्वावच्छिन्ना या शब्दाधिकरणत्वं गगनान्यत्वव्यभिचारीतिज्ञानीयप्रतिबन्धकता तस्या मुख्यविशेष्यतयावच्छेदकत्व शब्दाधिकरणत्व एव तत्र च शब्दाधिकरणत्वपक्षकगगनान्यत्वसाध्यकस्थले स्वरूपसम्बन्धेन दुष्टत्वमिष्टमेव एवं च ह्रदो वह्निमान् धूमादित्यादौ अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धि ह्रदो वह्निव्याप्यधूमवानितिज्ञानं ह्रदत्वावच्छिन्ने धूमत्वावच्छिन्नप्रकारकं तदंशे तदभावप्रकारत्वावच्छिन्नप्रतिबन्धकत्वं न ह्रदावृत्तिर्धूम इति ज्ञाने किं तु ह्रदो धूमाभाववानितिज्ञान एव इति तत्प्रतिबन्धकताया मुख्यविशेष्यतया अवच्छेदकत्वं न धूमे इति बाधितहेतावव्याप्तिः सुस्थिरा । न च हेतुविशेष्यकपरामर्शस्य कारणतया हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नप्रकारताशालिनिश्चयघटितलक्षणं हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नविषयताशालिनिश्चयघटितलक्षण तत्सम्बन्धेन दुष्टत्वस्य कर्तव्यं तथा च तादृशकार्य्यतानिरूपकसम्बन्धि यत् ह्रदे वह्निव्याप्यधूम इति ज्ञानं तत्प्रतिबन्धकताया धूमो ह्रदावृत्तिरेवं तादृशाधेयतासम्बन्धावच्छिन्नप्रतियोगिताकह्रदाभाववान् धूम इति ज्ञाने सत्त्वात्तस्य मुख्यविशेष्यतया अवच्छेदकत्वं धूमेऽपीति नाव्याप्तिरिति वाच्यं तन्मतानुसरणे संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नवह्निव्याप्तिप्रकारेण धूमस्य पर्वतविशेष्यकसंयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन यज्ज्ञानं तस्यापि संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयोत्तरानुमितित्वावच्छिन्नकार्यतानिरूपकसम्बन्धित्वेन एव समवायसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतप्रकारकं यत् समवायसम्बन्धावच्छिन्नवह्निव्याप्तिविशिष्टविशेष्यकज्ञानं तस्यापि संयोगसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नधूमविषयताशालिनिश्चयोत्तरानुमितित्वावच्छिन्नकार्यतानिरूपकसम्बन्धित्वेन प्रतिबन्धकं संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन वह्निव्यभिचारि इति ज्ञानं यच्च धूमः समवायसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतावृत्तिरितिज्ञान तन्मुख्यविशेष्य-

त्वस्य धूमे सत्त्वात् पर्वतपक्षकवह्निसाध्यकस्थले संयोगेन धूमस्यापि दुष्टत्वापत्तिरिति सङ्क्षेपः ॥ ० ॥ अत्रानुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरमिति दीधितिः । अत्रानुमितिशब्दस्य लाक्षणिकत्वापाताद्याचार्यानुमितिमात्रस्यैव लिङ्गोपधानमितिमतमनुसृत्य व्याचष्टे साध्यव्याप्येति जगदीशः । अत्रेयमनुपपत्ति । ननु पर्वतपक्षकवह्निविधेयकधूमहेतुकस्थाने वह्न्यभाववद्ह्रदस्य दोषत्वापत्तिः पर्वतपक्षकवह्निविधेयकानुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वस्य पर्वतो वह्निमान् ह्रदश्च तथा इत्याकारकसमूहालम्बनानुमितावपि सत्त्वेन तत्प्रतिबन्धकयथार्थज्ञानविषयत्वसत्त्वात्तत्परित्यज्य लक्षणापत्तिः सन्दर्भविरुद्धा न च तत्पक्षकतत्साध्यकानुनिष्ठकार्यतानिरूपकसम्बन्धित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताश्रयीभूतयथार्थज्ञानविषयत्वं वक्तव्यं तावतैव समूहालम्बनानुमितिमादायोक्तदोषे नातिव्याप्तिरिति वाच्यम् तथा सति ह्रदो वह्निमान् धूमादित्यादिस्थलीयबाधाद्यव्याप्तिस्तादृशानुमितिनिष्ठकार्यतानिरूपकसम्बन्धिनि परामर्शे बाधप्रतिबध्यताविरहेण एवं तादृशसम्बन्धिन्यामनुमितौ व्यभिचारस्वरूपासिद्ध्यादिप्रतिबध्यताविरहेण तादृशप्रतिबध्यतायां व्यापकत्वविरहात् किन्तु परामर्शानुमित्युभयविरोधितया आश्रयासिद्ध्यादौ लक्षणसमन्वयः । न च तादृशानुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वावच्छिन्नप्रतिबध्यतानिरूपितत्वं लक्षणे प्रवेश्यमप्रसिद्धेः इति चेत्तादृशानुमितिमादाय वह्न्यभाववद्ह्रदे ऽतिव्याप्तिवारणाय तादृशानुमितिनिष्ठकार्यताविशिष्टविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताश्रयीभूतयथार्थज्ञानविषयत्वमेव लक्षणार्थः कार्यतावैशिष्ट्यं च स्वावच्छेदकत्वस्वनिरूपितकारणतावच्छेदकत्वान्यतरसम्बन्धेन । तथा चान्यतरघटकस्वावच्छेदकत्वसम्बन्धेन कार्यताविशिष्टा या पर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारितात्मकविषयिता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयत्वस्य वह्न्यभाववद्ह्रदे सत्त्वेन नातिव्याप्तिः ॥

ननु तथापि स्वमते वह्निसाध्यकधूमहेतुकानुमि-

तिं प्रति शुद्धधूमत्वावच्छिन्नव्यापकताविशिष्टवह्नित्वावच्छि-न्नसमानाधिकरणनीलधूमवान् इति निश्चयस्यापि हेतुत्वेन ता-दृशस्थाने नीलधूमाभाववत्पक्षेऽतिव्याप्तिः तादृशानुमितित्वा-वच्छिन्नकार्यतानिरूपितकारणतावच्छेदकीभूता या नीलधूमत्वा-वच्छिन्नप्रकारता तन्निरूपितप्रकारितात्मकविषयित्वावच्छिन्नप्र-तिबध्यतानिरूपितप्रतिबन्धकताशालिनीलधूमाभाववत् पक्ष इति ज्ञानविषयत्वसत्त्वात् एवं एकत्र द्वयमितिरीत्या ह्रदे धूमव्यापकवह्नि-समानाधिकरणधूमः वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमश्च-इत्युभयावगाहि यज्ज्ञानं तस्यापि ह्रदो वह्निमानित्यनुमितिं प्रति हेतुतया तादृशोभयाभाववद्ह्रदेऽतिव्याप्त्यापत्तेश्च तादृशानु-मितित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकीभूता या धू-मत्वावच्छिन्नविषयता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्ध-कताशालि—उभयाभाववान् ह्रद इति ज्ञानविषयत्वसत्त्वात् न चोक्तान्यतरघटकस्वनिरूपितकारणतावच्छेदकत्वं विहाय स्व-निरूपितकारणतानवच्छेदकीभूतविषयताशून्यज्ञानीयत्वं तादृशान्य-तरघटकं वक्तव्यं तावतैव वह्निव्याप्यनीलधूमवान् ह्रद इति ज्ञा-ने स्वनिरूपितकारणतानवच्छेदकीभूतनीलधूमत्वावच्छिन्नविषयिता-सत्त्वेन तादृशज्ञानीयविषयतायाः स्वनिरूपितकारणतानवच्छेदक-विषयताशून्यज्ञानीयत्वं नास्ति एकत्र द्वयमितिरीत्या ज्ञाने स्व-पदेनान्वयपरामर्शोत्तरानुमितित्वावच्छिन्नकार्यताया उपादाने त-न्निरूपितकारणतानवच्छेदकीभूतव्यतिरेकव्याप्तिविशिष्टहेतुविषय-तायाः सत्त्वेन एवं स्वपदेन व्यतिरेकपरामर्शोत्तरानुमिति-त्वावच्छिन्नकार्यताया उपादाने तन्निरूपितकारणतानवच्छेद-कीभूतान्वयव्याप्तिविशिष्टहेतुप्रकारतायाः सत्त्वेन तादृशज्ञानी-यविषयितायाः न स्वनिरूपितकारणतानवच्छेदकविषयिताशून्य-ज्ञानीयत्वमतो न तादृशान्यतरसम्बन्धेन तादृशकार्यताविशिष्टवि-षयतामादाय नोक्तस्थलद्वयेऽतिव्याप्तिरिति वाच्यं वह्निव्या-प्यधूमाभाववद्ह्रदेऽतिव्याप्त्यापत्तेः वह्निव्याप्यधूमवान् ह्रद इति ज्ञानीयविषयितायां स्वनिरूपितकारणतानवच्छेदकीभूतविषयता-शून्यज्ञानीयत्वात् तादृशान्यतरसम्बन्धेन कार्यताविशिष्टं य-त्तज्ज्ञानीयवह्निव्याप्यत्वावच्छिन्नविषयत्वं तदवच्छिन्नप्रतिबध्य-

तानिरूपितप्रतिबन्धकताशालिवह्निव्याप्यधूमाभाववान् ह्रद इति ज्ञानविषयत्वसत्त्वात् इति चेदत्र केचित् । तादृशकार्यताविशिष्टविषयित्वावच्छिन्नप्रतिबध्यतायां अनुमितिजनकतावच्छेदकीभूतमुख्यविशेष्यत्वावच्छिन्नत्वपक्षधर्मिकहेतुमत्ताग्रहत्वाव्यापकत्व एतदुभयाभाववैशिष्ट्यस्य निवेशनीयत्वात् तथा च वह्निव्याप्याभाववान् ह्रद इत्यादिज्ञानस्य प्रतिबन्धकीभूतं यद्वह्निव्याप्यवान् ह्रद इति ज्ञानं तन्निष्ठप्रतिबध्यतायां तादृशप्रकारतावच्छेदकीभूतमुख्यविशेष्यत्वावच्छिन्नत्वपक्षधर्मिकहेतुमत्त्वाग्रहत्वाव्यापकत्वोभयोः सत्त्वादुभयाभावविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं वह्निव्याप्याभाववान् ह्रद इति ज्ञाने नास्तीति लक्षणापत्तिरेवाभिहिता जगदीशेनेति सर्वं सुस्थमित्याहुः । तच्चिन्त्यं एवमपि एकत्र द्वयमितिरीत्या हेतुतावच्छेदकं धर्मितावच्छेदकीकृत्य वह्निव्याप्तिघटौ प्रकारीभूय तादृशव्याप्तिघटवद्धूमवान पर्वत इत्यादिनिश्चयनिष्ठतादृशव्याप्तिघटोभयाभाववानितिनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतायां तादृशजनकतावच्छेदकीभूतमुख्यविशेष्यत्वावच्छिन्नत्वविरहादेव तादृशोभयाभावसत्त्वेन वह्निव्याप्तिघटोभयाभाववद्धूमे ऽतिव्याप्तिः यदि स्वनिरूपितजनकतावच्छेदकविषयिताशून्यज्ञानीयत्व स्वनिरूपितत्वान्यतरसम्बन्धेन तादृशकार्यताविशिष्टं यद्विषयित्वं तदवच्छिन्नप्रतिबध्यतानिवेशेऽपि तादृशोभयाभाववद्धूमे नातिव्याप्तिरित्युच्यते तदा वह्निव्याप्यधूमवत्पर्वतवह्निव्याप्त्युभयाभाववद्धूमेऽतिव्याप्तेर्दुर्वारत्वात् वह्निव्याप्यधूमवत्पर्वतवह्निव्याप्तिरेकत्रद्वयमिति रीत्या हेतुतावच्छेदकावच्छिन्ने प्रकारीभूय वह्निव्याप्यधूमवत्पर्वतवह्निव्याप्तिमद् धूमवानितिज्ञानीयप्रतिबध्यतायां सत्त्वादिति कृतं पल्लवितेन । अन्ये तु स्वानवच्छेदकत्वे सति स्वनिरूपितकारणतानवच्छेदिका या विषयिता तच्छून्यज्ञाननिष्ठप्रतिबध्यता एव वाच्या अत्र स्वपदं प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वावच्छिन्नकार्यतापरं तावतैव ससूहालम्बनमादाय न दोष इति न चैकत्र द्वयमिति रीत्या हेतुतावच्छेदकं धर्मितावच्छेदकीकृत्यान्वयव्याप्तिव्यतिरेकव्याप्ती प्रकारीभूय तादृशव्याप्यहेतुमत्तानिश्चयस्य तादृशानवच्छेदकविषयिताशून्यतया तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्ध-

कतावज्ज्ञानविषयतयान्वयव्यतिरेकव्याप्त्युभयाभाववद्धेतावतिव्याप्तिरिति वाच्यं स्वाश्रयत्वस्वासमनियतनादृशकारणताश्रयत्वोभयसम्बन्धेन कारणतावदन्यत्वेन ज्ञानविशेषणात् । अत्र स्वपदं तादृशकार्यतानिरूपितकारणतापरं तथा च धूमाभावव्यापकीभूताभावप्रतियोगिवह्न्यभाववद्वृत्तिधूमवान् ह्रद इत्यादिज्ञाने तादृशकारणतावदन्यत्वासत्त्वान्न तादृशोभयाभाववद्धूमे ऽतिव्याप्तिरिति न च तथापि वह्निव्याप्यधूमवत्पर्वतो वह्निव्याप्यधूमवत् पर्वतो वह्निव्याप्यधूमवत्पर्वतवानितिज्ञानस्य तादृशानवच्छेदकाविषयिताशून्यतया तादृशकारणतावदन्यतया च तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताके तादृशधूमवत्पर्वताभाववत्तादृशधूमवत्तादृशधूमवत्पर्वते ऽतिव्याप्तिरिति वाच्यम् तादृशवह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन एव जनकत्वात् तादृशपर्वतप्रकारतायास्तदवच्छेदकत्वात् स्वाश्रयत्वस्वभिन्नस्वावच्छेदककारणतावच्छेदकविषयितावत्त्वोभयसम्बन्धेनविषयितावदन्यत्वेनापि ज्ञानविशेषणत्वात् स्वपदमत्र तादृशकारणतावच्छेदकविषयितापरं तथा चोक्तज्ञानस्य तादृशपर्वतत्वावच्छिन्नविषयितावदन्यत्वासत्त्वादेव तमादाय नातिव्याप्तिरिति । अत्र सम्बन्धघटकावच्छिन्नत्वं साक्षादेव निवेश्यं न तु साक्षात्परम्परासाधारणमतो न व्यभिचारादावव्याप्तिः । न चैवं वह्निव्याप्यधूमाभाववद्ह्रदे स्वरूपासिद्ध्यनात्मके वह्निव्याप्यधूमवान् ह्रद इत्याकारकपरामर्शमात्रविरोधिनि अतिव्याप्तिरिति वाच्यं स्वानवच्छेदकविषयित्वावच्छिन्नत्वेन उक्तज्ञाननिष्ठप्रतिबध्यताविशेषणात् तथा चोक्तस्थाने वह्निव्याप्यधूमाभाववानिति ज्ञाननिरूपितप्रतिबध्यताया वह्निव्याप्यधूमवान् ह्रद इति ज्ञानीयविषयितामात्रेणावच्छेद्यतया तस्याश्च क्वचिदपि स्वानवच्छेदकत्वविरहेण न तादृशप्रतिबध्यतामादायातिप्रसङ्गः । अत्र स्वपदं तत्पक्षकतत्साध्यकतद्धेतुकानुमितिकारणतापरं धूमाभाववान् ह्रद इति ज्ञाननिरूपितप्रतिबध्यतायाः स्वानवच्छेदकेन धूमवान् ह्रद इति ज्ञानीयविषयत्वेनावच्छिन्नत्वात् तत्सङ्ग्रहः इति स्वरूपासिद्ध्यादौ लक्षणसमन्वयः । न चैवं वह्निव्याप्यधूमाभाववद्ह्रदे ऽतिव्याप्तिस्तथापि वह्निव्याप्यवान् ह्रद इति ज्ञानीयविषयतायाः स्वानवच्छेद-

कतया तादृशप्रतिबध्यतायामवच्छिन्नत्वात् इति वाच्यम् तथाप्युक्तविशेषणं परित्यज्य स्वावच्छिन्नत्वधर्म्मिनावच्छेदकतानात्मकस्वनिरूपितप्रकारतानिरूपितप्रकारत्वावच्छिन्नत्वउभयसम्बन्धेन अनुमितिजनकतावच्छेदकमुख्यविशेष्यतावदन्यत्वेन उक्तप्रतिबध्यतानिवेशान्नोक्तज्ञानीयप्रतिबध्यताया वह्निव्याप्यधूमवान् ह्रद इति ज्ञाननिष्ठाया एतज्ज्ञानीयह्रदत्वावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नतया तादृशविशेष्यतानिरूपिता या वह्निव्याप्यधूमत्वावच्छिन्नप्रकारता तन्निरूपिता या व्याप्तिप्रकारता तयाऽप्यवच्छिन्नत्वेन चोभयसम्बन्धेन तादृशविशेष्यतावदन्यत्वविरहेण तादृशप्रतिबध्यताया लक्षणाघटकत्वादिति नातिव्याप्तिः । न च तथापि वह्नेः साध्यतायां वह्न्यभाववद्वृत्तित्वस्य हेतुतायां वह्न्यभाववद्वृत्तित्वस्य पक्षतायां वह्न्यभाववद्वृत्तिवह्न्यभाववद्वृत्तित्वरूपव्यभिचारेऽव्याप्तिः । वह्न्यभाववद्वृत्तित्वं वह्न्यभाववद्वृत्तिवह्न्यभाववद्वृत्तित्ववदित्यादिपरामर्शीयमुख्यविशेष्यत्वावच्छिन्नत्वस्य तादृशविशेष्यतानिरूपितं यद्वृत्तित्वप्रकारत्वं तन्निरूपितवृत्तित्वप्रकारित्वावच्छिन्नत्वस्य तादृशप्रतिबध्यतायां सत्त्वादिति वाच्यम् जनकतावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतात्वेनावच्छिन्नत्वस्य निवेशात्तादृशप्रतिबध्यताया वह्न्यभाववद्वृत्तित्वविषयतानिरूपितवह्न्यभाववद्वृत्तित्वविषयतानिरूपितवह्न्यभाववद्वृत्तित्वप्रकारतात्वेनैवावच्छेदात् अप्रामाण्यज्ञानोत्तेजकत्वानुरोधेन च प्रतिबध्यताया भिन्नत्वाच्च न तत्रातिव्याप्तिरिति न कोपि दोषः पद्मादधानीतिप्राहुः ॥

अत्रानुमितिशब्दस्य लाक्षणिकत्वापातादाचार्यानुमितिमात्रस्य लिङ्गोपधानपक्षमनुसृत्य व्याचष्टे साध्यव्याप्येति जगदीशः । ननु व्याप्तेरननुगतत्वात् साध्यव्याप्तिपदेनान्वयव्याप्तेरुपादानेऽनुपसंहारिण्यव्याप्त्यापत्तेः व्यतिरेकव्याप्त्युपादाने साध्याभाववद्वृत्तिहेत्वादिरूपव्यभिचारस्यासंग्रहापत्तेः । न चान्वयव्याप्तिधर्मितावच्छेदिका सती व्यतिरेकव्याप्तिधर्मितावच्छेदिका यानुमितिस्तत्परत्वं वक्तव्यमिति वाच्यम् तथापि लक्षणापत्तिदोषतादवस्थ्यात् एवं यत्र स्थलविशेषे कदाचिदपि उभयव्याप्तिरनुमितौ न भासते तत्स्थलीयव्यभिचारादावव्याप्तेरिति चेन्न पक्षतावच्छेदकावच्छिन्नवि-

शेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वाव-च्छिन्नकारणताप्रतियोगिकसाध्यविधेयत्वावच्छिन्नकार्यतावच्छेद-कीभूतविषयित्वावच्छिन्नप्रतिबध्यतात्वेनानुमितिप्रतिबध्यताया अ-नुगमनीयत्वात् । आचार्यमते परामर्शकार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वं न निविशते तदेव लाघवं तथा च धूमव्यापकव-ह्निसमानाधिकरणधूमविशिष्टवत्त्वावच्छिन्नधर्मिकवह्न्यनुमितित्वाव-च्छिन्नं प्रति धूमव्यापकवह्निसमानाधिकरणधूमवत्तानिश्चयत्वेन हे-तुतायाव्याप्तिविषयताया अपि कार्यतावच्छेदकतया व्यभिचारादौ नाव्याप्तिरतो व्याप्तेरननुगतत्वेपि न क्षतिः ।

न च ह्रदो वह्निमान् घटत्वादित्यादौ वह्न्यभाववद्घटे इति व्याप्तिर्घटत्वावच्छेदेन वह्न्यभाववत्तानिश्चयस्यापि वह्नि-व्याप्यघटत्ववान् ह्रदो वह्निमानित्याकारकानुमितिविरोधि-त्वादिति वाच्यं साधनवतः साध्याभाववत्त्वस्य सव्यभि-चारत्वेन मणिकृन्मते तस्यापि लक्ष्यत्वादिति ध्येयमिति जगदी-शाः । ननु वह्निव्याप्यघटत्ववद्वह्निमानित्याकारकानुमितिं प्रति घट-त्वावच्छेदेन वह्न्यभाववत्तानिश्चयस्यापि प्रतिबन्धकत्वाद्वह्न्यभाव-व्याप्यवद्घटस्यापि दोषत्वापत्तेः न चेष्टापत्तिः साध्याभावव्याप्या-दिकं हेतुसामानाधिकरण्याविरोधित्वन्नाभास इति साधारणग्र-न्थविरोधापत्तेः । एवं ह्रदो गगनवान् धूमादित्यादौ आचार्यमते धूमव्यापकगगनवद्वृत्तिधूमवान् ह्रदो गगनवान् इत्याकारानुमितेरा-वृत्तिमत्त्वधर्मितावच्छेदकगगनप्रकारकतया तदवच्छिन्नं प्रति प्रति-बन्धकस्य वृत्तिमत्त्वावच्छेदेन गगनाभावप्रकारकनिश्चयस्य विषय-वृत्तिमत्त्वावच्छेदेन गगनाभावे दोषत्वापत्तेः एवं ह्रदो वह्निमान् धूमादित्यादौ वह्निव्याप्यधूमवान् ह्रदो वह्निमानित्याकारकानुमिति-प्रतिबन्धकज्ञानविषये वह्निव्याप्याभाववद्ह्रदे दोषत्वापत्तिः सा-मान्याभावबोधस्य सामान्यघटितविशेषवत्त्वबुद्धिं प्रति विरोधि-त्वादिति पूर्वपक्षः ।

अत्रेदं समाधानम् । साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्ना या हेतुतावच्छेदकावच्छिन्नप्रकारताभिन्ना धर्मितावच्छेदकतानात्मक-प्रकारता तदनिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्ना या प्रतिबध्यता तच्छून्यज्ञानीयत्वं तादृशप्रतिबध्यतायां निवेशनीयम् ।

तथा च उक्तस्थलत्रये घटत्ववान् ह्रदो वह्निमान् वृत्तिमद्धूमवान् ह्रदो गगनवान् ह्रदो वह्निव्याप्यवान् इत्याकारकज्ञानीयविशेष्यतात्रयस्यैव तथाविधविशेष्यतात्वेन तदवच्छिन्नतया तादृशप्रतिबध्यतायां तदन्यत्वविरहान्नातिप्रसङ्गः प्रकारतायां साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्नत्वानुक्तौ घटत्ववान् ह्रदो वह्निमानित्यादिज्ञानीयविशेष्यताया अपि हेतुतावच्छेदकावच्छिन्नप्रकारताभिन्नप्रकारतानिरूपिता या ह्रदो घटत्ववान् इत्यादिज्ञानीयविशेष्यता तदवच्छिन्नधर्मितावच्छेदकवह्निमत्त्वबुद्धित्वावच्छिन्नप्रतिबध्यतामादाय वह्न्यभावव्याप्यवद्घटादावतिव्याप्तेस्तादवस्थ्यम् एवं हेतुतावच्छेदकावच्छिन्नप्रकारताभिन्नत्वानुक्तौ ह्रदो वह्निव्याप्यधूमवानितिज्ञानीयविशेष्यतायाः साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्नप्रकारतानिरूपिततया तदनिरूपिता या ह्रदो वह्निमानितिज्ञानीयविशेष्यता तदनवच्छिन्नत्वस्य ह्रदत्वधर्मितावच्छेदककवह्निव्याप्यप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायां सत्त्वेन तामादाय वह्निव्याप्याभाववद्ध्रदेऽतिव्याप्तिस्तदवस्था साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिता या हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपिता विशेष्यता तदवच्छिन्नप्रतिबध्यतानिवेशे एकत्र द्वयमिति रीत्या साध्यहेतुद्वयावगाहिज्ञाने तादृशविषयता प्रसिध्यति ह्रदो वह्निमान् ह्रदादित्यादौ व्यभिचारज्ञानीयप्रतिबध्यतायामपि ह्रदो वह्निमान वह्निव्याप्यश्च इत्याकारकैकत्र द्वयमिति रीत्या ज्ञानीयविशेष्यत्वावच्छिन्नतया व्यभिचारेऽव्याप्तिरतोऽभावद्वयगर्भनिरुक्तिः तथा च एकत्रद्वयमितिरीत्या ज्ञानीयविशेष्यतायास्तादृशप्रकारताभिन्नव्याप्तिप्रकारतानिरूपिततया व्यभिचारज्ञानीयप्रतिबध्यतायास्तदवच्छिन्नत्वेऽपि न क्षतिः । वह्न्यभाववान् वह्न्यभाववद्वृत्तित्वादित्यादौ वह्न्यभाववद्वृत्तित्वाभावो वह्न्यभाववद्वृत्तित्वाभाववानित्यादिज्ञानीयविशेष्यताया अपि हेतुभूतव्याप्तिप्रकारताभिन्नप्रकारत्वानिरूपिततया तादृशस्थलीयव्यभिचारज्ञानप्रतिबध्यतायास्तदवच्छिन्नत्वेन तादृशस्थलीयव्यभिचारेऽव्याप्तिरतः पक्षतावच्छेदकावच्छिन्नत्वं विशेष्यतायां निवेशनीयं न च ह्रदो वह्निमान् धूमादित्यादौ वह्निमान् ह्रदो धूमवानितिज्ञानीयविशेष्यतायाश्च तादृशविशेष्यतात्वेन बाधस्वरूपासिद्ध्यादिप्रतिबध्यताया

अपि तदवच्छिन्नतया बाधस्वरूपासिद्ध्यादावव्याप्तिरिति वाच्यं पक्षधर्मिकसाध्यवत्त्वग्रहत्वाव्यापिका पक्षधर्मिकहेतुमत्त्वग्रहत्वाव्यापिका या पक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिवध्यता तदन्यत्वस्य प्रकृतप्रतिवध्यतायां निवेशात् । तादृशभेदप्रतियोगिप्रतिवध्यतायां तादृशसाध्यवत्त्वग्रहत्वव्यापकतादृशहेतुमत्त्वग्रहत्वव्यापकत्वयोश्च सत्त्वात्तादृशविषयित्वावच्छिन्नप्रतिवध्यताभिन्नत्वसत्त्वान्न बाधाद्यव्याप्तिरिति विभावनीयम् ॥ ० ॥

हेत्वाभासप्रथमनिरुक्तौ सङ्केतावतिव्याप्तिवारणाय यथार्थपदं निवेशितं तत्र यथार्थत्वञ्च भ्रमसामान्यभिन्नत्वं तेन पर्वतो वह्न्यभाववानित्यादिभ्रमाणामप्यांशिकप्रमात्वेपि न क्षतिरित्युक्तं जगदीशेः । अथ भ्रमसामान्यभिन्नत्वमनुगतं दुर्वचम् अतद्वति तत्प्रकारकत्वलक्षणभ्रमत्वस्य प्रकारादिभेदेन भिन्नत्वात् न च तस्याननुगतत्वेपि न क्षतिर्या या भ्रमव्यक्तिस्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्त्वस्यैव लक्षणे प्रवेश्यत्वादिति वाच्यम् तन्निवेशे गौरवात् इति चेन्न स्वनिरूपकत्वं स्वविशिष्टावच्छेदकताकप्रतियागिताकभेदप्रतियोग्यन्यनिष्ठत्वमुभयसम्बन्धेन प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वरूपं सर्वत्र प्रमात्वं वाच्यम् तत्र च स्वपदद्वयं प्रकारतापरं तत्रोभयीयप्रत्येकसम्बन्धनिवेशे सर्वत्रासम्भवः अवच्छेदकतायां स्ववैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्म्मानवच्छिन्नत्वैतत्त्रितयसम्बन्धेन सर्वत्र स्वपदं प्रकारतापरं तथा च पर्वतो वह्न्यभाववानित्यादिभ्रमाणां न निरुक्तरूपवत्त्वं स्वपदेन वह्न्यभावत्वावच्छिन्नप्रकारतामादाय तन्निरूपकत्वस्य निरुक्तत्रितयसम्बन्धेन तद्विशिष्टावच्छेदकताको यो वह्न्यभाववान्न इति प्रतीतिविषयो भेदस्तत्प्रतियोग्यन्यनिष्ठत्वयोः पर्वतनिष्ठविशेष्यतायां सत्त्वादिति तादृशोभयसम्बन्धेन तादृशप्रकारताविशिष्टविशेष्यतानिरूपकत्वात् इति । सामानाधिकरण्यानिवेशे घटो द्रव्यमित्यादिप्रमाया असङ्ग्रहः घटनिष्ठविशेष्यतायां द्रव्यत्वाप्रकारतानिरूपकत्वस्य तादृशोभयसम्बन्धेन द्रव्यत्वप्रकारताविशिष्टावच्छेदकताको यो यत्किञ्चिन्त्यतादिभेदस्तत्प्रतियोग्यन्यनिष्ठत्वस्य च द्वयोः सत्त्वात् तादृशोभयसम्बन्धेन प्रकारताविशिष्टावच्छेदकताकभेदसा-

मान्यप्रतियोग्यन्यनिष्ठत्वस्य विवक्षणे न गुणो द्रव्यमित्यादिबुद्धीनां प्रमात्वापत्तिः तथाच द्रव्यत्वप्रकारताविशिष्टावच्छेदकभेदसामान्यान्तर्गतस्य गुणभेदस्य प्रतियोग्यन्यनिष्ठत्वविरहादेव गुणनिष्ठविशेष्यतायामुक्तोभयसम्बन्धेन द्रव्यत्वप्रकारतावैशिष्ट्याभावादिति तन्निवेशनम् तथाच सति तादृशावच्छेदकतायां तादृशप्रकारतासामानाधिकरण्यविरहान्न तथा दोष इति । द्वितीयसम्बन्धानिवेशे पर्व्वतो वह्निमान् इत्यादिबोधानां प्रमात्वानुपपत्तिः । तृतीयसम्बन्धानिवेशे सत्तावान् गुण इत्यादिबुद्धीनां प्रमात्वानुपपत्तिः उक्तोभयसम्बन्धेन सत्तानिष्ठप्रकारताविशिष्टावच्छेदकताको यो यत्किञ्चिन्द्विशिष्टसत्तावान्नेति प्रतीतिविषयभेदस्तत्प्रतियोग्यन्यनिष्ठत्वसत्तानिष्ठप्रकारतानिरूपितत्वयोर्गुणनिष्ठविशेष्यतायां सत्त्वात् । न च तादृशभेदसामान्यप्रतियोग्यन्यनिष्ठत्वानिवेशान्नोक्तदोष इति वाच्यम् तथा सति विशिष्टसत्तावान् गुण इत्यादेरपि प्रमात्वापत्तेः गुणे तादृशभेदसामान्यान्तर्गतसत्तावद्भेदप्रतियोग्यन्यत्वविरहादिति । यदि च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वस्ववृत्तित्वैतत्त्रितयसम्बन्धेन प्रकारतावैशिष्ट्यमवच्छेदकतायां निवेश्यते तदा तादृशभेदप्रतियोग्यन्यत्वनिवेश एव साधीयान् । अवच्छेदकतायां स्ववृत्तित्वञ्च अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्म्मानवच्छिन्नत्वसम्बन्धेन । अत्र स्वपदमवच्छेदकतापरम् । एतत्कल्पे तृतीयसम्बन्धानिवेशे विशिष्टसत्तावान् गुण इत्यादेः प्रमात्वापत्तिः स्वयमूहनीया अन्यत्सर्व्वं पूर्ववत् इति । न चैवं समवायेन गगनवान् पर्व्वत इत्यादिधियामपि प्रमात्वापत्तिस्तादृशसमवायेन गगने वैशिष्ट्याप्रसिद्ध्या निरुक्तत्रितयसम्बन्धेन गगननिष्ठप्रकारताविशिष्टावच्छेदकताकभेदाप्रसिद्धेः उक्तोभयसम्बन्धेन पर्वतविशेष्यतायास्तादृशप्रकारताविशिष्टत्वाभावात् स्वपदेन गगनप्रकारताया धर्तुमशक्यत्वात् इति वाच्यम् निरुक्तोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वे सति स्वतादात्म्यस्वावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकधर्म्मानवच्छिन्नत्वोभयसम्बन्धेन प्रकारताविशिष्टप्रकारत्वानिरूपकत्वस्य प्रमात्वस्य वाच्यत्वात् । तथाचोक्तबुद्धीनां विशेषणदलसत्त्वेपि विशेष्यदलाविरहान्न तथात्वमिति निपुणतरधिया सु-

धीभिरालोकनीयम् । अथवा स्वप्रतियोग्यन्यनिष्ठत्वस्वावच्छेदकताविशिष्टप्रकारतानिरूपितत्वैतदुभयसम्बन्धेन भेदविशिष्टविशेष्यत्वानिरूपकत्वं सर्वत्र प्रमात्वं वाच्यम् । अत्र स्वपदं यत्किञ्चिद्भेदपरम् । स्वावच्छेदकतावैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन । पर्व्वतो वह्न्यभाववानित्यादिबुद्धौ वह्न्यभाववद्भेदप्रतियोगिपर्व्वतानिष्ठत्वस्वावच्छेदकताविशिष्टवह्न्यभावनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन भेदविशिष्टविशेष्यतानिरूपकत्वसत्त्वान्न तादृशत्वं तस्याः । ननु सत्तावान् गुण इत्यादौ तादृशोभयसम्बन्धेन विशिष्टसत्तावद्भेदविशिष्टविशेष्यतानिरूपकत्वात् एतादृशयथार्थत्वं न स्यात् तथापि स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वावच्छेदकतापर्याप्त्यधिकरणधर्म्मावच्छिन्नत्व–एतदुभयसम्बन्धेन स्वावच्छेदकताविशिष्टप्रकारतानिरूपितत्व–स्वप्रतियोग्यन्यनिष्ठत्व–एतदुभयसम्बन्धेन भेदविशिष्टविशेष्यत्वानिरूपकत्वे सति स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन स्वावच्छेदकताविशिष्टनिरवच्छिन्नप्रकारतानिरूपितत्वस्वप्रतियोग्यन्यनिष्ठत्वैतदुभयसम्बन्धेन भेदविशिष्टविशेष्यत्वानिरूपकत्वमिति तु निष्कर्षः । प्रथमस्वपदद्वयं भेदप्रतियोगितावच्छेदकतापरं द्वितीयस्वपदद्वय यत्किञ्चिद्भेदपरम् ॥ सत्तात्वावच्छिन्नप्रकारतायां विशिष्टसत्तावद्भेदप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वेपि स्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मानवच्छिन्नत्वान्नोक्तापत्तिः इति ध्येयम् । घटः समवायेन गगनवानित्यादौ पूर्व्वदोषोद्धारो बोध्यः । इति प्रथमलक्षणवादार्थः ॥ ० ॥

ननु विशिष्टान्तराघटितत्वविशेषण व्यर्थं यद्रूपावच्छिन्नविषयताशून्यज्ञानावृत्तिप्रतिबन्धकतानतिरिक्तयद्रूपावच्छिन्नविषयकत्वं तद्रूपवत्त्वमित्येव विवक्षणान्मेयत्वविशिष्टव्यभिचारादौ नातिप्रसङ्गः मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयताशून्यं यत् शुद्धव्यभिचारत्वावच्छिन्नविषयताशालिज्ञानं मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वस्य तदवृत्त्यनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वात् । न च वह्न्यभाववद्ध्रदादावसम्भवः वह्न्यभावत्वेन घटाभावावगाहि यद्वह्न्यभाववान् ह्रद इति ज्ञानं तत्रानुमितिप्रतिबन्धकताया वृत्तित्वात् भ्रमप्रमासाधारणैकरूपेण प्रतिबन्धकत्वादिति वाच्यम् ।

तादृशविषयताशून्यभ्रमान्यज्ञानावृत्तिप्रतिबन्धकतानतिरिक्तवृत्तियद्रूपावच्छिन्नत्वविषयकत्वस्य विवक्षणादिति चेन्न तस्य यथार्थपदाघटिततया लक्षणान्तरत्वेनादोषत्वात् । ननु तथापि स्वानवच्छेदकीभूतविषयताशून्यज्ञानवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयकत्व स्वानतिरिक्तवृत्ति तद्रूपवत्त्वमित्येव विवक्ष्यताम् किं विशिष्टान्तराघटितत्वविशेषणेनेति । स्वपदमनुमितिनिरूपितप्रतिबन्धकत्वपरम् । मेयत्वविशिष्टव्यभिचारविषयकज्ञानस्य स्वानवच्छेदकीभूतमेयत्वविशिष्टविषयतावत्त्वेन तच्छून्यं यद्व्यभिचारविषयकं ज्ञानं तत्र मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वासत्त्वात् मेयत्वविशिष्टव्यभिचारादौ नातिप्रसङ्गः । न चैवमेकदेशेऽतिव्याप्तिः ह्रदो वह्न्यभाववानिति विशिष्टज्ञानीयवह्न्यभावत्वावच्छिन्नविषयतायास्तादृशतया तत्रानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वसत्त्वादिति वाच्यम् अव्यापकीभूतविषयिताशून्यत्वेन ज्ञानविशेषणात् । न चैवं संयोगः संयोगाभाववानित्यादिस्थलीयसंयोग. संयोगवानिति बाधभ्रमविषयैकदेशसंयोगत्वावच्छिन्नेऽतिव्याप्तिः संयोगः संयोगवानिति बाधभ्रमस्यैव तादृशत्वादिति वाच्यम् । यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयतात्वं स्वावच्छिन्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वरूपाव्यापकीभूतविषयताशून्यत्वनिवेशेन तादृशभ्रमे संयोगत्वावच्छिन्नविषयतानिरूपितसंयोगत्वावच्छिन्नविषयताया एव तादृशतया तच्छून्यत्वविरहेणैवातिप्रसङ्गानवकाशादिति चेन्न गुणो द्रव्यभिन्न इत्यादिस्थलीयबाधभ्रमविषयैकदेशे गुणत्वावच्छिन्नेऽतिव्याप्तिः सर्व्वत्रासम्भवश्च ह्रदो वह्न्यभाववानित्यादिज्ञानस्यापि अनुमितिप्रतिबन्धकतानवच्छेदकीभूतह्रदत्वादिनिष्ठप्रकारतानिरूपितह्रदनिष्ठनिरवच्छिन्नविशेष्यताशून्यत्वविरहात् ।

ननु तथापि स्वानवच्छेदकत्वस्वावच्छेदकीभूतविषयतानिरूपितत्वोभयसम्बन्धेनानुमितिप्रतिबन्धकताविशिष्टविषयताशून्यत्वेन ज्ञानं विशेष्यं तावतैव मेयत्वविशिष्टव्यभिचारादौ नातिप्रसङ्गः । न वाऽसम्भवः किं विशिष्टान्तराघटितत्वेनेति । न च भूतलं घटपटोभयाभाववत् इत्यत्र घटपटोभयवद्भूतलरूपबाधेऽव्याप्तिस्तत्र भूतलत्वावच्छिन्नधर्म्मिकतादृशोभयाभाववत्ताबुद्धि

प्रति घटत्वावच्छिन्नप्रकारतानिरूपितत्वे सति पटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव एकत्र द्वयमिति रीत्या ज्ञानसाधारण्यानुरोधेन प्रतिबन्धकत्वात् उभयत्वस्य प्रतिबन्धकतानवच्छेदकत्वादिति वाच्यम् तत्र घटपटविशिष्टभूतलरूपतादृशविशिष्टान्तरघटितत्वेन तस्यालक्ष्यत्वात् इति चेन्न ह्रदत्वावच्छिन्नधर्मिकवह्निमत्ताबुद्धिं प्रति वह्नित्वपर्य्याप्तावच्छेदकताकप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैव ह्रदो वह्न्यभाववानित्याकारकज्ञानस्य प्रतिबन्धकतया तदीयवह्निप्रकारतायाः प्रतिबन्धकतावच्छेदककोटिप्रविष्टतया तादृशोभयसम्बन्धेन प्रकृतानुमितिप्रतिबन्धकताविशिष्टतया तच्छून्यत्वस्य तत्र विरहादुक्तबाधासम्भवापत्तेरिति तच्चिन्त्यम् ।

अत्रवदन्तिकल्पे यादृशविशिष्टविषयकनिश्चयोत्तरानुमितिसामान्ये यादृशविशिष्टविशिष्टविषयकनिश्चयत्वाभावव्याप्यविषयताप्रतियोगिकः प्रकृतपक्षे प्रकृतसाध्यावगाहित्वप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टत्वप्रकृतहेतुमत्त्वावगाहित्वोभयव्यतिरेकस्तादृशविशिष्टमेव प्रकृतपक्षसाध्यहेतुकस्थले दोष इति फलितार्थः कृतो जगदीशेन । तत्र वह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्व्वतेऽतिव्याप्तिवारणाय सामान्य इत्यन्तमुक्तं जगदीशैः । अत्रातिव्याप्तिर्न सम्भवति साध्यावगाहितासामान्यस्य वन्ह्यभावव्याप्यसंशयात्मकवह्निमत्पर्व्वतविषयकनिश्चयाहार्य्यनिश्चययोर्वृत्तित्वेन वह्निमत्पर्व्वतविषयकनिश्चयावृत्तित्वविरहेण निरुक्तोभयाभावस्य तादृशविषयताप्रतियोगिकत्वविरहात् । न च तादृशनिश्चयावृत्तियत्किञ्चित्विषयताप्रतियोगिकत्वमेव निरुक्ताभावे निवेश्यम् न च तादृशविषयतासामान्यप्रतियोगिकत्वम् तथा च कथं नातिव्याप्तिरिति वाच्यम् । पर्व्वतो वह्निमान् वह्निव्यभिचारिधूमादित्यादौ घटवद्गृहादावतिव्याप्तिवारणाय तादृशविषयतासामान्यप्रतियोगिकत्वनिवेशस्यावश्यकत्वात् । अन्यथा घटवद्गृहविषयकनिश्चयावृत्तिघटाभाववद्गृहकालीनः पर्व्वतो वह्निमान् इत्याकारकानुमितिवृत्तिविशिष्टसाध्यावगाहिताया निरुक्तोभयाभावे प्रतियोगिकत्वसत्त्वेनातिव्याप्तिर्दुर्व्वारैव स्यादिति । यद्यपि तादृशावगाहिताद्वयसामा-

न्ये तादृशानिश्चयावृत्तित्वानिवेशे व्यभिचारादावव्याप्तिः साध्यावगाहितासामान्ये व्यभिचारादिविषयकनिश्चयवृत्तित्वविरहात् । तथापि स्वाधिकरणावृत्तितादृशनिश्चयत्वकस्वप्रतियोगिकत्वस्य निरुक्ताभावे निवेशनीयत्वाद्देवानिव्याप्तिनिरासात् । चपदं तादृशावगाहिताद्वयपरम् । स्वाधिकरणत्वञ्च स्वनिरूपितान्यतरसम्बन्धेन । तादृशान्यतरसम्बन्धश्च पक्षविशेष्यकसाध्यावगाहित्वत्वावच्छिन्नाधिकरणत्वतादृशसाध्यव्याप्यहेतुमत्त्वावगाहित्वत्वावच्छिन्नाधिकरणत्वान्यतरस्वरूपः । एवञ्च घटवद्गृहं पर्वतश्च वह्निमान् इत्याकारकज्ञानेपि निरुक्तसम्बन्धेन तादृशानुमितिनिष्ठसाध्यावगाहितायाः सत्त्वेन घटवद्गृहविषयनिश्चयत्वस्य तद्वद्वृत्तित्वविरहेण तत्र घटवद्गृहादौ नातिप्रसङ्गः । अत एव अवृत्तित्वप्रतियोगिकुक्षौ निश्चयत्वनिवेशनमपि सार्थकम् । अन्यथा ह्रदो वह्निमान्न वा इत्यादिसंशये साध्यावगाहितासत्त्वेपि निरुक्तोभयाभावे तदवृत्तिह्रदो वह्निमानित्याद्यनुमितिनिष्ठविषयताप्रतियोगिकत्वसत्त्वेनासम्भवाभावेन निश्चयत्वनिवेशवैयर्थ्यं स्यादिति चेन्न वह्न्यभाववद्ह्रदादावसम्भववारणाय निश्चयेऽनाहार्यत्वस्य स्वयमेव निवेश्यतया अनाहार्यवह्निमत्पर्वतविषयकनिश्चयावृत्तिविषयताप्रतियोगिकत्वेन निरुक्ताभयाभावस्य वह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वतादावतिव्याप्तिर्दुर्वारा स्यादिति तद्वारणाय सामान्यान्तनिवेशन सुसङ्गतमिति । न चैवमपि वह्न्यभावव्याप्यसंशयात्मकवह्निमत्पर्वतनिश्चये साध्यावगाहितासत्त्वेन तन्निश्चयत्वस्य निरुक्तान्यतरसम्बन्धेन तद्वद्वृत्तित्वविरहान्नातिव्याप्तिर्घटते इति वाच्यम् वह्न्यभावव्याप्यवत्पर्वताभावसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तेर्दुर्वारत्वात् । तत्र पर्वतो वह्निमान् धूमात् वह्निमत्पर्वतकालीनधूमाद्वा इत्यादौ पक्षतावच्छेदकविशिष्टे साध्यावगाहिज्ञानमात्रस्य साध्यव्याप्यहेतुवैशिष्ट्यावगाहिज्ञानमात्रस्य च वह्निमत्पर्वतविषयकतया वह्निमत्पर्वतविषयकनिश्चयत्वस्य स्वाधिकरणावृत्तित्वविरहेण वह्निमत्पर्वतरूपाश्रयासिद्ध्यादौ लक्षणगमनाय तादृशज्ञानस्यैव भेदनिवेशे घटवद्गृहं निर्वह्निः पर्वतो वह्निमांश्च इत्यादिसमूहालम्बनस्यापि भेदनिवेशस्यावश्यकतया घटवद्गृहादावतिव्याप्तिर्दुर्वारा । न च इच्छाजन्यतानवच्छेदकयद्रूपावच्छिन्नविषयता-

शालिनिश्चयत्वस्य स्वाधिकरणावृत्तित्वविवक्षणे निर्व्वह्निः पर्व्वतो वह्निमान् पर्व्वतश्च वह्निमान् इत्यादिसमूहालम्बने तादृशविषयतासत्त्वेपि वह्निमत्पर्व्वतविषयकोक्तसमूहालम्बनस्यैव भेदनिवेशस्यावश्यकतया घटवद्गृहविषयकतादृशसमूहालम्बनभेदस्य निवेशेनैव उक्तातिव्याप्तिनिरास इति वाच्यम् । तथासति वह्निमत्पर्व्वतकालीननिर्व्वह्निः पर्व्वतो वह्निमान् इत्यादौ तादृशपक्षतावच्छेदकाविशिष्टतादृशसाध्यावगाहिज्ञानमात्रस्यैव कालीनांशे वह्निमत्पर्व्वतविषयताया इच्छाजन्यतानवच्छेदकत्वेन तत्र वह्निमत्पर्व्वतादौ लक्षणसमन्वयाय तादृशज्ञानमात्रस्यैव भेदनिवेशस्यावश्यकतया घटवद्गृहादावतिव्याप्तेर्दुर्व्वारत्वात् । न च यद्रूपावच्छिन्नमुख्यविशेष्यतानिवेशेनैव न तत्राव्याप्तिः कालीनांशे वह्निमत्पर्व्वतविषयताया इच्छाजन्यतानवच्छेदकत्वेपि तस्या मुख्यविशेष्यतात्वविरहात् घटवद्गृहविषयकतादृशज्ञानमात्रस्यैव भेदानिवेश्यत्वात् इति वाच्यम् । काञ्चनमयत्वाभावव्याप्यवान् पर्व्वतः काञ्चनमयपर्व्वतकालीनवह्निमानित्यादौ काञ्चनमयत्वाभावव्याप्यपर्वतरूपासिद्ध्यादौ पक्षतावच्छेदकाविशिष्टे साध्यावगाहिज्ञानमात्रस्यैव इच्छाजन्यतानवच्छेदकमुख्यविशेष्यतात्वात्मककाञ्चनमयत्वाभावव्याप्यवत्पर्व्वतविषयतायाः सत्त्वेन स्वविरोधिधर्म्मधर्म्मितावच्छेदककस्वप्रकारकातिरिक्तस्थले प्रतिबध्यतावच्छेदकविषयतातुल्यविषयताया एवेच्छाजन्यतावच्छेदकत्वात् जन्यत्वञ्च स्वावच्छेदकधर्म्मावच्छिन्नत्वेन इत्युक्तविषयताया उक्तरूपत्वात् अव्याप्तिवारणाय तादृशज्ञानमात्रस्य भेदनिवेशस्यावश्यकत्वेन घटवद्गृहाविषयकतादृशज्ञानमात्रस्यापि भेदस्यानिवेशनीयतया तत्र घटवद्गृहादावतिव्याप्तेर्दुर्व्वारत्वादिति चेन्न काञ्चनमयत्वाभावव्याप्याभाववत्पर्व्वतः काञ्चनमयत्वाभावव्याप्यवान् काञ्चनमयपर्व्वतकालीनवह्निमान् गृहञ्च घटवदित्यादिसमूहालम्बने इच्छाजन्यतानवच्छेदकतादृशकाञ्चनमयत्वाभावव्याप्यवत्पर्व्वतविषयताया असत्त्वेन तेषां भेदानिवेश्यतया तत्र च घटवद्गृहनिश्चयत्वस्य स्वाधिकरणावृत्तित्वविरहेण उक्तातिव्याप्तेरनवकाशादिति ।

इदन्तु बोध्यम् । यथोक्तरीत्याऽतिव्याप्तिभयेनानुगतानाहार्यत्वनिवेशाशक्यत्वेन तत्तदाहार्यभेद एव निवेशनीयस्तथा च वह्न्यभा-

वह्व्याप्यसाध्यकस्थले वह्न्यभावव्याप्यवान् पर्व्वतो वह्निमान् इत्याकाराहार्य्यव्यक्तिभेदनिवेशानावश्यकत्वेन तत्र वह्निमत्पर्व्वतनिश्चयत्वस्य स्वाधिकरणावृत्तित्वविरहेण वह्निमत्पर्व्वतातिव्याप्तेरप्रसक्त्या सामान्य इत्यन्तस्य व्यावृत्त्यसङ्गतिरिति । निर्व्वह्निः पर्व्वतो वह्निमानित्यादिस्थले घटवद्गृहादावतिव्याप्तिवारणाय केचित्समादधन्ति । तथाहि पक्षतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहितानन्तःपातित्वे सति साध्यव्याप्यहेतुवैशिष्ट्यावगाहितानन्तःपातित्वमेव यद्रूपावच्छिन्नविषयतायां निवेशनीयम् । तादृशावगाहितानन्तःपातित्वञ्च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपिततादृशावगाहित्वावच्छिन्नभेदप्रतियोगितानवच्छेदकत्वम् । एवञ्च पर्व्वतो वह्निमान् वह्न्यभाववत्पर्व्वतकालीनधूमादित्यादौ वह्निमत्पर्व्वतवानित्यादिज्ञानीयवह्निमत्पर्व्वतविषयताया एव उक्तानन्तःपातित्वेन तामादायैव वह्निमत्पर्व्वतादिरूपासिद्ध्यादौ लक्षणं सङ्गमनीयमिति । न चैवमपि वह्निमन्निर्व्वह्निपर्व्वतवानित्याकारकज्ञानीययद्रूपावच्छिन्नविषयतामादायाव्याप्तिवारणाय तादृशज्ञानभेदानिवेशावश्यकत्वे घटवद्गृहादावुक्तस्थलेऽतिव्याप्तिरिति वाच्यम् । तथासत्यपि निर्व्वह्निः पर्व्वतो वह्निमान् घटवद्गृहञ्च इत्यादिसमूहालम्बनभेदनिवेशावश्यकत्वेन तत्रैवातिव्याप्तेर्निवेशादिति । अत्रापि कल्पे वह्निमत्पर्व्वतेऽतिव्याप्त्यप्रसक्त्या सामान्य इत्यन्तस्य व्यावृत्तिर्न सङ्गच्छते इति ध्येयम् । परेतु यद्रूपावच्छिन्नविषयित्वाव्यापकीभूतविषयितानाशून्यज्ञानीययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वस्यैव स्वाधिकरणावृत्तित्वनिवेशान्निर्व्वह्निः पर्व्वतो वह्निमान् इत्यादिज्ञानीयवह्निमत्पर्व्वतविषयितायास्तादृशत्वाभावेन तादृशज्ञानमात्रस्य भेदनिवेशानावश्यकतया निर्व्वह्निः पर्व्वतो वह्निमान् गृहञ्च घटवदिति ज्ञान एव घटवद्गृहनिश्चयत्वसत्त्वेन तादृशस्थले घटवद्गृहादौ नातिव्याप्त्यवकाश इत्याहुः । एतन्मते ज्ञानभेदेन विषयताया भिन्नत्वे तु घटवद्गृहादावतिव्याप्तेरशक्यपरीहारत्वात् । घटवद्गृह निर्व्वह्निः पर्व्वतो वह्निमान् इत्यादिज्ञानस्याव्यापकीभूतविषयताशून्यत्वविरहात्तादृशविषयताशून्यत्वञ्च यत् घटवद्गृहमित्याकारकासमूहालम्बनात्मकज्ञानं तदीयविषयतायाश्च उक्तसमूहालम्बनेऽसत्त्वात् । अवृत्तित्वप्रतियोगिकुक्षौ निश्चयत्वद-

लवैयर्थ्यञ्च । जगदीशमते संशये उभयप्रकारतानिरूपितैकाविशेष्य-तास्वीकारावश्यकत्वेन संशयनिश्चयसाधारणैकविषयत्वाभावेन अव्यापकविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषयतायाः संशयेऽसत्त्वादिति पूर्व्वोक्तयुक्त्या सामान्य इत्यन्तस्य व्यावृत्तिरप्यनुसन्धेयेति बोध्यम् ।

अन्येतु सर्व्वत्रानुगतमेवानाहार्य्यत्वं निवेशनीयम् । तच्च स्वनिरूपकत्व-स्वविशिष्टविशेष्यतानिरूपकत्व-उभयसम्बन्धेन प्रकारतावदन्यत्वम् । स्वद्वयं प्रकारतापरम् स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्म्मावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकधर्म्मावच्छिन्नप्रकारतानिरूपितत्व-स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्व-उभयसम्बन्धेन । सर्व्वत्र स्वपदं प्रकारतापरम् । स्वविशिष्टविशेष्यतायां इच्छाजन्यतानवच्छेदकत्वमपि निवेशनीयमन्यथा निर्व्वह्निः पर्व्वतो वह्निमानित्यादिस्थले घटवद्गृहं निर्व्वह्निः पर्व्वतो वह्निमानित्यादिज्ञानमात्रस्यैव निरुक्तानाहार्य्यत्वविरहेणाहार्य्यघटवद्गृहविषयकनिश्चयत्वस्य स्वाधिकरणावृत्तित्वेन घटवद्गृहादावतिव्याप्तिः स्यादिति । एवञ्च निर्व्वह्निः पर्व्वतो वह्निमानित्यादिज्ञाने वह्निमत्पर्व्वतविषयतायाः सत्त्वेन निरुक्तानाहार्य्यत्वेन न वह्निमत्पर्व्वतादावव्याप्तिः स्यादिति तद्वारणाय यद्रूपावच्छिन्नविषयतायामपीच्छाजन्यतानवच्छेदकत्वमपि देयमिति । अथवा वह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्व्वतादावतिव्याप्तिरपि सङ्गच्छते । तथाहि वह्न्यभावव्याप्यवान् पर्व्वतो वह्निमान् पर्व्वतो वह्निमान् पर्व्वतो वह्न्यभावव्याप्यवांश्च इत्यादिज्ञानीयवह्निमत्पर्व्वतविषयताया इच्छाजन्यतानवच्छेदकत्वेन तत्र निरुक्तयद्रूपावच्छिन्नविषयताया असत्त्वादित्याहुः ।

तत्र वह्न्यभावव्याप्यवान् पर्व्वतो वह्निमान् पर्व्वतश्च वह्निमानिति ज्ञानस्य वह्न्यभावव्याप्याभाववान् पर्वतो वह्न्यभावव्याप्यवान् पर्वतो वह्निमांश्च इत्याकारकस्य निरुक्तानाहार्यस्य निरुक्तयद्रूपावच्छिन्नविषयकस्य च सम्भवेन तत्रैव वह्निमत्पर्वतविषयकनिश्चयस्य स्वाधिकरणावृत्तित्वविरहेणातिव्याप्त्यप्रसक्त्या सामान्य इत्यन्तव्यावृत्त्यसङ्गतेस्तादृशनिश्चयभेदेन वैयर्थ्याच्च ।

यत्तु स्वावच्छेदकधर्मावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितत्व-स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन स्वावच्छेदकधर्मावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितत्व-स्वावच्छेदकधर्मावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितत्वान्यतर—स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन वा स्ववैशिष्ट्याभिधाने अतिव्याप्तिर्लगते इति ।

तत्तुच्छम् । प्रथमकल्पे वह्न्यभावव्याप्यवान् ह्रदो वह्निमान् वह्न्यभावव्याप्यवांश्च ह्रद इत्यादिज्ञानमादाय सत्प्रतिपक्षाव्याप्तिः । द्वितीयकल्पे चान्यतरघटकप्रथमदलनिवेशेनैव सत्प्रतिपक्षाव्याप्तिविरहात् द्वितीयदलस्याव्यावर्तकत्वेन केवलातिव्याप्तिसम्पादनाय तन्निवेशनस्याफलत्वादिति ।

अन्ये तु यद्रूपावच्छिन्नविषयकत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकं यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नविशेष्यतात्वं तद्रूपावच्छिन्नप्रकारतानिरूपिततद्रूपमात्रावच्छिन्नयद्रूपावच्छिन्नमुख्यविशेष्यताशालिनिश्चयावृत्तित्वमेव उक्तरीत्या प्रकृते निवेशनीयम् । तथाच निर्वह्निः पर्वतो वह्निमानित्यादिज्ञाने निरुक्तवह्निमत्पर्वतविषयताया असत्त्वेन तादृशज्ञानमात्रस्य भेदनिवेशस्यानावश्यकत्वेन घटवद्गृहविषयकतादृशसमूहालम्बनभेदस्याप्यनिवेशनीयतया निर्वह्निः पर्वतो वह्निमान् इत्यादिनिरुक्तस्थले घटवद्गृहादौ नातिव्याप्त्यनवकाश इत्याहुः ।

अत्रापि कल्पे प्रागुक्तस्थले वह्निमत्पर्वतेऽतिव्याप्त्यलग्नतापत्तिरेव पूर्वोक्तदोषोऽनुसन्धेयः ।

नवीनास्तु वह्न्यभावव्याप्यादिरूपतत्तदनाहार्यसाध्यहेतुस्थले सामान्यतो ज्ञानाभाववत्त्वरूपाप्रामाण्यज्ञानानास्कन्दितत्वमिवानाहार्यत्वमपि सामान्यत आहार्यभिन्नत्वमेव प्रकृते निवेश्यते लाघवात् । तत्तदाहार्यसाध्यहेतुकस्थले च तादृशतादृशोक्तस्थलेऽतिव्याप्तिवारणार्थमनन्यगतिकतया तत्तदाहार्यभेद एव निवेश्यत इति । तथा च तादृशाभिप्रायेणैव वह्न्यभावव्याप्यादिरूपानाहार्यसाध्यकस्थल एव

वह्निमत्पर्वतादावतिव्याप्तिर्दर्शिता । अन्यथा सामान्यत आहार्यभिन्नत्वरूपानाहार्यत्वस्य सर्वत्र निवेशे पर्वतीयवह्न्यभाववान् पर्वतः पर्वतीयवह्निमान् वह्न्यभावव्याप्यादित्यादि-आहार्यस्थले वह्निमत्पर्वतादावतिव्याप्तिरशक्यपरिहारैव स्यादिति न काप्यनुपपत्तिः सर्वं चतुरस्रमिति प्राहुः ।

इदन्तु बोध्यमित्यादिना विशिष्टान्तराघटितत्वं निरुक्तलक्षणाश्रयीभूतं वस्तुगत्या यद्विशिष्टान्तरं हेत्वाभासत्वविशिष्टाद्भिन्नं तदघटितत्वमेव तदर्थ इत्युक्तं जगदीशैः । अत्र विशिष्टान्तरत्वं वास्तवहेत्वाभासत्वावच्छेदकपर्याप्त्यवच्छेदकत्वनिरूपकप्रकारतावच्छेदकत्वम् । तेन मेयत्वविशिष्टव्यभिचारादेर्वास्तवव्यभिचारभिन्नत्वविरहेऽपि न क्षतिः । अत्र च तादृशविशिष्टान्तरे निरुक्तलक्षणाश्रयीभूतत्वनिवेशनं दोषमात्रस्यैव तादृशविशिष्टान्तररूपतत्तदेकदेशघटितत्वादसम्भववारकं बोध्यम् । तत्र निरुक्तलक्षणघटकप्रथमदलानिवेशे पर्वतः पर्वतीयवह्न्यभाववान् वह्न्यभावव्याप्यादित्यादौ पर्वतीयवह्निमत्पर्वतरूपबाधस्य तादृशविशिष्टान्तरेण वह्निमत्पर्वतेन घटितत्वात् उक्तोभयाभावस्य वह्निमत्पर्वतनिश्चयावृत्तिविषयताप्रतियोगिकत्वादव्याप्तिः स्यादतः सामान्य इत्यन्तप्रथमदलनिवेशः । अयं पुनर्यत्र स्थले अनाहार्यत्वं सामान्यत आहार्यत्वभिन्नत्वं निवेश्यते तत्रैव नान्यत्रेत्यनुसन्धेयः । द्वितीयदलानिवेशे निर्वह्निः पर्वतो वह्निमानित्यादौ वह्निमत्पर्वतरूपाश्रयासिद्ध्यादेस्तादृशविशिष्टान्तरेण तदेकदेशेन तथाविधेन वह्निमत्पर्वतेन च घटितत्वादव्याप्तिः स्यादतस्तादृशनिश्चयावृत्तित्वरूपद्वितीयदलनिवेशः । तादृशविशिष्टान्तराघटितेति । तादृशोक्तदलद्वयव्यावृत्तिस्तु ग्रन्थकृता दत्ता इत्यनुसन्धेयम् । अत्रेदं बोध्यम् । दोषैकदेशस्य वास्तविकहेत्वाभासत्वविशिष्टाद्भिन्नत्वेऽपि तदघटितत्वपदेन तदपर्याप्तप्रकारतावच्छेदकत्वस्य विवक्षणेनैवासम्भववारणसम्भवे विशिष्टान्तरे निरुक्तलक्षणाश्रयीभूतत्वनिवेशनम् व्यर्थमिति ।

यदि च नव्यानां मते इत्यादिव्याख्यायां मेयत्वविशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्तिस्तथा हि निरुक्ताश्रयत्वावच्छिन्नाभावस्य वह्न्यभाववद्ध्रदत्वावच्छेदेन मेयत्वप्रकारकनिश्चयत्वाविरोधितादृशसाध्यावगाहिताप्रतियोगिकत्वादिति चेत् तादृशनिश्चयत्वाविरोधिविषयतायां

तद्धर्म्मावच्छिन्नविषयकनिश्चयवृत्तित्वे सति तादृशधर्म्मावच्छिन्नप्रकारकनिश्चयवृत्तित्वं निवेश्य तद्वारणम् तादृशनिश्चयत्वविरोधिन्याः पक्षे साध्यावगाहिताया वह्न्यभाववद्ध्रदत्वावच्छिन्नप्रकारकनिश्चयवृत्तित्वविरहादिति । न च तथाप्यनिव्यासिः मेयह्रदत्वावच्छेदेन वह्न्यभावप्रकारकनिश्चयत्वविरोधिविषयताप्रतियोगिकत्वादुक्तान्नित्वावच्छिन्नाभावस्य इति वाच्यम् । पक्षतावच्छेदकसामानाधिकरण्येनावच्छेदावच्छेदेन वा साध्यतास्थलमात्र एव सामानाधिकरण्यावगाहिसाधारणेन पक्षे साध्यावगाहितात्वेन निरुक्तान्नित्वावच्छिन्नाभावप्रतियोगिकुक्षौ तादृशावगाहिताया निवेशात्तया च मेयह्रदत्वावच्छेदेन वह्न्यभावावगाहिह्रदत्वसामानाधिकरण्येन वह्न्यवगाहिनिश्चयस्यैकदेशेत्पत्त्या साध्यावगाहितायास्तन्निश्चयत्वविरोधित्वविरहात् प्रागुक्तयुक्त्या तादृशावगाहितासामान्य एव प्रागुक्तरीत्या तादृशनिश्चयत्वविरोधित्वं परिष्कार्य्यमिति ध्येयम् ।

अथावच्छेदावच्छेदेन साध्यतास्थले यद्धर्म्मावच्छेदेन यद्धर्म्मप्रकारकनिश्चयावृत्तिविषयिताप्रतियोगिको निरुक्तान्नित्वावच्छिन्नाभावस्तद्धर्म्मावलीढस्तद्धर्म्मावच्छिन्न एव दोषः सामानाधिकरण्येन साध्यतास्थलेऽपि तद्धर्म्मावच्छेदेन तादृशधर्मवत्त्वमेव दोष इत्युक्तं जगदीशेन । तत्रेयमनुपपत्तिः । यत्र वह्नित्वसामानाधिकरण्येन महानसीयत्वस्य साध्यतावच्छेदकता पर्वतत्वावच्छेदेन महानसीयवह्निः साध्यता तादृशरूपेण हेतुता तत्र महानसीयत्वाभाववद्वह्नेर्दोषत्वापत्तिः । यत्र च वह्नित्वावच्छेदेन महानसीयत्वादेः साध्यतावच्छेदकता पर्वतत्वसामानाधिकरण्येन महानसीयवह्न्यादेः साध्यता तादृशरूपेण हेतुता तत्र महानसीयत्वाभाववद्वह्न्यादेर्दोषत्वानुपपत्तिः उक्तरूपावरहादिति । साध्यतावच्छेदकांशे अवच्छेदकसामानाधिकरण्यभेदेन विभिन्नलक्षणकरणे अवच्छेदावच्छेदस्थले तद्धर्म्मावलीढस्तद्धर्म्मावच्छिन्नो दोषः सामानाधिकरण्यस्थले तद्धर्म्मावच्छेदकतद्धर्म्मावच्छिन्नवत्त्वं दोष इत्यादिजगदीशग्रन्थासङ्गतिः । हेतुतावच्छेदकसामानाधिकरण्येन साध्याभाववद्वृत्तित्वादेरलक्ष्यत्वकथनानुपपत्तेश्च ।

अत्र केचित् सिद्धान्तयन्ति । यथावच्छेदावच्छेदेन साध्यतास्थले यद्धर्म्मावच्छेदेन यद्धर्म्मवत्तानिश्चयत्वविरोधिविषयताप्रतियोगिको

निरुक्तत्रित्वावच्छिन्नाभावः यादृशसंसर्गेण तद्धर्म्मावच्छिन्नविशेष्यकतद्धर्म्मप्रकारकनिश्चयत्वविरोधित्वं येन रूपेण साध्यताच्छेदकत्वं साध्यत्वं पक्षतावच्छेदकत्वञ्च तेन रूपेण साध्यवगाहितायामस्ति तादृशसंसर्गेण तद्धर्म्मावच्छिन्नतद्धर्म्मवत्त्वं दोष इत्यादिकं पुनर्विशिष्य वक्तव्यम्। एवं हेतुतावच्छेदकादावपि बोध्यम् तथा चोक्तस्थलादौ नाव्याप्त्यतिव्याप्ती। तत्र सामानाधिकरण्येन साध्यतास्थलेपि तादृशसामानाधिकरण्येन साध्यावगाहित्वादिकमुक्तरूपेण पुनर्विशिष्य निवेश्य लक्षणं कर्त्तव्यमिति न तत्स्थलेऽव्याप्त्यतिव्याप्त्यवकाशः। नचैवं यादृशसंसर्गेण यादृशधर्म्मावच्छिन्नविशेष्यकयादृशधर्म्मप्रकारकनिश्चयत्वविरोधि प्रकृततादृशसाध्यावगाहित्वादि तादृशसंसर्गेण तादृशधर्म्मावच्छिन्ने तादृशधर्म्मवत्त्वमित्येव लक्षणमुच्यताम् किं पुनर्यादृशधर्म्मावच्छेदेन यादृशधर्म्मवत्त्वानिश्चयत्वविरोधिविषयताप्रयुक्तत्रित्वावच्छिन्नाभाव इत्याद्युक्तदलेनेति वाच्यम। मेयत्वविशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्त्यापत्तेः तथाहि ह्रदत्वावच्छेदेन वह्नेः साध्यतास्थले मेयह्रदत्वावच्छिन्नविशेष्यकवह्न्यभावप्रकारकनिश्चयत्वविरोधित्वस्य प्रकृततादृशसाध्यावगाहितायां सत्त्वाद्यथोक्तलक्षणसमन्वयसम्भवादिति। तद्दलदाने च न तादृगिति सुधीभिर्ध्येयम् ॥ ० ॥

गुरवस्तु निर्वह्निः पर्व्वतो वह्निमानित्यादौ सामान्यत इच्छाजन्यभिन्नत्वरूपानाहार्य्यत्वस्य निवेशे घटवद्गृहं निर्वह्निः पर्व्वतो वह्निमानित्यादेरपि इच्छाजन्यत्वात घटवद्गृहादौ विरोधिविषयताप्रयुक्तत्वानिवेशेऽप्यतिव्याप्तिरतस्तद्वारणप्रकार ईदृशोऽनुस्मर्तव्यः। तथाहि स्वनिरूपकत्व–स्वविशिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतानिरूपकत्व–उभयसम्बन्धेन प्रकारतावदन्यत्वमेवानाहार्य्यत्वं सर्व्वत्र निवेश्यम्। स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्म्मावच्छिन्नत्व–स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व–त्रितयसम्बन्धेन बोध्यम्। सर्वत्र स्वपदं प्रकारतापरम् तथा च निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ घटवद्गृहादौ नातिव्याप्तिः। घटवद्गृहं निर्वह्निः पर्वतो वह्निमानित्यादिसमूहालम्बनस्य निरुक्तोभयसम्बन्धेन प्रकारतावदन्यत्वेन पारिभाषिकानाहार्यतया तत्र प्रकृतसा-

ध्यावगाहित्वस्य सत्त्वान्निरुक्तोभयाभावस्य घटवद्गृहविषयक-निश्चयावृत्तिविषयताप्रतियोगिकत्वविरहात् । स्वनिरूपकत्वसंसर्ग-स्य भेदप्रतियोगितावच्छेदकघटकत्वे सविकल्पज्ञानमात्रस्य तादृ-शसम्बन्धेन प्रकारतायां सत्त्वात् यथोक्तानाहार्य्यज्ञानाप्रसिद्ध्या बाधादौ सर्वत्रासम्भवः स्यादतः स्वविशिष्टेत्यादि । स्ववि-शिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्र-कारतानिरूपकत्वमात्रस्य तथात्वेपि वह्न्यभाववद्ध्रदादिविषयक-निश्चयादेरपि ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्न-तया निरुक्तसम्बन्धेन सत्त्वादुक्तदोषतादवस्थ्यमत उभय-मुपात्तम् । प्रकारतायां स्ववैशिष्ट्यघटकसंसर्गांशे स्वावच्छे-दकधर्म्मावच्छिन्नत्वानुक्तौ निर्वह्निः पर्वतो वह्निमान् पर्वतश्च घट-वानित्यादिसमूहालम्बनस्यापि प्रकारतानिरूपकत्वस्य निरुक्त-सम्बन्धेन वह्न्यभावप्रकारताविशिष्टं यत् पर्वतत्वावच्छिन्नविशे-ष्यतानिरूपितघटाभावत्वावच्छिन्नप्रकारत्वं तदवच्छिन्नप्रतिबध्यता-निरूपितप्रतिबन्धकतावच्छेदकीभूतघटप्रकारतानिरूपकत्वस्य च स-त्त्वेनोभयसम्बन्धेन प्रकारताविशिष्टतया तदन्यो यो घटवत्पर्वतवि-षयकनिश्चयस्तद्विरोधिविषयताप्रतियोगिकत्वस्य निर्वह्निपर्वतधर्म्मि-कवह्न्यवगाहित्वघटितोभयाभावे सत्त्वान्निर्वह्निः पर्वतो वह्निमानित्या-दौ घटवत्पर्वतेऽतिव्याप्तिः स्यादतस्तदुपादानम् । स्वावच्छेदकाव-च्छिन्नत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपित-त्वोभयसम्बन्धेन स्ववैशिष्ट्याभिधाने च पर्वतो वह्निमान् वह्न्यभावव-त्पर्वतादित्यादौ कालिकसम्बन्धेन वह्निमत्पर्वतेऽतिव्याप्तिः कालिकेन वह्निमान् पर्वतः वह्निव्याप्यवह्न्यभाववान् पर्वत इत्यादिसमूहालम्बन-स्य कालिकसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितत्वस्य कालिकसम्बन्धावच्छिन्नतादृशप्रकारताविशिष्टं यत् संयोगसम्बन्धा-वच्छिन्नवह्नित्वावच्छिन्नप्रकारत्वं पर्वतत्वावच्छिन्नविशेष्यतानिरूपित-तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतानिरू-पकत्वस्य च सत्त्वेनाहार्यतया तदन्यज्ञानावृत्तिविषयताप्रतियोगिक-त्वस्य निरुक्तोभयाभावे सत्त्वात् । स्वावच्छेदकधर्म्मावच्छिन्नत्व–स्वा-वच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन स्ववैशिष्ट्याभिधाने च निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निमद्गृहादावतिव्याप्तिर्वह्नि-

मद्गृहं निर्वह्निः पर्वतो वह्निमान् इत्यादिसमूहालम्बनस्य निरुक्तोभ-
यसम्बन्धेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावत्वावच्छि-
न्नप्रकारताविशिष्टं यद्गृहत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावप्र-
कारत्वं तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूत-
गृहत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतानिरूपक-
त्वस्य वह्न्यभावप्रकारतानिरूपकत्वस्य च सत्त्वेनानाहार्यवह्निमद्-
गृहनिश्चयावृत्तिविषयताप्रतियोगिकत्वस्य निरुक्तोभयाभावे सत्त्वा-
दिति। एवञ्च वह्न्यभावव्याप्यवान् पर्वत इत्यादौ वह्निमान् पर्वतो
वह्न्यभावव्याप्यवांश्च इत्यादिसमूहालम्बनस्य निरुक्ताहार्य्यतया नि-
रुक्तोभयाभावस्य तादृशाहार्यसमूहालम्बनानात्मकवह्निमत्पर्वतवि-
षयकनिश्चयावृत्तिविषयताप्रतियोगिकत्वेन वह्निमत्पर्वतवारकतया
सामान्य इत्यन्तनिवेशनं जगदीशोक्तं सुसङ्गतम्। न चैव-
मपि वह्न्यभावव्याप्याभाववान् पर्वतो वह्न्यभावव्याप्यवान् पर्व-
तो वह्निमांश्चेत्यादिसमूहालम्बनीयवह्न्यभावव्याप्यतदभावान्यतर-
प्रकारताया एवाहार्यज्ञानमात्रवृत्तितया प्रतिबन्धकतावच्छेदकत्व-
विरहेण तस्य निरुक्तानाहार्यतया तत्र वह्न्यभावव्याप्यावगा-
हित्वस्य वृत्तित्वेन नोक्तातिव्याप्तिरिति वाच्यम्। यत्र स्थल
विशेषे यदभावव्याप्याभावधर्मितावच्छेदककयदभावव्याप्यस्या-
हार्यो न ज्ञानस्तत्र तदभावव्याप्यस्य साध्यतायां तद्वत्पक्षे-
ऽतिव्याप्तेर्दुर्वारत्वात्। न च तथापि निश्चयस्तत्तदाहार्यभिन्नत्वेन
निवेशनीय इत्यादिग्रन्थासङ्गतिः सामान्यत आहार्यभिन्नत्वस्य निवे-
शादिति वाच्यम्। निर्वह्निर्वह्निमानित्यादौ वह्न्यभाववान्निर्वह्निरूप-
स्य बाधस्याव्याप्तेर्निर्वह्निर्वह्निमान् निर्वह्निर्वह्न्यभाववान् इत्या-
दिसमूहालम्बनीयविषयताया प्रतिबन्धकतानवच्छेदकत्वेन तस्य
निरुक्तोभयसम्बन्धेन प्रकारतावदन्यतया निरुक्तानाहार्यत्वा-
दतस्तत्तदाहार्यभेदनिवेशोऽप्यावश्यक इति। नचैवमपि निर्वह्निः
पर्वतो वह्निमानित्यादौ घटवद्गृहादावतिव्याप्तिः घटाभाववद्गृह-
कालीननिर्वह्निः पर्वतो वह्निमानित्यादिज्ञानीयविशिष्टसाध्यावगा-
हित्वस्य घटवद्गृहं घटाभाववद्गृहकालीननिर्वह्निः पर्वतो वह्नि-
मानित्यादिसमूहालम्बनस्य निरुक्ताहार्यतया तदभावस्य घटवद्-
गृहविषयकनिश्चयावृत्तित्वादिति वाच्यम् यद्रूपावच्छिन्नविषयक-

निश्चयावृत्तित्वस्य तादृशावगाहितासामान्ये विवक्षितत्वात् । अथवा यद्रूपावच्छिन्नविषयकनिश्चयावृत्ति प्रकृतपक्षे प्रकृतसाध्यावगाहित्वाव्यापकं सत् यत्प्रकृतपक्षकप्रकृतहेत्ववगाहित्वाव्यापकविषयत्वं तत्तच्छून्यज्ञानीयतादृशावगाहित्वमित्येव विवक्षितमतो नोक्तातिव्याप्तिरिति ध्येयमिति । अधिकं पूर्ववदिति प्राहुः ।

अत्र वदन्ति इत्यादिकल्पे इत्यन्तुबोध्यमित्यादिना विशिष्टान्तराघटितत्वं निवेशितम् तत्र कल्पो यथा । वस्तुतो यद्विषयकनिश्चयत्वविरोधियादृशविषयताप्रतियोगिको निरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयावृत्ति तादृशविषयताप्रतियोगिकस्तदघटितत्वमेव तादृशविशिष्टान्तराघटितत्वमित्यस्यार्थो वाच्य इति जगदीशतर्कालङ्कारभट्टाचार्याः । अत्रापि तदन्ययद्विषयकनिश्चयत्वविरोधितादृशविषयताप्रतियोगिकनिरुक्तोभयाभावे तदन्ययद्विषयकनिश्चयोत्तरानुमितित्वव्यापकत्वमवश्य निवेश्यम् अन्यथा वह्न्यभावव्याप्यवत्पर्वतकालीनस्य पर्वतीयवह्न्यभावस्य साध्यतायां पर्वतस्य पक्षतायां वह्न्यभावव्याप्यस्य हेतुतायां पर्वतीयवह्निमत्पर्वतरूपबाधस्य वह्निमत्पर्वतघटितत्वेनाव्याप्त्यापत्तेस्तत्रापि निरुक्तोभयाभावस्य वह्निमत्पर्वतविषयकनिश्चयत्वविरोधितादृशविषयताप्रतियोगिकत्वात् । अथात्र कल्पे प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादौ बाधघटितव्यभिचारेऽव्याप्तिस्तथाहि अत्र लक्षणगमनाय यादृशविषयतापदेन साध्यव्याप्यहेत्ववगाहिताया एव धर्तव्यतया तस्याश्च वृत्ति मेयत्वमवृत्तित्वव्याप्यमेयत्ववत् मेयत्वमित्याकारकानाहार्य्यनिश्चयासम्भवेन वृत्तिमेयत्वरूपबाधविषयकनिश्चयावृत्तितया तदन्ययत्पदेन बाधस्यापि धर्त्तुं शक्यतया निरुक्तव्यभिचारस्य तदघटितत्वविरहादिति चेत् ।

अत्र केचित् प्रकृतपक्षधर्म्मिकप्रकृतसाध्यावगाहित्वस्य प्रकृतपक्षे प्रकृतहेतुमत्त्वावगाहित्वस्य प्रकृतहेतुधर्म्मिकप्रकृतसाध्यनिरूपितव्याप्त्यवगाहित्वस्य चैतत्त्रित्वावच्छिन्नाभावो यद्विषयकनिश्चयत्वविरोधी तादृशविषयताप्रतियोगिकः तदन्ययद्विषयकनिश्चयत्वविरोधितादृशविषयताप्रतियोगिकः तदघटितत्वमित्येव, निष्कर्षार्थो वाच्य इति । तथा चोक्तप्रकृतहेतुधर्म्मिकसाध्यव्याप्त्यवगाहिताया एव यादृशपदेन उपादेयतया तस्याश्च बा·

धविषयकनिश्चयत्वविरोधित्वाभावेन तदन्यपदेन तस्य उपादेयत्वासम्भवेन नाव्याप्तिरिति । न चैवमपि प्रमेयत्वमवृत्ति अवृत्तिप्रमेयत्वादित्यादौ बाधघटितव्यभिचारेऽव्याप्तिस्तस्य वृत्तिमेयत्वरूपसाधनाप्रसिद्धिघटितत्वात् अवृत्तित्वव्याप्यावृत्ति मेयत्वं वृत्ति मेयत्वञ्च इति निश्चयस्याहार्यत्वादिति वाच्यम् । तादृशस्थले यद्विषयकनिश्चयावृत्तियादृशाविषयताप्रतियोगिकः साध्यव्याप्यहेत्ववगाहित्वाभावः तदन्ययद्विषयकनिश्चयवृत्तितादृशविषयताप्रतियोगिकः इत्यस्यैव वक्तव्यत्वात् । एवं प्रतियोगित्वसम्बन्धेन वन्ह्यभाववदभावकालीनवह्निमान् ह्रदोऽवृत्तिघटत्वादित्यादौ, तादृशवह्निसाध्यकतादृशहेतुकवृत्तिघटत्वादिपक्षकस्थले च यथायथं द्वित्वावच्छिन्नाभावचतुष्टयत्वावच्छिन्नाभावपञ्चत्वावच्छिन्नाभावान् निवेश्य तत्तत्स्थलीयदोषेष्वव्याप्तिः परिहरणीया स्थलभेदेन लक्षणस्य नानात्वात् शब्दैक्यस्याकिञ्चित्करत्वात् इत्याहुस्तच्चिन्त्यम् ॥

प्राञ्चस्तु यादृशविषयत्वासमानाधिकरणयद्विषयकनिश्चयत्वविरोधियादृशविषयताप्रतियोगिको निरुक्तोभयाभावस्तादृशविषयत्वासमानाधिकरणतदन्ययद्विषयकनिश्चयत्वविरोधितादृशविषयताप्रतियोगिकस्तदघटितत्वमेव निवेशनीयमिति । एवञ्च प्रमेयत्वमवृत्ति प्रमेयत्वादित्याद्युक्तस्थले बाधघटितव्यभिचारे नाव्याप्तिस्तथाहि प्रथमयादृशपदेन प्रमेयत्वधर्मिकसाध्यव्याप्त्यवगाहिताया एवोपादेयतया तादृशविषयत्वासमानाधिकरणत्वस्य वृत्तिमेयत्वविषयनिश्चयत्वेऽसत्त्वेन तदन्ययत्पदेन बाधस्य धर्तुमशक्यत्वेन मेयत्वविशिष्टतादृशव्यभिचारादेर्हेतुनिष्ठसाध्याभाववृत्तित्वादेर्वा धर्त्तव्यतया तदघटितत्वस्य उक्तबाधघटितव्यभिचारे सत्त्वात् तादृशबाधघटितत्वेपि क्षत्यभावादिति । अत एव गृहादौ घटसामान्याभावादेः साध्यतायां नीलघटवद्गृहस्य बाधत्वमुक्तं जगदीशैस्तदपि साधु सङ्गच्छते । तथाहि तत्रापि यादृशविषयतापदेन नीलघटाभाववद्गृहविषयतामादाय तादृशविषयत्वासमानाधिकरणत्वस्य घटवद्गृहविषयकनिश्चयत्वेऽसत्त्वेन तदन्ययत्पदेन घटवद्गृहस्य धर्त्तुमशक्यतया धर्त्तव्यनीलघटव्याप्यवद्गृहादिनाऽघटितत्वस्योक्तबाधे सत्त्वेन लक्षणसमन्वयसम्भवादित्याहुः ।

तत्र मनोरमम् । तथासति यादृशविषयतापदेन वह्न्यभाववद्ध्रदत्वावच्छेदेन मेयत्वाभावविषयतामादाय वह्न्यभाववद्ध्रदविषयकनिश्चयत्वस्य च यादृशविषयत्वासमानाधिकरणत्वविरहेण तदन्ययत्पदेन तस्याधर्तव्यतया धर्तव्यमेयत्वव्याप्यवद्वह्न्यभाववद्ध्रदत्वादिनाऽघटिते मेयत्वविशिष्टवह्न्यभाववद्ध्रदादौ लक्षणसमन्वयसम्भवेन मेयत्वादिघटितदोषमात्रेऽतिव्याप्त्यापत्तेः । न च प्रथमयादृशविषयतायाः सामानाधिकरण्यं द्वितीययादृशविषयतायां निवेशनीयमिति नोक्तातिव्याप्तिरिति वाच्यम् । तथा सति प्रथमयादृशपदेन ह्रदत्वावच्छेदेन मेयत्वाभावविषयतामुपादाय उक्तरीत्या अतिव्याप्तेर्दुर्वारत्वात् इति ॥

नव्यास्तु यद्विषयकनिश्चयत्वविरोधियादृशविषयतापदेन यद्विषयकनिश्चयवृत्तितानवच्छेदकयद्धर्म्मावच्छिन्नविशेष्यतानिरूपितयादृशधर्म्मावच्छिन्नप्रकारतात्वघटितधर्म्मावच्छिन्नप्रतियोगिताको निरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकतद्धर्म्मावच्छिन्नविशेष्यतानिरूपितयादृशधर्मावच्छिन्नप्रकारतात्वघटितधर्म्मावच्छिन्नप्रतियोगिताकस्तदघटितत्वमेवार्थो वाच्य इति । प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादौ वन्ह्यभाववदभावकालीनवह्निसाध्यकावृत्तिघटत्वहेतुकस्थलादौ च यद्धर्म्मावच्छिन्नविशेष्यतानिरूपितयादृशधर्म्मावच्छिन्नप्रकारतात्वपदेन प्रथमस्थले हेतुतावच्छेदकप्रमेयत्वावच्छिन्नविशेष्यतानिरूपितसाध्यनिरूपितव्याप्तिप्रकारतात्वस्य तत्स्थलीयबाधघटितव्यभिचारविषयकनिश्चयवृत्तितानवच्छेदकतया तस्य च वृत्तिमेयत्वरूपबाधविषयकनिश्चयवृत्तितानवच्छेदकत्वविरहेण तदन्ययत्पदेन तस्यानुपादेयतया तदुपादेयहेतुनिष्ठसाध्याभाववद्वृत्तित्वादिना घटितत्वस्योक्तबाधघटितव्यभिचारेऽसत्त्वेनाव्याप्तिपरिहारः । एवंरीत्यैव विशेष्यप्रकारकत्वमुपादाय लक्षणसमन्वयो बोध्यः । एतन्मते च गृहादौ घटसामान्याभावस्य साध्यतायां गृहादौ घटादिसत्त्वमेव बाधः न तु नीलघटादिमत्त्वमपि तस्य तादृशविशिष्टान्तराघटितत्वविरहादिति ध्येयम् । न चैवमपि तेजस्त्वाभावव्याप्यवद्धूमव्यभिचारी वह्निर्धूमवान्वह्नेस्तेजस्त्वाभावव्याप्याभाववद्वह्निमद्धूमव्यभिचारी वह्निर्वा धूमवानित्यादौ तेजस्त्वविशिष्टधूमव्यभिचारिवन्ह्यादावतिव्याप्तिः । तथाहि यद्धर्म्मावच्छि-

न्नविशेष्यतानिरूपितयादृशधर्म्मावच्छिन्नप्रकारतात्वपदेन धूमव्यभिचारिवह्नित्वावच्छिन्नविशेष्यतानिरूपिततेजस्त्वाभावव्याप्यत्वावच्छिन्नप्रकारतात्वमुपादाय तस्य धूमव्यभिचारिवह्निनिश्चयतेजस्त्वविशिष्टवह्निनिश्चयवृत्तितानवच्छेदकत्वाविरहेण तदन्ययत्पदेन तयोरनुपादेयतया तदुपादेयतेजस्त्वाभावव्याप्याभाववद्धूमव्यभिचारिवह्न्यादिनाऽघटितत्वस्य उक्ततेजस्त्वविशिष्टधूमव्यभिचारिवह्न्यादौ सत्त्वेन लक्षणसमन्वयसम्भवादिति वाच्यम् । धूमव्यभिचारी वह्निस्तेजस्वी तादृशवह्निस्तेजस्त्वाभावव्याप्यवानित्याद्यार्थ्यव्यक्तीनां भेदस्य निवेशस्यानावश्यकतया उक्तप्रकारतात्वे तन्निश्चयवृत्तितानवच्छेदकत्वविरहेण तस्य धर्त्तुमशक्यत्वादिति । अथ वह्निस्तेजस्त्वाभावव्याप्याभाववद्वह्निमत्तेजस्त्वाभावव्याप्यवानित्यादौ तेजस्त्वाभावव्याप्याभाववद्वह्निमत्तेजस्त्वाभावव्याप्याभाववद्वह्निरूपबाधस्य तेजस्त्वाभावव्याप्याभाववद्वह्निरूपबाधात्मकेन विशिष्टान्तरेण घटितत्वादव्याप्तिरत उक्तप्रकारतात्वपदेन पक्षविशेष्यकत्वविशिष्टसाध्यप्रकारतात्वस्यैव धर्त्तव्यतया तस्य च तादृशबाधात्मकविशिष्टान्तरविषयकनिश्चयवृत्तितानवच्छेदकतया तदन्ययत्पदेन तस्य उपादेयत्वसम्भवादिति सुधीभिर्ध्येयम् ॥ ० ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सामान्यनिरुक्तिजागदीशी क्रोडपत्रं सम्पूर्णम् ॥

अथ कालीशङ्करसिद्धान्तवागीशविरचितं

# सव्यभिचारजागदीशीक्रोडपत्रम्



साध्यसन्देहजनककोटिद्वयोपस्थापकपक्षधर्म्मताज्ञानविषयत्वे सति हेत्वभिमत इति मूलम् । संशयं प्रति साधारणादिधर्म्मज्ञानत्वेन हेतुत्वे कोटिद्वयोपस्थापकेत्यस्य वैयर्थ्यापत्तिरतः संशयहेतुकोटिद्वयोपस्थितिं प्रत्येव ताद्रूप्येण हेतुत्वम् संशयसामान्यं प्रति तु धर्म्मिज्ञानं हेतुरिति मतानुसारेण व्याचष्टे कोटीत्यादीति जगदीशः । अथ धर्म्मितावच्छेदकेऽतिव्याप्तिवारणार्थमेव कोटिद्वयोपस्थापक इत्यस्य सार्थकतासम्भवेन कथं तद्वैयर्थ्याभिधानमिति । न च साधारणादिधर्मवत्ताज्ञानस्य संशयं प्रति साक्षाद्धेतुत्वेन धर्मितावच्छेदकप्रकारकज्ञानस्य स्वातन्त्र्येण कारणत्वमेव नास्ति धर्मितावच्छेदकप्रकारकज्ञानहेतुतायामेव साधारणादिधर्मविषयत्वान्तर्भावादिति वाच्यम् तथासति सन्देहं प्रत्यसाधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थितिं प्रति तु तादृशधर्मज्ञानत्वमात्रेण इत्यभिप्रेत्य—इत्यादिवक्ष्यमाणदीधितिकारीयसिद्धान्तग्रन्थासङ्गतेः । साक्षात् साधारणादिधर्मवत्ताज्ञानहेतुतायामपि पदजन्योपस्थितिजन्यसंशये पदजन्यधर्मिज्ञानत्वेन हेतुताया आवश्यकत्वेन धर्मितावच्छेदकेऽतिव्याप्तितादवस्थ्याच्च । एतेनोत्तरग्रन्थस्य सन्देहं प्रत्येव साधारणधर्मवद्धर्मिज्ञानजन्योपस्थितित्वेन हेतुत्वम् कोटिद्वयोपस्थितिं प्रति तु साधारणधर्मज्ञानत्वमात्रेणेत्यर्थकरणेऽपि न निस्तार इति चेन्न भट्टाचार्योक्तरीत्यैव तादृशातिव्याप्तिवारणसम्भवादिति ध्येयम् ।

न च व्याप्यविरुद्धयोः साधारण्यभ्रममादायातिव्याप्तिः धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसंशयजनकं तद्रूपावच्छिन्नत्वस्योक्तत्वादिति शिरोमणिः । धर्मिणीति । तथा च यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारत्वं साध्यसंशयत्वघटित-

धर्मावच्छिन्नं प्रति जनकतावच्छेदकं तद्रूपवत्त्वं विवक्षितम्
पर्वतत्वाद्यवच्छिन्नधर्मिकवह्नितदभावसहचरितत्वाद्यवच्छिन्नप्रका-
रताकत्वेन वह्निसंशयजनकत्वात् तादृशसहचरितत्वस्य धूमादाव-
सत्त्वान्नातिप्रसङ्गः। अत्र जनकताया अवच्छेदकत्वं स्वरूपसम्बन्ध-
विशेषः। साधारणत्वाद्यभानेपि तद्घटकतत्तद्रूपेण वस्त्वन्तरा-
वगाहिभ्रमादपि सन्देहसम्भवापत्तेः। किन्त्वनतिरिक्तवृत्तित्वं न
तु साधारणत्वाद्यवच्छिन्नप्रकारताकत्वमात्रं तथा इत्यतो धर्मिणी-
त्युक्तम्। न च साधारणत्वाद्यवच्छिन्नहेतुमत्तासंशयस्य सन्देहाजन-
कत्वादसम्भवः किञ्चिद्धर्मिकयद्रूपावच्छिन्नप्रकारकत्वं साध्यसन्देह-
जनकताशून्यनिश्चयावृत्ति तद्रूपवत्त्वस्यैव ज्ञानपदमहिम्ना विवक्षितत्वा-
दिति। किञ्चिद्धर्मिकयद्रूपावच्छिन्नवत्त्वनिश्चयत्वं साध्यसन्देहजनक-
तानतिरिक्तवृत्ति तद्रूपवत्त्वन्तु नार्थः पश्चाद्वक्ष्यमाणस्य व्याप्यसंशय-
स्य पृथक्कारणतामते इत्यादिग्रन्थस्य विरोधापत्तेरिति ध्येयमिति ज-
गदीशः। अथ व्याप्यसंशयस्येत्यादिग्रन्थे व्यापकसंशयं प्रति व्या-
प्यसंशयस्य व्याप्यवत्ताज्ञानत्वेन हेतुतायाः स्वयमेव वक्ष्यमाणत्वेन
व्याप्यवत्तानिश्चयत्वस्यापि जनकतानतिरिक्तवृत्तित्वाद्व्याप्यत्वाव-
च्छिन्नेऽतिव्याप्तिः सम्भवत्येवेति कथमुक्तं व्याप्यसंशयस्येत्यादि-
ग्रन्थविरोध इति। यदि च व्याप्यसंशयत्वेन जनकत्वाभिप्रा-
येणैव तद्ग्रन्थोक्तिरित्युच्यते तदा स्वमतेपि व्याप्यत्वावच्छिन्न-
प्रकारकत्वस्य साध्यसन्देहजनकताशून्यव्याप्यवत्तानिश्चयवृत्तित्वे-
नातिव्याप्त्यसम्भवाद्व्याप्यसंशयस्येत्यादिग्रन्थविरोधस्तुल्य एवेति
चेदत्राहुः। व्याप्यसंशयस्य संशयत्वेन जनकत्वमभिप्रेत्यैव
इदानीमुत्तरग्रन्थस्य विरोधाभिधानम् व्याप्यवत्तानिश्चयत्वस्य ज-
नकतातिरिक्तवृत्तित्वात्। न च स्वमतेपि व्याप्यत्वावच्छिन्नप्र-
कारकत्वस्य जनकताशून्यनिश्चयवृत्तित्वात् उत्तरग्रन्थविरोधः स-
मान इति वाच्यम्। यदङ्कुरविशेषस्य व्याप्यवत्ताज्ञानं संशयात्मकमेव
जायते तदङ्कुरविशेषस्य व्याप्यत्वावच्छिन्नप्रकारत्वस्य जनकताशू-
न्यसंशयान्योदासीनज्ञानावृत्तित्वेन तदङ्कुरविशेषस्य व्याप्यादाव-
तिव्याप्तिपरतयैव स्वमते उत्तरग्रन्थसङ्गतेः। तदङ्कुरविशे-
षस्य संशयान्यव्याप्यवत्तानिश्चयाप्रसिद्ध्या वक्ष्यमाणातिव्याप्तिसङ्ग-
तिरेवेति। न च तथापि तदङ्कुरविशेषव्याप्यत्वावच्छिन्नप्रकारक-

त्वस्य जनकताशून्यभगवन्निश्चयवृत्तित्वात् वक्ष्यमाणातिव्याप्त्यसङ्गतिरेवेति वाच्यम् । नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भाव इत्यादिनियमात् नित्यज्ञाने जनकताविरहेण साधारणत्वाद्यवच्छिन्नप्रकारकत्वस्यापि तादृशजनकताशून्यभगवन्निश्चये वृत्तित्वादसंभवभिया जन्यज्ञानीययद्रूपावच्छिन्नप्रकारकत्वस्यैव विवक्षणीयतया तदङ्कुरविशेषस्य व्याप्यत्वावच्छिन्नप्रकारकत्वस्य भगवज्ज्ञाने सत्त्वेपि क्षतिविरहादिति ध्येयम् ॥

केचित्तु विशेषणसंशयस्य विशिष्टसंशयजनकत्वमतेऽतिव्याप्तिवारणाय इदानीमेव जनकतायां निश्चयत्वावच्छिन्नत्वं निवेशनीयमिति तन्मते व्याप्यसंशयस्येत्यादिग्रन्थविरोधानुधावनम् । स्वमते च विशेषणसंशयस्य जनकत्वं न स्वीक्रियते इत्याहुः । तच्चिन्त्यम् ।

अथ यत्किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारतासामान्यं तादृशजनकतावच्छेदकमित्युक्तावेव सामञ्जस्येऽनतिरिक्तवृत्तित्वनिवेशो व्यर्थ इति चेन्न सामान्यपदस्य व्यापकतावाचित्वेन तादृशप्रकारतात्वव्यापकं जनकतावच्छेदकत्वमित्यर्थपर्यवसितत्वेन स्वमते संशयनिश्चययोर्विषयताभेदात् व्यापकतारक्षणायानाहार्यनिश्चयीयप्रकारताया भवतापि निवेशनीयतया लाघवानवकाशात् । न च तथापि अप्रामाण्यज्ञानाभावानिवेश एव लाघवमिति वाच्यम् । अप्रामाण्यज्ञानाभावस्य स्वतन्त्रकारणत्वाभिप्रायकत्वादिति ध्येयम् ॥

विप्रतिपत्तौ प्रत्येकं कोटिद्वयोपस्थापकत्वाभावाल्लक्षणस्थद्वयपदेन तद्वारणम् मिलितस्य तदुपस्थापकत्वेपि न तद्वत्ताज्ञानं तथा न वा मिलित्वा द्वयोर्जनकत्वं तथात्वेपि येन सम्बन्धेन तद्वत्ताज्ञानं तदुभयकोट्युपस्थापकन्तेन सम्बन्धेन हेतुत्वेऽवश्यं सव्यभिचारत्वमिति शिरोमणिः । तथा च धर्म्मिणि यद्वत्ताज्ञानत्वेन कोटिद्वयोपस्थितिजनकत्वं तद्वत्त्वमेव सव्यभिचारत्वं विवक्षितम् । न च विप्रतिपत्तिवाक्यत्वेन तथात्वम् प्रत्येकार्थोपस्थितिं प्रति प्रत्येकज्ञानत्वेन हेतुत्वादतो नातिप्रसङ्गः शब्दो नित्यः शब्दो नित्यो न वेत्यादिवाक्यवत्त्वादित्यादौ बोध्यत्वादिसम्बन्धेन हेतुतायां विप्रतिपत्तेः सव्यभिचारत्वमिष्टमेवेति भाव इति जगदीशः । अथैतन्मतेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यैव प्रतिनिविष्टतया बोध्यत्वादिसम्बन्धेनेव ता-

दात्म्यादिसम्बन्धेनापि शब्दो नित्यो न वेत्यादिवाक्यस्य हेतुतायामपि अनित्यत्वादिसाध्यकस्थले सव्यभिचारत्वापत्तिः । तादात्म्येन तादृशवाक्यवत्त्वज्ञानत्वस्यापि कोटिद्वयोपस्थितिजनकतानतिरिक्तवृत्तित्वात् । एवमेकवाक्यकालीनापरवाक्यस्यापि तादात्म्येन सव्यभिचारत्वापत्तिः तादात्म्येनैकवाक्यकालीनापरवाक्यवत्त्वाज्ञानत्वस्यापि कोटिद्वयोपस्थितिजनकतानतिरिक्तवृत्तित्वादिति चेन्न स्वानिरूपकविशिष्टविषयत्वानवच्छिन्नत्वस्य जनकताविशेषणत्वेनैव उक्तातिव्याप्तिवारणसम्भवात् विप्रतिपत्तिवाक्यज्ञानीयजनकतायां स्वानिरूपकापरवाक्यविषयित्वावच्छिन्नत्वादिति ध्येयम् ।

पक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाव्याप्तिरनैकान्तिक इति मूलम् । सम्बन्धपदबलेन प्रकृतहेतुसम्बन्धितया विरोधित्वे तात्पर्योपवर्णनेन प्रायशो बाधादिवारणेऽपि घटत्वमानित्यं घटत्वादित्यादौ प्रयत्नसाध्यमिव तत् प्रतिभाति इति शिरोमणिः । प्रकृतहेतुसाध्यकानुमितिसामान्यं प्रति प्रकृतहेतुसम्बन्धितया यद्रूपवत्ताज्ञानं विरोधि तत्त्वमित्यभिप्रायेणोक्तदोषवारणेऽपि ह्रदो वह्निमान् धूमादित्यादौ स्वरूपासिद्धहेतुवारणार्थमुपात्तस्य पक्षवृत्तित्वे सतीत्यस्य व्यर्थतापत्तिः धूमनिष्ठह्रदवृत्तित्वाभावज्ञानस्य धूमलिङ्गकानुमितिसामान्यं प्रत्यविरोधित्वात् तत्रातिव्याप्त्यसम्भवादित्याशयेन प्रयत्नसाध्यमित्युक्तमिति जगदीशेनोक्तम् । अत्रानुमितिसामान्यनिवेशाद्बाधादिवारणेऽपि साध्यनिष्ठावृत्तित्ववारणाय प्रकृतहेतुसम्बन्धितयेति । न च काञ्चनमयवह्निमान् वह्नेरित्यादौ साध्याप्रसिद्धिवारणमशक्यमिति वाच्यम् स्वातन्त्र्येण साध्यग्रहाविरोधित्वस्यापि निवेशनीयत्वात् । अथ प्रकृतहेतुसाध्यकानुमितिसामान्यविरोधित्वानिवेशेऽपि हेतुनिष्ठावृत्तित्ववारणार्थमेव पक्षवृत्तित्वे सतीत्यस्य सार्थक्यसम्भवेन तद्वैयर्थ्यदानमनुचितमिति चेन्न प्रकृतहेतौ वृत्तिमत्त्वग्रहाविरोधित्वस्यापि निवेशनीयत्वात् तद्वारणसम्भवे पक्षवृत्तित्वपर्यन्तनिवेशस्य व्यर्थताया दुर्वारत्वादिति ध्येयम् ॥

साध्याव्याप्यत्वे सति साध्याभावव्याप्यहेत्वाभासत्वमिति मूलम् । हेत्वाभासत्वं हेतुवदाभासमानत्वं वत्यर्थो वर्तमानत्वम् एवञ्च साध्यतदभावव्याप्यत्वग्रहविरोधिवृत्तिमत्त्वग्रहाविरोधित्वरूपवत्त्वमर्थः । साध्यतदभाववद्वृत्तित्वं साधारण्यम् निश्चितसाध्यतदभाववद्व्यावृत्त-

त्वमसाधारण्यम् तच्च व्याप्तिद्वयग्रहविरोधीति हृदयमिति शिरोमणिः । असाधारण्यमिति । इदमुपलक्षणम् केवलान्वयिधर्म्मावच्छिन्नपक्षताकत्वे सति साध्यतदभाववद्वृत्तित्वमनुपसंहारित्वमित्यपि द्रष्टव्यम् । अत्र च यादृशविशिष्टविषयकत्वेन ज्ञानस्य व्याप्तिद्वयग्रहविरोधित्वं नार्थः कथितसाधारण्यादेव तथात्वेनासम्भवापत्तेः । किन्तु प्रकृतहेतौ साध्यस्य तदभावस्य च व्याप्त्यवगाहित्वं यादृशविशिष्टविषयकनिश्चयत्वविरोधि तद्वत्त्वमेव प्रमेयत्वविशिष्टसपक्षविपक्षवृत्तिहेतोर्हेत्वाभासस्य सामान्यलक्षणोक्तदिशैव वारणीयत्वादिति ध्येयमिति जगदीशः । अत्रेदं बोध्यम् । यादृशविशिष्टविषयकत्वेन ज्ञानस्य व्याप्तिद्वयग्रहविरोधित्वं तद्वत्त्वमित्यर्थकरणे स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशाभिप्रायेणैवासम्भवापत्तिवारणम् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे च गौरवमेव उक्तार्थपरित्यागे बीजम् । न च प्रकृतहेतौ साध्यस्य तदभावस्य च व्याप्त्यवगाहित्वं यादृशविशिष्टविषयकनिश्चयत्वविरोधि तद्वत्त्वमित्यर्थकरणेपि धूमवान् वह्न्यभावव्याप्यवत्पर्व्वतकालीनवह्नेरित्यादौ वह्निमत्पर्व्वतेऽतिव्याप्तिः प्रकृतहेतौ साध्यतदभावव्याप्त्यवगाहित्वस्य वह्निमत्पर्व्वतविषयकनिश्चयेप्यवृत्तित्वादिति तद्वारणाय प्रकारान्तरानुसरणे च गौरवन्तुल्यमेवेति वाच्यम् विशिष्टसाध्यसाधनावगाहित्वं तादृशविशिष्टविषयकनिश्चयत्वविरोधि तदन्यत्वार्थकत्वे साध्याप्रसिद्ध्यादिबाधकविशिष्टसाध्यसाधनग्रहाविरोधित्वदलेनैवोक्तातिव्याप्तिवारणसम्भवादिति ध्येयम् ।

अथ प्रमेयत्वविशिष्टसपक्षविपक्षवृत्तिहेत्वाभाससामान्यलक्षणोक्तदिशा वारणे केवलान्वयिधर्म्मावच्छिन्नपक्षताकत्वे सति साध्यतद्भाववद्वृत्तित्वरूपानुपसंहारित्वेऽव्याप्तिः अत्रापि हेत्वाभाससामान्यलक्षणोक्तविशिष्टान्तराघटितत्वस्यासत्त्वादिति चेत् अत्राहुः । प्रतियोगिनि स्वत्वमन्तर्भाव्य प्रकृतलक्षणाक्रान्तं यद्विशिष्टान्तरं तद्घटितं यद्यत् स्वन्तदन्यत्वरूपमेव विशिष्टान्तराघटितत्वं निवेशनीयम् तथा च भेदप्रतियोगिनि निरुक्तानुपसंहारित्वभिन्नत्वं निवेशनीयम् तथाच निरुक्तानुपसंहारित्वस्य विशिष्टान्तरघटितत्वेपि निरुक्तानुपसंहारित्वाभिन्नत्वाभावान्नाव्याप्तिः । निरुक्तानुपसंहारित्वञ्च तादृशानुपसंहारित्वपर्य्याप्तावच्छेदकताकप्रकारताभिन्नप्रकारतावच्छेदकत्वम् नातो विशिष्टानुपसंहारित्वस्यानुपसंहा-

रित्वानतिरिक्तत्वेप्यतिव्याप्तिरिति ध्येयम्। इदन्त्ववधेयम्। साधननिष्ठावृत्तित्ववारकेन प्रकृतहेतौ वृत्तित्वग्रहाविरोधित्वार्थकहेत्वाभासत्वदलेनैव साधनाप्रसिद्धेरपि वारणसम्भवात् तद्वारणाय पुनः साधनग्रहाविरोधित्वनिवेशनं व्यर्थमिति। यत्तु हेतौ वृत्तिमत्त्वग्रहाविरोधित्वनिवेशे साधननिष्ठावृत्तित्ववारणसम्भवेपि साध्यनिष्ठावृत्तित्ववारणमशक्यमिति तदुभयवारणार्थं वृत्तिनात्वपर्य्याप्तावच्छेदकताकप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वस्यैव हेत्वाभासत्वदलेनैव विवक्षणीयतायां तद्दलेनैव साध्यसाधनाप्रसिद्धिवारणमशक्यमेवेति साध्यसाधनग्रहाविरोधित्वनिवेशनमावश्यकमिति। तच्चिन्त्यम्। प्रकृतहेतौ वृत्तित्वग्रहाविरोधित्वविशिष्टसाध्यवत्त्वग्रहाविरोधित्वविशेषणद्वयनिवेशनैव सर्वसामञ्जस्ये उक्तरीत्या विशेषणद्वयदानस्यानौचित्यादिति सुधीभिरालोचनीयम्।

परे तु साध्यसाधनभेदेन व्यभिचारभेदाद्यत्र वृत्तिमत्त्वादिग्रहविरोधिरूपमप्रसिद्धं तत्र हेतुग्रहाविरोधित्वं नोपादेयम्। तच्चानुपसंहारिग्रन्थे वक्ष्यते एवञ्च यत्र वृत्तिमत्त्वग्रहविरोधि प्रसिद्धं तत्र हेतौ वृत्तिमत्त्वग्रहाविरोधित्वम् यत्र च साधनाप्रसिद्धिमात्रं प्रसिद्धम् तत्र साधनग्रहाविरोधित्वमेव निवेशनीयम् यत्र तूभयरूपमप्रसिद्धं तत्र तदुभयग्रहाविरोधित्वम् न निवेश्यमित्याशयेन साधनग्रहाविरोधित्वं निवेशनीयमित्याहुः।

कोटिद्वयसहचरितत्वादिना ज्ञातस्य ऊर्द्धत्वादेरूर्द्धत्ववत्त्वादिधर्म्मिणि ज्ञानमेव साध्यसन्देहजनकं न तु तदानीं साहचर्य्यादिज्ञानमपेक्ष्यते इति नये तु यद्रूपविशिष्टत्वेनागृहीतस्य धर्म्मिवृत्तिताज्ञानं तथा तद्वत्त्वं वाच्यमिति शिरोमणिः। इदञ्च संस्कारस्य स्मृतिमात्रे हेतुत्वप्रवादमनुसृत्य यदा तु स्थाणुत्वादिसंशयम्प्रति इदंधर्म्मिकोर्द्धत्वनिश्चयः स्थाणुत्वतदभावसहचरितोर्द्धत्वसंस्कारश्च द्वयमेव विनिगमनाविरहेण हेतुरिति पक्षस्तदा साध्यसन्देहत्वावच्छिन्नं प्रति यद्रूपावच्छिन्नप्रकारताकसंस्कारत्वेन यद्रूपावच्छिन्नप्रकारताकत्वेनैव वा हेतुत्वं तद्रूपवत्त्वमेव वक्तव्यमित्यवधेयमिति जगदीशः। अथ यद्रूपप्रकारताकत्वेन साध्यसन्देहजनकत्वं तद्रूपवत्त्वमित्युक्तौ तादात्म्येन हेतौ व्याप्यादावतिव्याप्तिः शुद्धहेतुतावच्छेदकावच्छिन्नप्रकारतायामपि हेतुधर्म्मिकसाधारण्यादिप्रकारकसंस्कारवैशिष्ट्या-

वच्छिन्नजनकतायामवच्छेदकत्वादिति चेन्न जनकतायां संस्कारवैशिष्ट्यानवच्छिन्नत्वस्य ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य वा निवेशे नैवोक्तातिव्याप्तिवारणसम्भवादिति । वस्तुतस्तु संस्कारज्ञानयोः साधारण्यादिप्रकारकधर्मिविशिष्टधर्म्मिवृत्तिताज्ञानत्वेन धर्म्मिवृत्तिताज्ञानविशिष्टसाधारण्यादिप्रकारकत्वेन च संशयजनकत्वं न तु संस्कारस्य तत्र प्रवेशः एतच्च भट्टाचार्य्येणोक्तम् । एवञ्च यद्रूपावच्छिन्नप्रकारताकसंस्कारत्वेन संशयजनकत्वमित्युक्तपूर्व्वकल्पेऽसम्भवः स्यादतो द्वितीयकल्पानुसरणम् । तत्र च प्रकारतायां संस्कारीयत्वनिवेशेनैवोक्तातिव्याप्तिवारणं सम्भवति ज्ञानीयहेतुप्रकारताया एव संशयजनकतावच्छेदकत्वात् । साधारण्यादिप्रकारकसंस्कारत्वस्य जनकतावच्छेदकत्वेपि संस्कारीयसाधारण्यादिप्रकारताया जनकतावच्छेदकत्वाच्च न पूर्व्वकल्पोक्तासम्भव इति ध्येयम् ।

यद्यद्धर्म्मिवृत्तित्वं हेतोर्ज्ञायते तत्रतत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वमिति शिरोमणिः । वस्तुतो यद्यद्धर्म्मिकयादृशरूपाविशिष्टप्रकृतहेतुमत्तानिश्चयत्वं तत्तद्धर्म्मिकप्रकृतसाध्यतद्व्याप्यप्रकृतहेतुमत्तानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशरूपवत्त्वमिति जगदीशः । न च यद्यद्धर्म्मिकयादृशरूपावच्छिन्नवत्तानिश्चयत्वं तत्तद्धर्म्मिकतादृशानुमितिप्रतिबन्धकतानतिरिक्तवृत्तीत्युक्तावेव सर्व्वत्र यादृशपदेन दोषतावच्छेदकमादाय लक्षणसमन्वयात् प्रकृतहेतुमत्त्वपर्य्यन्तनिवेशो व्यर्थ इति वाच्यम् । वह्निव्यापकीभूताभावप्रतियोगिजलत्वस्येव जलव्यापकवह्न्यभाववत्त्वस्यापि असाधारण्यरूपदोषतावच्छेदकतया तदवच्छिन्नवत्तानिश्चयत्वस्यानुमितिप्रतिबन्धकतातिरिक्तवृत्तितया जलव्यापकवह्न्यभावरूपासाधारण्यसङ्ग्रहार्थमेव प्रकृतहेतुमत्त्वनिवेशस्यावश्यकत्वात् । तन्निवेशे च जलव्यापकवह्न्यभाववत्त्वरूपेण हेतुमत्तानिश्चयमादाय तत्र लक्षणसमन्वयादिति भावः । अथैतत्कल्पे वह्निमान् अभावादित्यादौ वह्न्यभावेऽतिव्याप्तिः । प्रतियोगित्वसम्बन्धेन वह्निविशिष्टाभावप्रकारकह्रदधर्म्मिकनिश्चयत्वस्य तत्तद्धर्म्मिकवह्निविधेयकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वात् । एवं महानसीयवह्न्यभाववान् वह्नेरित्यादौ घटवृत्तित्वविशिष्टद्रव्यत्वाभाववान् द्रव्यत्वादित्यादौ महानसीयवह्नौ घटवृत्तित्वविशिष्टद्रव्यत्वे चातिव्याप्तिः । घटादिधर्म्मिकमहानसीयत्वविशिष्टद्रव्यत्वादिनिश्चय-

त्वस्य तत्तद्धर्म्मिकमहानसीयवह्न्यभावघटवृत्तित्वविशिष्टद्रव्यत्वाभाववविधेयकानुमितिप्रतिबन्धकतानातिरिक्तवृत्तित्वादिति चेत् । अत्र केचित् यद्यद्धर्म्मिकयादृशरूपविशिष्टहेतुमत्तानिश्चयत्वं तादृशानुमितिनिरूपिततादृशरूपावच्छिन्नविषयतानन्तःपातिविषयताशून्यज्ञानीयतादृशरूपावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतानातिरिक्तवृत्ति तद्रूपवत्त्वविवक्षणे न कोऽपि दोषः । असाधारण्यस्थले तादृशरूपावच्छिन्नविषयतानन्तःपातिविषयताशून्यवह्निव्यापकीभूताभावप्रतियोगि जलमिति–ज्ञानीयविषयत्वावच्छिन्नप्रतिबन्धकतामादाय साधारणस्थले च साध्याभाववद्वृत्ति साधनमिति–ज्ञानीयविषयत्वावच्छिन्नप्रतिबन्धकतामादाय लक्षणसमन्वयः । वह्निमान् अभावादित्यादिप्रागुक्तस्थले वह्न्यभावत्वाद्यवच्छिन्नविषयतानन्तःपातिविषयताशून्यवह्न्यभाव इत्यादिज्ञानीयविषयत्वावच्छिन्नानुमित्यप्रसिद्ध्यैव नोक्तातिव्याप्तिः। यादृशरूपपदञ्च दोषतावच्छेदकरूपपरम्। एतेन वह्निमान् जलादित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलादावप्यतिव्याप्तिर्निवारिता । तादृशजलत्वावच्छिन्नविषयतानन्तःपातिविषयताशून्यज्ञानवृत्तितादृशजलत्वावच्छिन्नविषयित्वावच्छिन्नविषयित्वाभावादिति । जलावच्छेदेन वह्न्यभाववत्त्वञ्च लक्ष्यमेव हेतुमति साध्याभावस्य साधारण्यरूपवत्त्वादित्याहुः ।

नव्यास्तु यद्यद्धर्म्मिकयादृशरूपविशिष्टहेतुमत्तानिश्चयत्वमित्यत्र स्वावच्छिन्नविषयित्वसम्बन्धेन यादृशरूपस्य वैशिष्ट्यं हेतुमत्तानिश्चयत्वांश एव विवक्षणीयम्। स्वपदञ्च दोषतावच्छेदकपरम्। तथा च वह्निमान्जलादित्यादौ स्वावच्छिन्नविषयित्वसम्बन्धेन वह्निव्यापकीभूताभावप्रतियोगिजलत्वविशिष्टघटपटादिधर्म्मिकसमूहालम्बनहेतुमत्तानिश्चयत्वस्य तत्तद्धर्म्मिकप्रकृतानुमितिप्रतिबन्धकतानातिरिक्तवृत्तित्वेन असाधारण्ये लक्षणसमन्वयः। वह्निमान् अभावादित्यादौ तादृशसम्बन्धेन वह्न्यभावत्वविशिष्टहेतुमत्तानिश्चयत्वस्य घटाभाववान् वह्न्यभावश्च इत्यादिसमूहालम्बनज्ञानेपि सत्त्वेन तत्रचानुमितिप्रतिबन्धकत्वाभावात् वह्न्यभावादौ नातिव्याप्तिः । अत एव यादृशरूपपदस्य दोषतावच्छेदकरूपवद्यद्यद्धर्म्मिकयादृशरूपावच्छिन्नवत्तानिश्चयत्वनिवेशेनैव सामञ्जस्ये हेत्वंशे यादृशरूपस्य वैशिष्ट्यनिवेशो व्यर्थ इति प्रत्युक्तम् । हेत्वंशे यादृशरूपस्य वैशि-

ष्ट्यानिवेशादिति प्राहुः ।

परे तु यद्यद्धर्म्मिकहेतुमत्तानिश्चयाविशिष्टयादृशरूपावच्छिन्नवत्त्वनिश्चयत्वं तत्तद्धर्म्मिकतादृशानुमितिप्रतिबन्धकतानातिरिक्तवृत्ति तादृशरूपवत्त्वं लक्षणार्थो विवक्षणीयः । यादृशरूपपदञ्च लक्ष्यतावच्छेदकपरम् । तथा च वह्निमान् अभावादित्यादौ हेतुमत्तानिश्चयविशिष्टवह्न्यभाव इत्याकारकनिश्चयस्यानुमितिप्रतिबन्धकत्वाभावाद्वह्न्यभावादौ नातिव्याप्तिरिति वदन्ति ।

ननु वह्निमान् अभावप्रतियोगित्वाभाववज्जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलादिरूपासाधारण्येऽव्याप्तिः । तादृशप्रतियोगित्ववत्प्रकृतहेतुतावच्छेदकीभूताभाववज्जलत्वादिरूपावच्छिन्नवत्तानिश्चयस्य नियताहार्य्यत्वेन प्रतिबन्धकत्वात् । हेतुतावच्छेदकघटकीभूतधर्म्मनिवेशे च वह्निमान् जलशैवालोभयस्मादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलादिरूपासाधारण्ये भट्टाचार्य्यपत्रिकोक्ताव्याप्तिः । यदि च प्रकृतलक्षणेऽनुमितौ प्रकृतहेतुधार्म्मिकसाध्यान्वयव्याप्त्यवगाहित्वस्येव व्यतिरेकव्याप्त्यवगाहित्वस्याप्यवश्यनिवेशनीयतया उक्तस्थले तादृशानुमितेरप्रसिद्ध्या एतल्लक्षणालक्ष्यत्वमेव स्वीक्रियते तदा वह्निमान् अवृत्तिजलादित्यादौ वह्न्यभाववद्वृत्तित्वार्थकसाधारण्ये वह्निव्यापकीभूताभावप्रतियोगिजलात्मकासाधारण्ये च तत्तद्रूपविशिष्टहेतुमत्तावगाह्यनाहार्य्यनिश्चयाप्रसिद्ध्याऽव्याप्तिरिति चेन्न यत्किञ्चिद्रूपावच्छिन्नविशेष्यतानिरूपितप्रकारत्वाभिन्नयद्रूपप्रकारकानाहार्य्यज्ञानीयविशेष्यतावच्छेदकं यद्धेतुतावच्छेदकं तद्रूपविशिष्टतत्तद्धेतुतावच्छेदकावच्छिन्नवत्तानिश्चयविवक्षणादेव सर्व्वसामञ्जस्यादिति सुधीभिर्भाव्यम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सव्यभिचारजागदीशीक्रोडपत्रं समाप्तम् ॥



ॐ नमो गणेशाय ॥

अथ कालीशङ्करसिद्धान्तवागीशविरचितं

# साधारणजागदीशीक्रोडपत्रम्।

अथ साध्यतद्वदत्यन्तान्योन्याभावगर्भव्यभिचारयोरेकोपादानेऽन्यतराव्याप्तिः साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयत्वेनाभावद्वयानुपगमेपि हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य तादृशाभावे हेतुसामानाधिकरण्यस्य साध्यतद्वदादौ हेतुसमानाधिकरणतादृशाभावप्रतियोगित्वादेश्चासङ्ग्रह इति शिरोमणिः। साध्यवत्तेति। यादृशाभाववत्तानिश्चयत्वेन साध्यवत्ताज्ञानविरोधित्वं तादृशाभाववत्त्वेनेत्यर्थः। तेन साध्याभावव्याप्यवद्वृत्तित्वे नातिप्रसङ्ग इति जगदीशेनोक्तम्। अथैवमपि साध्यव्यापकाभाववद्वृत्तित्वेऽतिप्रसङ्गो दुर्वार एवेति चेत्तत्तत्प्रतिबन्धकताभेदनिवेशेनैव उक्तातिव्याप्तिवारणसम्भवादिति ध्येयम्। यत्तु प्रतिबन्धकतायां प्रकृतसाध्यवद्वृत्तित्वविषयित्वघटितधर्म्मानवच्छिन्नत्वनिवेशान्नायमतिप्रसङ्गः साध्यव्यापकाभाववत्ताज्ञानीयप्रतिबन्धकताया व्यापकताघटकीभूतसाध्यवद्वृत्तित्वविषयित्वावच्छिन्नत्वात्। न चैवमपि महानसीयधूमसाध्यकस्थले धूमव्यापकाभाववद्वृत्तित्वेऽतिप्रसङ्गो दुर्व्वार एव धूमव्यापकतायां महानसीयधूमवद्वृत्तित्वस्याघटकत्वादिति वाच्यम्। साध्यतावच्छेदकेतरधर्मानवच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयत्वानवच्छिन्नत्वस्य विवक्षितत्वादिति। तत्तुच्छम् तथासति धूमवद्वृत्तित्वकालीनधूमवान् वह्नेरित्यत्र धूमवद्वृत्तित्वकालीनधूमाभाववद्वृत्तित्वाद्यसङ्ग्रहापत्तेरिति ध्येयम्॥ १॥

साध्याभावव्याप्यादिव्यावृत्तेन साध्यवत्ताज्ञानविरोधित्वेन साध्यतद्वतोरत्यन्तान्योन्याभावावनुगमय्य तत्र हेतुसामानाधिकरण्या-

भावग्रहविरोधित्वमिति शिरोमणिः । अत्र यादृशविशिष्टप्रकारत्वेन प्रकृतसाध्यवत्ताज्ञानत्वावच्छिन्नं प्रति प्रतिबन्धकत्वं तत्त्वमेवात्र साध्यवत्ताज्ञानविरोधित्वं वाच्यम् शशशृङ्गवान् शृङ्गादित्यादौ शशीयत्वाभावस्यापि साध्यतावच्छेदकांशे प्रकृतसाध्यवत्ताज्ञानविरोधितया तन्निष्ठहेतुसामानाधिकरण्येऽतिव्याप्त्यापत्तेः । एवञ्च शृङ्गवान् द्रव्यत्वादित्यत्र शृङ्गाभावनिष्ठद्रव्यत्वसामानाधिकरण्येऽव्याप्तिः शृङ्गसामान्याभावस्य शशीयशृङ्गवत्ताज्ञानत्वावच्छिन्नं प्रत्यविरोधित्वात् । शृङ्गवत्ताज्ञानत्वावच्छिन्नं प्रत्येव तस्य तथात्वात् । एवं धूमान्यधूमवान् वह्नेरित्यादौ धूमान्यधूमवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यत्वाप्रसिद्धिश्च स्यादतो लक्षणान्तरमाह साध्यवत्ताज्ञानविरोधिनि तादृशाभावग्रहविरोधिहेत्वाभासतावच्छेदकरूपवत्त्वं वेति । तथा च साध्यवत्ताज्ञानं प्रति विरोधितामात्रनिवेशान्नोक्ताव्याप्तिः । शशशृङ्गवान् शशशृङ्गादित्यादौ शशीयत्वाभावस्य साध्यवत्ताज्ञानविरोधित्वं तन्निष्ठहेतुसामानाधिकरण्यस्य हेत्वाभासतावच्छेदकत्वविरहादेव नातिव्याप्तिरिति भाव इति जगदीशः । अत्र प्रकृतव्याप्तिग्रहविरोधितावच्छेदकत्वमेवाभासतावच्छेदकत्वम् न तु समूहालम्बनानुमितिविरोधित्वम् । तेन धूमासमानाधिकरणकाञ्चनमयत्वाभावविशिष्टपर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ साध्यतावच्छेदकांशे प्रकृतसाध्यवत्ताज्ञानविरोधिकाञ्चनमयत्वाभावे धूमसामानाधिकरण्यस्याश्रयासिद्धित्वेन हेत्वाभासतावच्छेदकत्वेऽपि नातिव्याप्तिः तस्य प्रकृतहेतुसाध्यव्याप्तिज्ञानाविरोधित्वादिति ध्येयम् ॥

नन्वेवमपि पर्वतः काञ्चनमयपर्वतवान् पर्वतत्वादित्यादौ साध्यतावच्छेदकांशे साध्यवत्ताज्ञानविरोधिनि काञ्चनमयत्वाभावे पर्वतत्वसामानाधिकरण्यस्य साध्याप्रसिद्धित्वेन व्याप्तिज्ञानाविरोधित्वात्तत्रातिव्याप्तिरत आह विरोधित्वमिति । विशिष्टसाध्यसाधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयतया यत् साध्यवत्ताग्रहविरोधिनि हेत्वसामानाधिकरण्यग्रहविरोधित्वं तदेव वाच्यम् इति भाव इति जगदीशः । अत्र गगनवान् गगनत्वादित्यादौ गगनत्वसमानाधिकरणवृत्तित्वे भट्टाचार्यपत्रिकोक्तादिशाऽतिव्याप्तिवारणाय साध्यवत्त्वपर्य्यन्तनिवेशः । धूमवान् वह्न्यसमानाधिकरणमाभावव्याप्यकालीनवह्नेरित्यादौ वह्निसमानाधिकरणधू

माभावव्याप्यात्मकसाधनाप्रसिद्धावतिव्याप्तिवारणाय साधनवत्त्वनिवेशः । इदञ्च साध्यवत्त्वज्ञानविरोधिधर्म्मिकहेत्वसामानाधिकरण्यग्रहत्वव्यापकप्रतिबध्यत्वनिवेशाभिप्रायेण । स्वरूपसम्बन्धात्मकावच्छेदकत्वनिवेशे तु साधनाप्रसिद्धावतिव्याप्तिशङ्कैव नास्तीति भट्टाचार्य्येणवोक्तमिति ध्येयम् । अत्रेदमवधेयम् । साधनग्रहाविरोधित्वनिवेशेनैव साधनाप्रसिद्धिवारणसम्भवात् साधनवत्त्वपर्य्यन्तनिवेशो व्यर्थ इति चेत् । अत्र केचित् आकाशाभाववान् आकाशाभावाभावादित्यादौ हेतुनिष्ठावृत्तित्ववारणाय साधनवत्त्वपर्य्यन्तनिवेश इत्याहुस्तच्चिन्त्यम् ॥ २ ॥

अथ व्याप्तिग्रहविरोधित्वमित्यत्र व्याप्तेरननुगमः । अनुमितिजनकत्वेन व्याप्तिज्ञानानुगमे चोक्तपक्षाप्रसिद्धावतिव्याप्तिरिति चेन्न पक्षतावच्छेदकविशिष्टपक्षविषयतानिरूपितहेतुप्रकारत्वाघटकानुमितिजनकतावच्छेदकविषयतात्वेन व्याप्तिविषयतानामनुगमात् । प्रातिस्विकरूपेण वोपादाय समूहालम्बनव्याप्तिज्ञानाविरोधित्वमेव निवेशनीयमिति नाननुगमशङ्कापीति ॥ ३ ॥

अथ व्याप्तिग्रहविरोधित्वनिवेशे साध्यवत्ताज्ञानविरोधिनीत्यादिसत्यन्तदलनिवेशो व्यर्थ इति । ज्ञेयत्वसमानाधिकरणवाच्यत्ववान् ज्ञेयत्वादित्यादौ अभावाप्रतियोगिसाध्यात्मकानुपसंहारित्वस्य च तद्दलनिवेशेपि वारणायोगात् प्रकारान्तरेणैव वारणीयत्वादिति चेन्न धूमवान् वह्नेरित्यादौ धूमाभाववदवृत्तित्वव्यापकवह्निसमानाधिकरणतद्वह्निभेदाभाववद्वह्नयादावतिव्याप्तिवारणायैतद्दलसार्थक्यात् । न च तद्दलनिवेशेपि वाच्यत्ववत्त्ववान् वाच्यत्वादित्यादौ वाच्यत्वत्वाभाववदवृत्तित्वव्यापकवाच्यत्वसमानाधिकरणवाच्यत्वत्वाभावाभाववद्वाच्यत्वादावतिव्याप्तिर्दुर्वारैवेति वाच्यम् वाच्यत्वसमानाधिकरणवाच्यत्वत्वाभावरूपविशिष्टान्तरघटितत्वादेवोक्तातिव्याप्त्यनवकाशादिति ध्येयम् । यत्तु विरोधवारणाय तदुपादानमिति । तत्तुच्छम् । व्याप्तिग्रहाविरोधित्वमित्यत्र व्याप्तिशरीरे प्रयोजनविरहेण सामानाधिकरण्यस्यानिवेशाद्विरोधानिव्याप्तेरेवासम्भवात् । यद्यपि साध्यवत्ताज्ञानं प्रति विरोधितामात्रनिवेशे समूहालम्बनसाध्यवत्ताज्ञानविरोधित्वस्य तद्वह्निभेदादावपि सत्त्वेन तद्दलनिवेशेप्युक्तातिव्याप्तितादवस्थ्यम् । किञ्चिद्धर्म्मिकसाध्यवत्त्वग्रहत्वव्यापकप्र-

तिबध्यतानिवेशे च एतल्लक्षणानुरोधेनाभासविरोधः पूर्वलक्षणे साध्यवत्ताज्ञानत्वव्यापकप्रतिबध्यतानिवेशासम्भवात् । प्रतिबध्यतायां साध्यवत्ताग्रहत्वव्यापकत्वनिवेशेनैव शशशृङ्गवान् शृङ्गादित्यत्र शशीयत्वाभावादेर्वारणसम्भवात् । तथापि किञ्चिद्धर्म्मिकसाध्यवत्ताज्ञानत्वाव्यापकीभूतविषयिताशून्यसाध्यवत्ताज्ञानं प्रति विरोधितानिवेशान्न समूहालम्बनमादायातिप्रसङ्गः । पूर्वलक्षणे प्रतिबध्यतायां साध्यवत्ताग्रहत्वव्यापकत्वनिवेशेपि वह्निमान् वह्नित्वादित्यादौ साध्यवत्ताज्ञानविरोधि यद् ह्रदावृत्तित्वं तत्र हेत्वसमानाधिकरणग्रहाविरोधिह्रदावृत्तित्वेऽतिव्याप्तिरेव दोष इति । अत्र च हेत्वाभासत्वावच्छेदकत्वदलेनैव तद्वारणसम्भव इति ध्येयम् ॥ ४ ॥

अथैतादृशकल्पे भेदाभावतद्वह्निमान् गगनाभावादित्यादौ भेदावच्छेदेन गगनाभाववत्त्वेऽतिव्याप्तिस्तस्य साध्यवत्ताज्ञानविरोधिनि भेदे हेत्वसामानाधिकरण्यग्रहविरोधित्वात् । साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानविरोधित्वेन हेत्वाभासतावच्छेदकत्वाच्च इति । न च साध्यवत्ताज्ञानप्रतिबन्धकतायां प्रतियोगित्वसंसर्गावच्छिन्नप्रकारतानतिरिक्तवृत्तित्वनिवेशान्नोक्त दोष इति वाच्यम् तावतापि भेदाभाववद्घटाभावकालीनवह्निमान् गगनाभावादित्यादौ तादृशेऽतिव्याप्तेर्दुर्व्वारत्वात् । न च प्रतियोगित्वसंसर्गावच्छिन्नप्रकारतायां स्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतप्रकारतानिरूपितविशेष्यतावच्छेदकताभिन्नत्वं निवेशनीयमिति वाच्यम् तथा सति वह्न्यभावसाध्यकधूमहेतुकस्थले वह्निमद्वृत्तिधूमात्मकसाधारण्याव्याप्तेः । प्रतियोगित्वसम्बन्धावच्छिन्नतादृशप्रकारतानतिरिक्तवृत्तिवह्निमत्ताग्रहत्वावच्छिन्ननिरूपितप्रतिबन्धकताकवह्निमद्भेदे हेत्वसामानाधिकरण्यग्रहविरोधिनि भेदावच्छेदेन गगनाभाववत्त्वेऽतिव्याप्तितादवस्थ्यापत्तेश्च । एतेन साध्यवत्ताज्ञाननिष्ठप्रतिबध्यतायां साध्यग्रहत्वाव्यापकत्वनिवेशेनैव उक्तातिव्याप्तिवारणसम्भव इत्यादि प्रत्युक्तम् । उक्तरीत्या वह्निमत्ताग्रहत्वावच्छिन्ननिरूपितप्रतिबन्धकतामादायोक्तातिव्याप्तितादवस्थ्यादिति चेदगत्या तत्तत्प्रतिबन्धकताभेदं निवेश्यैवोक्तातिव्याप्तिर्वारणीयेति ध्येयम् ॥ ५ ॥

स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशाल्यनुमितिनिष्ठजन्यतानिरूपितजनकतानवच्छेदक-

त्वमित्युक्तम् भट्टाचार्येण । अथात्र स्वनिरूपितप्रतिबध्यताशाल्यनुमितिनिष्ठजन्यतानिरूपितजनकतानवच्छेदकत्वनिवेशेनैव सामञ्जस्ये गुरुतरनिवेशो व्यर्थ इति चेदत्राहुः । स्वनिरूपितप्रतिबध्यताशाल्यनुमितिप्रवृत्तिदानिवेशे वह्न्यभावाभाववद्वह्न्यभावव्याप्याभाववत्कालीनह्रदो वह्न्यभावव्याप्याभाववानित्यत्र वह्न्यभावव्याप्यवद्ह्रदात्मकबाधेऽव्याप्तिः । तथाहि स्वनुक्तबाधप्रतिबन्धकत्वम् । तन्निरूपितप्रतिबध्यताशालिनी या वह्न्यभावाभाववद्वह्न्यभावव्याप्याभाववत्कालीनह्रदो वह्न्यभावव्याप्याभाववानित्याकारकानुमितिस्तद्वृत्तिर्या वह्न्यभावाभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्न्यभाववानिति—ज्ञानीयविषयता तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्योक्तबाधे सत्त्वात् । वह्न्यभाववत्ताबुद्धिं प्रति वह्न्यभावव्याप्याभावावच्छेदेन वह्न्यभावाभाववत्ताज्ञानकालीनवह्न्यभाववत्ताज्ञानस्य प्रतिबन्धकतया वह्न्यभावाभाववद्वह्न्यभावव्याप्याभाववत्कालीनह्रदो वह्न्यभावव्याप्याभाववान् वह्न्यभाववांश्च इत्याकारकैकज्ञानासम्भवात् । स्वमते च वह्न्यभावाभाववद्वह्न्यभावव्याप्याभाववत्कालीनह्रदो वह्न्यभाववानित्यनुमितौ स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभावादेव नाव्याप्तिः । अथ तन्निवेशेपि वह्निव्याप्याभावाभाववद्वह्निमत्कालीनपर्वतो वह्निव्याप्याभाववानित्यादौ वह्निव्याप्यवत्तादृशपर्वतात्मकबाधेऽव्याप्तिर्दुर्वारैव । तथाहि स्वं यदुक्तबाधप्रतिबन्धकत्वं तन्निरूपितप्रतिबध्यतावच्छेदकं यत्तादृशपर्वतधर्मिकवह्निव्याप्याभावप्रकारकबुद्धित्वं तदवच्छिन्नप्रतिबध्यतानिरूपिता या वह्न्यवच्छेदेन वह्निव्याप्याभावाभाववत्तानिश्चयविशिष्टवह्निमत्त्वनिश्चयत्वावच्छिन्नप्रतिबन्धकता तच्छालिनी या वह्निव्याप्याभाववत्वह्निमत्कालीनपर्वतो वह्निमानित्याकारकानुमितिस्तन्निष्ठजन्यतानिरूपितजनकतानवच्छेदकत्वस्योक्तबाधे सत्त्वादिति । न च स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशान्नोक्तदोष इति वाच्यम् तथा सति गगनाभाववदभाववत्कालीनघटो गगनवानित्यादौ गगनाभाववदभाववत्कालीनगगनाभाववद्घटात्मकबाधेऽव्याप्तेः । तत्र स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्र-

तिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाप्रसिद्धेः । उक्तस्थले विशिष्टविषयत्वेन प्रतिबन्धकतावच्छेदकत्वे ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाकलनात् । प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्य प्रतीकारादिति चेत् । अत्रोच्यते । स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमनिवेश्य स्वनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यताशाल्यनुमितिनिष्ठजन्यतानिरूपितजनकतानिवेशान्नोक्तदोषावकाशः । स्वनिरूपितप्रतिबन्धकतावच्छेदकीभूतवह्निव्याप्याभाववत्ताबुद्धित्वावच्छिन्नं प्रति वह्निव्याप्याभावाभाववत्कालीनपर्वतो वह्निमानित्याकारकज्ञानस्य प्रतिबन्धकत्वेऽपि तादृशप्रतिबध्यत्वाभावान्नोक्त दोष इति सुधीभिर्भाव्यम् ॥ ० ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशप्रणीता साधारण-
जागदीशीपत्रिका समाप्ता ॥



अथ काळीशङ्करसिद्धान्तवागीशविरचितं

# सत्प्रतिपक्षजागदीशीक्रोडपत्रम् ।



प्रकृतपक्षकप्रकृतसाध्यकग्रहत्वाव्यापकविषयताशून्यग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती प्रकृतपक्षकप्रकृतसाध्यवत्ताग्रहत्वाव्यापकविषयिताशून्यग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूततादृशपक्षसाध्यग्रहप्रतिबन्धकतानवच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यादृशविशिष्टनिरूपितविषयिता तादृशविशिष्टवत्त्वमिति समुदायार्थः ।

अथ ज्ञानभेदेन विषयिताया भेदात्तादृशग्रहत्वाव्यापकविषयिताशून्यग्रहाप्रसिद्ध्याऽसम्भवापत्तिः । न च समानाकारकज्ञानविषयताया ऐक्यान्नासम्भव इति वाच्यम् तथापि पक्षधर्म्मिकसाध्यवत्ताग्रहत्वस्य केवलपक्षधर्म्मिककेवलसाध्यवत्ताज्ञानासमानाकारकज्ञानसाधारणतयाऽसम्भवतादवस्थ्यात् । न च केवलपक्षधर्म्मिककेवलसाध्यवत्ताग्रहत्वाव्यापकत्वमेव निवेश्यमिति नासम्भव इति वाच्यम् तथापि निर्वह्निह्रदो वह्निमानित्यादेरसङ्ग्रहेणाव्याप्तिरिति चेन्न यद्धर्म्मावच्छिन्नविशेष्यतानिरूपितयत्सम्बन्धावच्छिन्नप्रकारतात्वं तादृशग्रहत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्धर्म्मावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतद्धर्म्मावच्छिन्नप्रकारताशून्यत्वस्यैव विवक्षितत्वात् । कालिकतया वह्न्यभावव्याप्याभावविशिष्टह्रदकालीनवह्नेः साध्यत्वे ह्रदस्य पक्षत्वे वह्न्यभावव्याप्यव्याप्यविशिष्टह्रदरूपसत्प्रतिपक्षोन्नायकाविशेषणतया तादृशाभाववत्पर्वतकालीनवह्निसाध्यकह्रदपक्षकसत्प्रतिपक्षोन्नायकस्य घटाभावव्याप्यव्याप्याभाववद्ह्रदकालीनवह्निसाध्यकसत्प्रतिपक्षोन्नायकस्य च वारणाय सत्यन्तदलघटकतादृशाभावप्रतियो-

गितावच्छेदककोटौ क्रमेण प्रकारतायां यत्सम्बन्धावच्छिन्नविशेष्यतानिरूपितत्वयद्धर्म्मावच्छिन्नानां निवेशः । कालिकतया वह्न्यभाववत्पर्व्वतकालीनवह्निव्याप्याभावसाध्यकपर्व्वतपक्षकस्थलीयवह्निव्याप्यवत्पर्व्वतरूपबाधस्य विशेषणतया वह्न्यभाववद्ह्रदकालीनवह्निव्याप्याभावसाध्यकपर्व्वतपक्षकतादृशबाधस्य घटाभाववत्पर्व्वतकालीनवह्निव्याप्याभावसाध्यकपर्व्वतपक्षकतादृशबाधस्य च वारणाय विशेष्यदलघटकतादृशाभावप्रतियोगितावच्छेदककोटौ प्रकारतायां यत्सम्बन्धावच्छिन्नत्वयद्धर्म्मावच्छिन्नविशेष्यतानिरूपितत्वयद्धर्म्मावच्छिन्नत्वानां निवेशः । सत्प्रतिपक्षोन्नायकवारणाय सत्यन्तम् । आश्रयासिद्धिसाध्याप्रसिद्धिवारणाय अविरोध्यन्तम् । तच्च उन्नेये उन्नायके च विशेषणम् । तत्र वह्निमत्पर्व्वतपक्षकवह्न्यभावव्याप्यव्याप्याभावसाध्यकबाधस्य पर्वतपक्षकवह्निमत्पर्व्वतकालीनवह्न्यभावव्याप्यव्याप्याभावसाध्यकबाधस्य च वारणाय उन्नेयेऽविरोध्यन्तम् वह्न्यभावव्याप्यव्याप्याभाववत्पर्व्वतपक्षकवह्निसाध्यकाश्रयासिद्ध्यात्मकसत्प्रतिपक्षोन्नायकस्य पर्व्वतपक्षकवह्न्यभावव्याप्यव्याप्याभाववत्पर्व्वतकालीनवह्निसाध्यकतादृशसत्प्रतिपक्षोन्नायकस्य च वारणायोन्नायकेऽविरोध्यन्तम् । पर्व्वतपक्षकवह्निव्याप्याभावसाध्यकबाधस्य वारणाय विशेष्यदलम् । अथ विशेष्यदले तादृशग्रहविरोधित्वं तादृशग्रहनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयिताकत्वरूपं वक्तव्यम् । एवञ्च सत्प्रतिपक्षोन्नायकेऽतिव्याप्त्यसम्भवेन तद्वारकसत्यन्तदलं व्यर्थम् । न च तादृशविरोधित्वनिवेशे वह्निव्याप्यसाध्यकह्रदपक्षस्थले वह्न्यभावव्याप्यवद्ह्रदादावतिव्याप्तिस्तादृशसाध्यवत्ताग्रहप्रतिबध्यतावच्छेदकवह्न्यभाववद्ह्रदादिविषयित्वावच्छिन्नानुमितिजनकतावच्छेदकविषयिताकत्वादिति तद्वारणाय सत्यन्तदलसार्थक्यमिति वाच्यम् विशेष्यदलघटकतादृशग्रहप्रतिबध्यतावच्छेदकविषयितायां तादृशग्रहप्रतिबन्धकतावच्छेदकत्वनिवेशादेव तद्दोषवारणसम्भवे तथापि वैयर्थ्यापातादिति चेन्न सत्यन्तदलानुक्तौ वह्निवह्न्यभावव्याप्याभावव्याप्योभयवान् ह्रद इत्यादौ वह्न्यभावव्याप्यवद्ह्रदरूपसत्प्रतिपक्षोन्नायकातिव्याप्तेः । न च सत्यन्तदलेऽपि तादृशग्रहनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयिता-

कत्वरूपं तादृशविरोधित्वं कथं न निवेशनीयमिति वाच्यम् असम्भवापत्तेः सत्प्रतिपक्षज्ञानस्य साध्यवत्ताग्रहाप्रतिबध्यत्वात् ॥ १ ॥

अथ सत्यन्तदलानिवेशेपि विशेष्यदले ग्रहनिष्ठप्रतिबन्धकताघटितं विरोधित्वम् । न चोन्नायकेऽविरोध्यन्तविशेषणं व्यर्थमिति वाच्यम् वह्न्यभावव्याप्याभाववान् ह्रदो वह्निव्याप्यवानित्यादौ वह्न्यभावव्याप्यवद्ह्रदादिरूपाश्रयासिद्ध्याद्यतिव्याप्तिवारणाय तत्सार्थक्यसम्भवात् । न च वह्निव्याप्याभावसाध्यकबाधस्य तद्दलवारणीयस्य वारणासम्भवः । वह्निव्याप्याभावनिश्चयस्यापि वह्निमत्ताज्ञानं प्रत्यवच्छेदकधर्म्मदर्शनाविधया प्रतिबन्धकत्वादिति वाच्यम् । प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेनैव तद्वारणसम्भवात् । न च तथापि गौरवमिति वाच्यम् । तादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशेपि तादृशप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्यावश्यकत्वादन्यथा वह्निमत्तानिश्चयस्याप्यवच्छेदकधर्म्मविधया साध्यवत्ताज्ञानप्रतिबन्धकत्वात् तद्दोषवारणासम्भवादिति चेन्न वह्निव्याप्यवह्न्यभावव्याप्योभयवान् ह्रद इत्यादौ वह्न्यभावव्याप्यवद्ह्रदरूपबाधेतिव्याप्त्यापत्तेस्तादृशविरोधी वह्न्यभाववद्ह्रदादिस्तदुन्नायकत्वात् सत्यन्तदलसत्त्वाच्च । ननूक्तेयेऽविरोध्यन्तनिवेशे वह्निमान् ह्रदो वह्न्यभावव्याप्याभाववानित्यादौ वह्निमान् काञ्चनमयह्रदो वह्न्यभावव्याप्याभावकाञ्चनमयत्वाभावव्याप्यव्याप्याभावोभयवानित्यादौ अविरोध्यन्तस्यानिवेशे काञ्चनमयत्वाभावव्याप्यव्याप्यवद्ह्रदरूपबाधेतिव्याप्त्यापत्तेस्तन्निवेशे च सत्प्रतिपक्षाव्याप्तेः । न च तत्र वरं ह्रदधर्म्मिककाञ्चनमयत्वग्रहाविरोधित्वमेव निवेशनीयम् तावतैव न बाधेतिव्याप्तिः सत्प्रतिपक्षसङ्ग्रहश्च इति वाच्यम् । यत्र एकत्र द्वयमिति रीत्या वह्निकाञ्चनमयत्वोभयविशिष्टह्रदधर्म्मिकतादृशोभयाभावव्याप्यव्याप्याभाववह्न्यभावव्याप्याभावोभयसाध्यकस्थले विशिष्टपक्षग्रहाविरोधित्वानिवेशस्यावश्यकत्वात्तदनिवेशे तादृशोभयाभावव्याप्यव्याप्यवद्ह्रदरूपबाधातिव्याप्तिस्तन्निवेशे च सत्प्रतिपक्षाव्याप्तेस्तद्वारणीयस्य तत्स्थलीयबाधस्य वारणासम्भवेन च विशिष्टपक्षग्रहनिष्ठप्रतिबन्धकताघटितप्रतिबध्यतानवच्छेदकत्वरूपतादृशाविरोधित्वस्य निवेशासम्भवादिति । मैवम् । उक्तेयेऽविरोध्यन्तनिवेशनेन विशेष्यदलघटकप्रतिबध्यतायां

विशिष्टपक्षसाध्यग्रहत्वाव्यापकत्वस्य तादृशग्रहत्वाव्यापकविषयताशून्यज्ञानावृत्तित्वस्य वा निवेशो तात्पर्य्यावधारणात् । एवमुन्नायकेऽविरोध्यन्तेन सत्यन्तदलघटकप्रतिबध्यतायां तादृशग्रहत्वाव्यापकत्वस्य तादृशग्रहत्वाव्यापकविषयताशून्यज्ञानावृत्तित्वस्य वा निवेशो विवक्षितः । एवञ्च वह्न्यभावव्याप्याभाववान् ह्रदो वह्निमानित्यादौ न सत्प्रतिपक्षसङ्करः । न च ग्रन्थकृता तस्याश्रयासिद्धित्वेनालक्ष्यत्वमङ्गीकृतं न सङ्गच्छत इति वाच्यम् अलक्ष्यत्वेपि क्षत्यभावादिति [illegible] तस्य लक्ष्यत्वाङ्गीकारात् । वह्निमान् ह्रदो वह्निमानित्यादावेव सत्प्रतिपक्षस्याश्रयासिद्धित्वेनालक्ष्यत्वाङ्गीकाराच्च ॥ २ ॥

अथ ह्रदो वह्निवह्न्यभावव्याप्यव्याप्याभावोभयवानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ह्रदरूपबाधात्मकसत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः वह्निमत्ताग्रहविरोधी यो वह्न्यभावव्याप्यवद्ह्रदादिस्तदुन्नायकत्वात् बाधत्वेन सत्यन्तदलघटकत्वादिति चेन्न सत्यन्तदलघटकविशेष्यदलघटकप्रतिबध्यतयोरेकधर्म्मावच्छिन्नत्वनिवेशेनैव तद्वारणात् । तथा च पक्षधर्म्मिकसाध्यवत्ताग्रहत्वाव्यापकविषयिताशून्यग्रहनिष्ठतादृशपक्षसाध्यग्रहावृत्तिप्रतिबध्यतावैशिष्ट्यं यादृशविशिष्टनिरूपितविषयित्वं तादृशत्वमेव समुदायार्थनिष्कर्षः । वैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकत्व—स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वोभयसम्बन्धेन ग्राह्यम् । न चोन्नायकेऽविरोध्यन्तविशेषणस्य वैयर्थ्यमिति । तन्निवेशेनैव तत्र तादृशार्थलाभात् ।

केचित्तु सत्यन्तस्य तादृशग्रहविरोधिरूपोन्नायकत्वे सतीत्यर्थः । निरुक्तस्थले सत्प्रतिपक्षोन्नायकस्य वह्निमत्ताग्रहविरोधिवह्न्यभाववद्ह्रदोन्नायकवह्न्यभावव्याप्यवद्ह्रदोन्नायकत्वादेव तदुन्नायकत्वाविरहान्नातिव्याप्तिः । न च तत्र वह्न्यभावव्याप्यवह्न्यभावव्याप्यव्याप्योभयवानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ह्रदरूपसत्प्रतिपक्षेऽव्याप्तिः । वह्निमत्ताविरोधी यो वह्न्यभाववद्ह्रदादिस्तदुन्नायकोन्नायकत्वेन तदुन्नायकत्वाविरहादिति वाच्यम् । सत्यन्तस्यैतादृशग्रहविरोधिन्यश्च तादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वे

सति तादृशग्रहनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदिका या विषयिता तादृशरूपकत्वस्य विवक्षणीयत्वादिति । न च तथापि वह्निमान् ह्रदो वह्न्यभावव्याप्याभाववानित्यादौ सत्प्रतिपक्षे वह्न्यभावव्याप्यव्याप्यवद्ह्रदादिरूपेऽव्याप्तिस्तद्बोधे वह्न्यभाववद्ह्रदांशोन्नायकोन्नायकत्वस्यैव सत्त्वादिति वाच्यम् तादृशविरोधिताघटकप्रतिबध्यतायां पक्षसाध्यग्रहत्वाव्यापकत्वस्य निवेशात् । न च तथापि वह्निवह्न्यभावव्याप्याभाववव्याप्यवह्न्यभावव्याप्यव्याप्याभावोभयवानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ह्रदादिरूपसत्प्रतिपक्षेऽव्याप्तिः । वह्न्यभावव्याप्यव्याप्यवद्ह्रदादिविषयितायाः वह्निमत्ताज्ञानप्रतिबन्धकतावच्छेदकतया वह्न्यभावव्याप्यव्याप्यवत्ताज्ञानप्रतिबध्यतावच्छेदकतया तादृशग्रहविरोधिरूपोन्नायकोन्नायकत्वस्यैव सत्त्वादिति वाच्यम् विषयितायां तादृशग्रहनिष्ठप्रतिबध्यतावैशिष्ट्यनिवेशात् । वैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकत्व–स्वावच्छेदकावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन ग्राह्यमिति न कोपि दोषः । अथ वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ह्रदादिरूपसत्प्रतिपक्षेऽव्याप्तिरिति चेन्न सत्यन्तस्य तादृशप्रतिबन्धकतानवच्छेदकानवच्छिन्नत्वरूपस्य विशेष्यदलघटकजनकतायां विशेषणत्वादेव तद्वारणसम्भवात् । तज्ज्ञानजनकतायां तादृशप्रतिबन्धकतानवच्छेदकीभूतवह्न्यभावव्याप्यव्याप्यत्वादिविषयित्वावच्छिन्नत्वस्यैव सत्त्वादिति वदन्ति ॥ ३ ॥

अथ वह्न्यभाववह्न्यभाववत्वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवत्तावच्छेदेन वन्ह्यभावस्य पक्षतावच्छेदकघटत्वम् । तत्र वह्न्यभावव्याप्यव्याप्यवह्न्यभाववत्वह्न्यभावव्याप्यवत्कालीनह्रदात्मकसत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः । सत्प्रतिपक्षोन्नायकतया विशेष्यदलसत्त्वात्तज्ज्ञानस्यावच्छेदकधर्मदर्शनविधया पक्षधर्मिकसाध्यवत्ताधीप्रतिबन्धकतया सत्यन्तदलसत्त्वात् । न च ह्रदो वह्निमान् धूमादित्यादौ वन्ह्यभावव्याप्यवत्कालीनवन्ह्यभावव्याप्यव्याप्यवद्ह्रदादिरूपसत्प्रतिपक्षोन्नायकेऽवच्छेदकधर्मदर्शनविधया प्रतिबन्धकतामादायातिव्याप्तिवारणाय सत्यन्तघटकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमवश्यं निवेशनीयम् तथा च नोक्तातिव्याप्तिसम्भव इति वाच्यम् ह्रदधर्मिकवह्निमत्ताग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायां ज्ञानवै-

शिष्ट्यानवच्छिन्नत्वस्यापि सत्त्वेनोक्तदोषवारणसम्भवादिति चेन्न वह्न्यभावव्याप्यव्याप्यावच्छेदेन वह्न्यभावस्य धर्म्मितावच्छेदकघटकता यत्र च वन्ह्यभावव्याप्यव्याप्यसामानाधिकरण्येन वह्न्यभावस्य धर्म्मितावच्छेदकघटकता तत्स्थलद्वयसाधारणैकरूपेण प्रतिबध्यप्रतिबन्धकभावानुरोधेनैव विशेषणतया वह्न्यभावद्वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदधर्म्मिकवह्निमत्ताग्रहस्य प्रति वह्न्यभावव्याप्यावच्छेदेन वह्न्यभावप्रकारकनिश्चयाविशिष्टतादृशह्रदधर्म्मिकवह्न्यभावव्याप्यव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहादेवातिव्याप्तिनिरासात् । वैशिष्ट्यान्तमनिवेश्य तादृशह्रदधर्म्मिकवह्न्यभावव्याप्यव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वे वह्न्यभावव्याप्यव्याप्यावच्छेदेन वह्न्यभावनिश्चयविरहदशायां वह्न्यभावव्याप्यव्याप्यसामानाधिकरण्येन वह्न्यभावावगाहिवह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदधर्म्मिकवह्न्यभावव्याप्यव्याप्यनिश्चयसत्त्वे तादृशह्रदधर्म्मिकवह्निप्रकारकबुद्ध्यानुदयप्रसङ्गः स्यादतो वैशिष्ट्यान्तं निश्चयविशेषणम् । तथा च शुद्धविशेषणतया धर्म्मितावच्छेदकव्यापकत्वविशिष्टविशेषणतासाधारणविशेषणतात्वावच्छिन्नसांसर्गिकविषयतानिरूपितवह्न्यभावविषयतानिरूपितवह्न्यभावव्याप्यव्याप्यत्वावच्छिन्नविषयतानिरूपितकालीनत्वविषयतानिरूपितह्रदत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नं प्रति वह्न्यभावव्याप्यव्याप्यावच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टतादृशह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावव्याप्यव्याप्यत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनैव प्रतिबन्धकत्वमुभयसाधारणं निर्वाच्यम् । न च घटाभावप्रतियोगिकाविशेषणतया वह्न्यभावावगाहितादृशह्रदधर्म्मिकवह्न्यभावव्याप्यव्याप्यावच्छेदेन वह्न्यभावनिश्चयदशायां वह्न्यभावव्याप्यव्याप्यव्यापकविशेषणतया वह्न्यभावावगाहितादृशह्रदधर्म्मिकवह्निज्ञानानुदयप्रसङ्ग इति वाच्यम् विशेषणतात्वावच्छिन्नसांसर्गिकविषयतेत्यत्र विशेषणतात्वावच्छिन्नत्वं विशेषणतात्वपर्य्याप्तावच्छेदकत्वम् तच्च विशेषणतात्वावच्छिन्नावच्छेदकत्वकत्वभिन्ना या धर्म्मितावच्छेदकताव्यापकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपकत्वमिति नोक्तातिप्रसङ्ग इति वदन्ति । तदसत् प्रतिबन्धकतायां

ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे प्रकृतसाधनसाध्यव्यापकीभूताभावप्रतियोगित्वाद्यनवगाही ग्राह्य इति दीधितिकृद्ग्रन्थविरोधापत्तिरित्यसाधारण्यज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतयाऽसाधारणस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताकत्वविरहेणातिव्याप्त्यप्रसक्त्या तद्ग्रन्थानुत्थानात् । वस्तुतस्तु पक्षसाध्यभेदेन लक्षणस्य भिन्नतया सत्यन्तघटकप्रतिबन्धकतायाम् अगत्या तादृशपक्षधर्म्मिकसाध्याभावव्याप्यव्याप्यवत्तानिश्चयत्वं निवेशनीयम् । ह्रदपक्षकवह्निसाध्यकस्थलेऽव्याप्तिवारणन्तु जनकतायां तादृशप्रतिबन्धकतानवच्छेदकावच्छिन्नत्वनिवेशादेवेति ग्रन्थाभिप्रायः ।

केचित्तु स्वावच्छेदकत्वस्वान्यज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताविशिष्टविषयतानिरूपकत्वमेव सत्यन्तार्थः । तादृशसत्प्रतिपक्षोन्नायकविषयितायां तादृशप्रतिबन्धकतावैशिष्ट्यविरहान्नातिव्याप्तिः ज्ञानवैशिष्ट्यावच्छिन्नत्वनिवेशात् ह्रदो वह्न्यभावव्याप्यव्याप्यवद्ह्रदकालीनघटोभयवान् इत्यादौ वह्न्यभावव्याप्यव्याप्यवद्ह्रदकालीनघटाभावव्याप्यवद्ह्रदादिरूपसत्प्रतिपक्षे नातिव्याप्तिः । प्रकृतसाधन इत्यादिग्रन्थस्तु असाधारण्यज्ञानप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमिति मते । अथवा यादृशविशिष्टविषयितायां स्वावच्छेदकत्वस्वान्यज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताविशिष्टान्यत्व निवेशनीयम् । असाधारण्यविषयितायां प्रतिबन्धकतावच्छेदकत्वविरहादेव तादृशप्रतिबन्धकताविशिष्टान्यत्वमिति तद्ग्रन्थाविरोधः । ह्रदपक्षकवह्निसाध्यकस्थलीयतादृशप्रतिपक्षोन्नायकस्य वारणन्तु जनकतायां प्रतिबन्धकतावच्छेदकावच्छिन्नत्वनिवेशादेव सम्भवतीत्याहुस्तच्चिन्त्यम् ।

परे तु यादृशविशिष्टविषयिताव्यापकताजनकतासामान्ये तादृशप्रतिबन्धकतावच्छेदकावच्छिन्नत्वं तादृशविशिष्टत्वमिति समुदायार्थः । तादृशजनकतासामान्यन्तर्गता ह्रदपक्षकवह्न्यभावव्याप्यसाध्यकानुमितित्वावच्छिन्नजन्यतानिरूपिता या ह्रदधर्म्मिकवह्न्यभावव्याप्यव्याप्यवत्तानिश्चयत्वावच्छिन्नजनकता तत्र तादृशप्रतिबन्ध-

कतावच्छेदकावच्छिन्नत्वविरहाञ्चाव्याप्तिरिति वदन्ति ।

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सत्प्रतिपक्ष-
जगदीशीक्रोडपत्रं समाप्तम् ॥

अथ कालीशङ्करसिद्धान्तवागीशविरचितं

# बाधजागदीशीक्रोडपत्रम्।



प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिविरोध्यनुमायकत्वे सति प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहविरोधित्वमिति शिरोमणिः। तत्र प्रथमसत्यन्तस्य पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वाव्यापकविषयिताशून्यग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्व यादृशविशिष्टविषयकत्वेन तादृशविशिष्टविषयकानुमितिनिष्ठजन्यतानिरूपितजनकत्वं यादृशविशिष्टविषयकत्वेन तादृशविशिष्टान्यत्वे सतीत्यर्थस्तेन निर्व्वह्निः पर्वतो वह्निमानित्यादौ पर्व्वतो वह्निमानित्यनाहार्य्यज्ञानमादाय वह्न्यभाववत्पर्व्वतरूपबाधे लक्षणसमन्वयः। असिद्धिवारणाय प्रकृतपदद्वयोपादानमिति जगदीशः। अथात्र निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ तादृशविषयताशून्यानाहार्य्यज्ञानाप्रसिद्ध्या तत्रत्यबाधाव्याप्तितादवस्थ्यम्। पर्वतो वह्निमानिति ज्ञाने तादृशविषयिताशून्यत्वविरहात्तदीयविषयतायाः प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहत्वाव्यापकत्वात् असमानप्रकारकज्ञानीयविषयतायाः भिन्नत्वात्। यदि च ज्ञानभेदेन विषयताभिन्नत्वं स्वीक्रियते तदा सर्व्वत्राप्रसिद्धिः। एवं विशिष्टवद्भेदमादाय सर्व्वस्या एव विषयताया अव्याप्यकतयाऽप्रसिद्धिरिति चेन्न तादृशग्रहनिष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणं यद्धर्म्मावच्छिन्नविशेष्यतानिरूपितयत्सम्बन्धावच्छिन्नयद्धर्म्मावच्छिन्नप्रकारत्वं तादृशप्रकारताशून्यत्वस्य तादृशविषयतापदेन विवक्षितत्वात्। वह्निमत्कालीनह्रदो वह्न्यभावव्याप्याभाववानित्यादौ वह्न्यभावव्याप्यवद्ध्रदादिरूपबाधाव्याप्तिवारणाय तादृशप्रकारतायां निरूपितत्वान्तम्। समवायसम्बन्धेन वह्निह्रदत्वयोः पक्षतावच्छेदकत्वं संयोगसम्बन्धा-

वच्छिन्नप्रतियोगिताकवह्न्यभावव्याप्याभावस्य साध्यत्वं तत्रत्यबाधेऽव्याप्तिवारणाय यत्सम्बन्धावच्छिन्नेति–प्रकारताविशेषणम्। संयोगेन जलवान् ह्रदो वह्न्यभावव्याप्यवानित्यादिस्थलीयबाधाव्याप्तिवारणाय यद्धर्म्मावच्छिन्नत्वं प्रकारताविशेषणम्।

अथ तथापि गुणो द्रव्यभेदव्याप्याभाववान् द्रव्यं गुणभेदव्याप्याभाववानित्यादौ गुणो द्रव्यं गुण इत्याकारकज्ञानमादाय द्रव्यभेदव्याप्यवद्गुणरूपबाधगुणभेदव्याप्यवद्द्रव्यरूपबाधादावव्याप्तिरिति चेन्न अव्यापकीभूतविषयिताशून्यत्वपदेन तादृशप्रकारताशून्यत्वस्यैव तादृशग्रहनिष्ठाभावप्रतियोगितावच्छेदकं यद्धर्म्मावच्छिन्नविशेष्यतानिरूपितयत्सम्बन्धावच्छिन्नयन्निष्ठनिरवच्छिन्नप्रकारतात्वं तादृशप्रकारताशून्यत्वस्यापि विवक्षितत्वात्। न च तथापि पर्व्वतो वह्न्यभावव्याप्याभाववानित्यादौ बाधाव्याप्तिस्तादृशग्रहप्रत्यवच्छेदकधर्म्मदर्शनविधया वह्न्यभाववत्पर्व्वतविषयकज्ञानस्यापि साध्यवत्ताबुद्धिप्रतिबन्धकत्वादिति वाच्यम् प्रतिबन्धकतावच्छेदकत्वस्यानुगमकत्वस्य लघटकस्यानतिरिक्तवृत्तित्वरूपत्वात्। न च वह्न्यभावव्याप्यवत्वह्न्यभाववत्कालीनवह्न्यभाववत्पर्व्वतो वह्न्यभावव्याप्याभाववानित्यादौ वह्न्यभावव्याप्यवत्तादृशपर्व्वतरूपबाधेऽतिव्याप्तिरतिदृढेति वाच्यम्। ज्ञानवैशिष्ट्यानवच्छिन्नत्वेन प्रतिबन्धकताया विवक्षितत्वात्॥ १॥

अथ तादृशविशिष्टविषयकानुमितिजनकत्वमित्यस्य कोऽर्थः। यदि तादृशविशिष्टविषयकानुमितिनिष्ठजन्यतानिरूपितजनकत्वम् तदा विशेषणज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकत्वमादाय सर्व्वत्रासम्भवः। अनुमितित्वावच्छिन्नजन्यतां निवेश्यासम्भववारणेऽपि ह्रदो वह्न्यभाववान् वह्न्यभावव्याप्यवानित्याकारकसमूहालम्बनानुमितिनिष्ठानुमितित्वावच्छिन्नजन्यतानिरूपितजनकत्वमादाय वह्न्यभावव्याप्यवद्ह्रदादावव्याप्तिः यदि तादृशविशिष्टविषयकानुमितित्वव्यापकत्वस्य विशिष्टविषयितानतिरिक्तवृत्तिकत्वस्य वा जनकताविशेषणत्वम् तदा तादृशजन्यताया अप्रसिद्ध्याऽसम्भवापत्तिः। यदि तादृशविशिष्टविषयकत्वनिष्ठावच्छेदकतानिरूपकत्वं जन्यताविशेषणम् तदा वह्निवह्न्यभाववद्ह्रदव्याप्याभाववानित्यादौ वह्न्यभाववद्ह्रदेऽव्याप्तिः तादृशप्रतिबन्धकतान-

तिरिक्तवृत्तिकवह्न्यभाववद्ध्रदविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वादिति चेन्न अनतिरिक्तवृत्तिरूपावच्छेदकत्वमनिवेश्य प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहत्वाव्यापकीभूतविषयताशून्यग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्ववद्विषयित्वावच्छिन्नजन्यतानिरूपितजनकतानतिरिक्तवृत्तियादृशविशिष्टविषयिता तादृशविशिष्टान्यत्वमित्यर्थकरणादुद्देश्यताविधेयतयोः प्रतिबन्धकतावच्छेदकविशेष्यताप्रकारताभ्यां भिन्नत्वे यद्रूपपर्य्याप्तावच्छेदकताकविशेष्यतानिरूपितयद्धर्म्मपर्य्याप्तावच्छेदकताकप्रकारत्वं तादृशप्रतिबन्धकतावच्छेदकं तद्रूपपर्य्याप्तावच्छेदकताक—उद्देश्यतानिरूपिततद्रूपपर्य्याप्तावच्छेदकताक—विधेयताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकत्वं तदनतिरिक्तवृत्तियादृशविशिष्टविषयित्वं तादृशविशिष्टान्यत्वमित्यर्थः । यद्वा विषयितानिष्ठतादृशप्रतिबन्धकतानवच्छेदको य उद्देश्यतात्वविधेयतात्वातिरिक्तो धर्म्मस्तदनवच्छिन्नविषयितानिष्ठावच्छेदकताकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतानतिरिक्तवृत्तितादृशविशिष्टान्यत्वमित्यर्थः। न च पर्व्वतो महानसीयवह्निमान् घटवान् पर्व्वतो वह्निमानित्यादौ महानसीयवह्न्यभावव्याप्यवत्पर्व्वतवह्न्यभावव्याप्यवत्घटवत्पर्व्वतादावतिव्याप्तिः । पक्षतावच्छेदकाश्रयनिष्ठावच्छेदकताकविशेष्यतानिरूपितसाध्यताश्रयनिष्ठावच्छेदकताकप्रकारताशालिग्रहत्वाव्यापकविषयिताशून्यं यत् पर्व्वतो वह्निमानिति ज्ञानं तद्विरोधी यः केवलवह्न्यभाववान् पर्व्वतस्तदनुमापकत्वात् विशेष्यदलवत्त्वाच्च महानसीयवह्निमानित्यादिज्ञानस्य तादृशग्रहत्वाव्यापकविषयितावत्त्वादिति वाच्यम् । पक्षतावच्छेदकतासाध्यतावच्छेदकतयोः पर्य्याप्तिघटिततादृशग्रहत्वाव्यापकत्वस्य निवेशनीयत्वात् । विशेष्यदलपरिष्कारस्तु तादृशरीत्या करणीयः ।

अत्रायं पूर्व्वपक्षः । ननु वह्निमज्जलह्रदो वह्न्यभावव्याप्यवान् पर्व्वतो वह्न्यभाववह्निव्याप्याभावोभयवान् ह्रदो वह्न्यभावव्याप्याभावाभाववह्निमानित्यादिस्थलीयबाधेऽव्याप्तिस्तादृशग्रहविरोधी यो वह्न्यभाववद्ध्रदादिस्तदनुमापकत्वादिति चेन्न विशेष्यदलघटकप्रतिबध्यतासत्त्वन्तदलघटकप्रतिबध्यतयोरेकरूपावच्छिन्नत्वनिवेशात् । न च काञ्चनमयह्रदः काञ्चनमयत्वासमानाधिकरणधर्म्माभाववानित्यत्र

बाधेऽव्याप्तिस्तादृशबाधस्य पक्षग्रहविरोधित्वादिति वाच्यम्। पक्ष साध्यग्रहत्वाव्यापकविषयिताशून्यज्ञानावृत्तित्वेन विशेष्यदलघटकी भूतप्रतिबध्यतानिवेशादुक्तदोषवारणात्। न चैकरूपावच्छिन्नप्रतिबध्यतानिवेशे साक्षात्प्रतिबन्धकतानुधावनं व्यर्थमिति वाच्यम्। साक्षात्प्रतिबन्धकत्वपदेन तादृशार्थलाभादिति ॥ ० ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं

बाधग्रन्थजागदीशीक्रोडपत्रं समाप्तम्।

समाप्तोऽयमनुमानजागदीशी—

क्रोडपत्रसङ्ग्रहः।

